# मनुस्मृतिः

### व्याख्यानवकोपेता

※

## अथ एकादशोऽध्यायः ११

———०———

**सान्तानिकं यक्ष्यमाणमध्वगं सार्ववेदसम् ।।**
**गुर्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः ।। १ ।।**
**नवैतान्स्नातकान्विद्याद्ब्राह्मणान्धर्मभिक्षुकान् ।।**
**निःस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः ।। २ ।।**

(१) **मेधातिथिः**। श्लोकद्वयेन च वाक्यार्थसमाप्तिः। अनेकविशेषणविशिष्टो दानार्थो विधीयते। **सान्तानिका**दिभ्यो धर्मार्थं भिक्ष्यमाणेभ्यो निःस्वेभ्यो विद्याविशेषेण दातव्यमिति। संप्रति संप्रदानविशेषणत्वे धर्मभिक्षुकशब्दस्याधिकारसंपादनमपि प्रतीयते। एवं नैवंविशिष्टायाश्चैव निमित्तमिति नैमित्तिको दानाधिकारश्चोच्यते। संतानं प्रजा-प्रयोजनमस्येति **सान्तानिको** विवाहार्थी भण्यते। तत्र हि धनमुपयुज्यते। भवति च पारंपर्येण संतानप्रयोजनः। धर्मग्रहणात् 'कामतस्तु प्रवृत्तानाम्' इति द्वितीयादि विवाह-प्रवृत्तौ न नियमतो देयमिति। एवं **यक्ष्यमाणो** नित्ययज्ञाग्निष्टोमाद्यर्थो वृत्तिवचनं यः करोति स वेदितव्यः। **अध्वगः** क्षीणपथ्योदनः। **सार्ववेदसो** विश्वजिति सर्वस्वं दक्षिणात्वेन दत्तवान्न तु प्रायश्चित्ताद्यर्थम्। **स्वाध्यायार्थी**। यद्यपि ब्रह्मचारिणोऽध्ययनं विहितं भिक्षाभोजनं च तथापि वस्त्रार्थोपयोगि धनं दातव्यम्। अथवा गृहीतवेदस्य तदर्थजिज्ञासा भैक्षभुजोऽपि। **उपतापी** रोगी। **स्नातकग्रहणं प्रशंसार्थम्**। **गुर्वर्थं** स्वाध्यायार्थत्वं प्रायः स्नातकविषये विद्यते। ब्रह्मचारिणो गुर्वर्थं कर्तव्यमिति विहितम्। **निःस्वेभ्यो** निर्धनेभ्यः। **विद्याविशेषतो** बहुविद्याय बहु स्वल्पविद्यायाल्पमिति। "ननु च सर्वमेवेदमप्रकृतं प्रक्रियते। एवं हि प्रतिज्ञातम्, 'अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभम्' इति"। नैष दोषः। आश्रम-धर्मत्वादस्य प्रकरणस्य। प्रायश्चित्तानामतुल्यरूपतया सहोपदेशस्तत्र प्रायश्चित्तनिमित्त-त्वादस्यार्थस्य प्रथममभिधानम्। **दानं देयमित्युक्तम्**। दानशब्दश्च कर्मसाधनः। किं तद्देयमित्यपेक्षायामुत्तरश्लोकः।। १–२ ।।

(२) **सर्वज्ञनारायणः**। प्रायश्चित्तं प्रक्रमते **सांतानिकमिति**। प्रायश्चित्तप्रक्रमेऽपि दानादेः प्रक्रमाभिधानं तद्रूपस्यापि प्रायश्चित्तस्य सद्भावात्तद्विशेषप्रतीत्यर्थम्। **सांतानिकं** संतानार्थं विवाहार्थमिच्छन्तं धनार्थमागतम्। **यक्ष्यमाणं** यागार्थिनम्। **अध्वगम**ध्वनि क्षीणवृत्तिम्। **सार्ववेदसं** तत्तत्क्रतुविशेषेषु दत्तसर्वधनं वेदो धनम्। **गुर्वर्थं** गुरुदक्षिणा-दानार्थिनम्। **स्वाध्यायार्थं** जपसिद्ध्यर्थं वृत्त्यर्थम्। **उपतापी** रोगी। **नवस्नातकान्** सतो धर्मभिक्षुकान् दातुर्धर्महेतुन् भिक्षमाणान्। **विद्याविशेषतो** विद्यानुरूपेण ।। १ ।। ।। २ ।।

(३) **कुल्लूकः।** नन्वतः परं वक्ष्यामि प्रायश्चित्तविधिं शुभमिति प्रायश्चित्तस्य वक्तव्यतया प्रतिज्ञातत्वात्सान्तानिकादिभ्यो देयमित्यादेः कः प्रस्ताव उच्यते दानेनाकार्यकारिण इति प्रागुक्तत्वाद्दानेन वधनिर्णेकं सर्पादीनामशक्नुवन्नित्यादेश्च वक्ष्यमाणत्वात्प्रकृष्टप्रायश्चित्तात्मकदानपात्रोपन्यासः प्रकृतोपयुक्त एव। वर्णाश्रमधर्मादिव्यतिरिक्तप्रायश्चित्तादिनैमित्तिकधर्मकथनार्थत्वाच्चाध्यायस्यान्यस्यापि नैमित्तिकधर्मस्यात्रोपन्यासो युक्तः सन्तानप्रयोजनत्वाद्विवाहस्य। **सान्तानिको** विवाहार्थी। **यक्ष्यमाणो**ऽवश्यकर्तव्यज्योतिष्टोमादियागं चिकीर्षुः। **अध्वगः** पान्थः। **सर्ववेदसः** कृतसर्वस्वदक्षिणविश्वजिद्यागः विद्यागुरोर्ग्रासाच्छादनाद्यर्थः प्रयोजनं यस्य स गुर्वर्थः एवं पितृमात्रर्थोऽपि **स्वाध्यायार्थी** स्वाध्यायाध्ययनकालीनाच्छादनाद्यर्थी ब्रह्मचारी **उपतापी** रोगी एतान्नवब्राह्मणान्धर्मभिक्षाशीलान्स्नातकाञ्जानीयात्। एतेभ्यो निर्धनेभ्यो गोहिरण्यादि दीयत इति दानं विद्याविशेषानुरूपेण दद्यात् ॥ १ ॥ २ ॥

(४) **राघवानन्दः।** ननु प्रायश्चित्तप्रतिज्ञायां दानविचारोऽकाण्डताण्डवित इति चेन्न यतः दानेनाकार्यकारिणः अन्नादेः भूणहामार्ष्टि तरति ब्रह्महत्यां योऽश्वमेधेन यजते दानेन वधनिर्णकमित्यादि वक्ष्यमाणवचनजातेन दानादेः प्रायश्चित्तान्तर्गतत्वेन तत्पात्राणि ज्ञापयन्नादौ दानमाह **सान्तानिकमिति** चतुर्भिः। **सान्तानिकं** प्रजार्थं विवाहोद्योगिनम्। **यक्ष्यमाणं** ज्योतिष्टोमादिकर्तारम्। **अध्वगं** तीर्थयात्रिणम्। **सर्ववेदसं** कृतसर्वस्वदक्षिणविश्वजिद्यागम्। **गुर्वर्थं** विद्यागुरोर्ग्रासाच्छादनादि प्रयोजनं तदर्थं समावर्तनकालदक्षिणार्थं वा **पितृमात्रर्थं** पितृमातृपोषणं प्रयोजनं यस्य तम्। **स्वाध्यायार्थी** तत्कालीनान्नाद्यर्थी **उपतापी** रोगी च तौ **स्नातकान्** स्नातको भविष्यद्दारः। **धर्मभिक्षुकान्** धर्मार्थमेव भिक्षयन्ति प्रतिगृह्णन्तीति सुस्थशरीरादेर्धर्महेतुत्वात्। दानं दीयते इति गोहिरण्यादि। विद्याविशेषतो विद्यानुसारेण विद्याश्च वेदादीनि ॥ १ ॥ २ ॥

(५) **नन्दनः।** एवमापद्धर्मा उक्ता इदानीमापन्नेषु भिक्षितैरप्रत्याख्येयान्पात्रविशेषान् श्लोकत्रयेणाऽऽह **सान्तानिकं यक्ष्यमाणमिति।** **सान्तानिकः** सन्तानप्रयोजनः विवाहार्थीति यावत्। **सार्ववेदसो** दत्तसर्वस्वः। अर्थिशब्दो गुर्वर्थादिभिः प्रत्येकमभिसम्बध्यते गुर्वर्थार्थी पितृमात्रर्थार्थी स्वाध्यायार्थी वेदपारायणार्थी। **उपतापी** रोगी **धर्मभिक्षुकान्** धर्मार्थं भिक्षमाणान् **एतेभ्यो** भिक्षमाणेभ्यो दानं **च** संतानार्थं विद्याविशेषतोऽपि तारतम्याद्भिक्षितैर्देयमन्यथा प्रत्यवाय इति। ॥ १ ॥

(६) **रामचन्द्रः।** द्वाभ्यामाह **"सान्तानिकमिति"।** नैमित्तिकधर्माः कथ्यन्ते। **सान्तानिकं** विवाहार्थिनम्। **यक्ष्यमाणं** यागार्थिनम्। **अध्वगं** अध्वनि क्षीणवृत्तिम्। सर्वस्वविश्वजिति सर्वस्वदातारम्। गुर्वर्थं पित्र्यर्थं स्वाध्यायार्थं विद्यार्थं, **उपतापी** रोगी। **विद्याविशेषतो** विद्यामानेन ॥ १ ॥ २ ॥

(७) **मणिरामः।** इदानीं प्रायश्चित्तस्य वक्ष्यमाणत्वात्प्रकृष्टप्रायश्चित्तार्थदानपात्रमुपन्यसति। **सांतानिकमिति।** **सांतानिको** विवाहार्थी। **यक्ष्यमाणः** ज्योतिष्टोमादियागं चिकीर्षुः। **अध्वगः** पांथः। **सार्ववेदसः** विश्वजित्कृतयागः। **गुर्वर्थः** विद्यागुरोः ग्रासाच्छाद-

नादि अर्थः प्रयोजनं यस्य स गुर्वर्थः। एवं पितृमातृत्वार्थावपि। **स्वाध्यायार्थी** स्वाध्याया-ध्ययनकालीनाच्छादनाद्यर्थी ब्रह्मचारी। **उपतापी** रोगी ॥ १ ॥

एतान् नवब्राह्मणान् धर्मभिक्षाशीलस्नातकान् **विद्यात्** जानीयात्। **एतेभ्यो निःस्वेभ्यो दानं विद्याविशेषतः** विद्यानुरूपेण देयम् ॥ २ ॥

**(८) गोविन्दराजः।** श्री गणेशाय नमः॥ यद्यपि धर्मं च वर्णानां प्रायश्चित्तविधिं तथेत्यनुक्रमण्यपेक्षयाऽतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभं इति प्रायश्चित्तप्रकरणमधुना वक्तव्यं तथाप्युच्चावचधर्मप्रकरणं तावदनन्तरमिदमेतदतिक्रमेण प्रायश्चित्तं यथा स्या-दित्येवमाह **सान्तानिकमिति। नवेति।** संतानप्रयोजनत्वात्सान्तानिको विवाहार्थी तथा 'नित्यं ज्योतिष्टोमादियागं कर्तुमिच्छन् तच्च निर्वतमानश्च क्षीणपाथेयः **सार्ववेदः** सर्ववेदकः सर्वस्वं येन विश्वजिति दत्तं गौतमीय एव दर्शनाद्विद्यागुरुपितृमात्रर्थं वेदग्रहणकाले चाच्छा-दनाद्यर्थं च भिक्षव **उपतापी** च रोगी चेत्येतावन्नवधर्मशास्त्रार्थानुवर्तित्वेन भिक्षमाणप्रवृत्तान् ब्राह्मणान् स्नातकान् जानीयादेतेभ्यश्च निर्धनेभ्यो विद्यानुरूपेण नियमतो दानं कर्तव्यम्। अतश्चाकरणादधर्मो द्रव्यविशेषेण चैतन्नियमसंपादनात्तद्द्रव्यफलमिति ॥ १ ॥ २ ॥

**(९) भारुचिः।** अत्र चोद्यतेः—यदुक्तमनन्तरमेव दशमाध्यायोपसंहारे 'अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभम्' इति, नन्वेतदपेक्षया प्रायश्चित्तप्रकरणमेवोपन्यसनीय-'मकुर्वन् विहितं कर्मे'त्यादि। इतरथाप्यप्रकृतोपन्यासः प्रकृतार्थव्यवधानं चायुक्त-मापद्यते। यतः स्नातकधर्मापिकत्वधर्मप्रकरणयोरेवैतत् सर्वमुपदेष्टव्यम्, नात्रेति। अत्रोच्यतेः—साहचर्यादेवैतयोर्यथोक्तप्रकरणद्वयेऽप्यवकाशमलभमानयोरिह–लेषु निर्देशो युक्तः, म भूदेतयोः परस्परसम्बन्धयोरन्यत्रप्रकरणेऽन्यस्य निर्देशेऽधिक्रियमाणे प्रकरणभेदा-दसामञ्जस्यमिति। निर्दिष्टारम्भप्रयोजनस्येदमधुना विवरणं श्लोकद्वयस्य। एकविद्यमान-द्रव्यश्च न याचेत, **'निःस्वेभ्यो देयमेतेभ्य'** इति वचनात् दानं चात्र चोद्यते, न तु याचना। निमित्तसन्नियोगेनार्थगृहीतत्वादशासिकाहव्या हि सा। तच्च दर्शयति **निःस्वेभ्यः** फलस्या-विशेष उपदेशतुल्यत्वादिति, उभयस्मादित्याह नियमाद्देयविशेषाच्च। यदि देयविशेषात् फल-विशेषो न स्यात्, न कश्चिद्दानविशेषे प्रयतेत शास्त्रव्यपेक्षया। अथवा नियमस्य दाना-श्रितस्य चोदितत्वात्, नियमाच्च धर्मो यथाशक्तिनियमसाधनत्यागेन च देयविशेषेऽवश्यम्भावि। एवं च न देयविशेषात् फलविशेषः प्रत्याख्यातुं शक्य उपदेशतुल्यत्वेऽपि। तथा चोक्तमृपात्रस्य हि विशेषेण श्रद्दधानतयैव च। अल्पं वा बहु वा प्रेत्य दानस्यावाप्यते फलमिति॥ १ ॥ २ ॥

**एतेभ्यो हि द्विजाग्र्येभ्यो देयमन्नं सदक्षिणम् ॥**
**इतरेभ्यो बहिर्वेदिकृतान्नं देयमुच्यते ॥ ३ ॥**

**(१) मेधातिथिः।** 'दक्षिणाशब्दो' यद्यपि कर्मकरसंयुक्ते संत्यागे वर्तते, तथापि गोभूमिहिरण्यादिभाजनादन्यद्देयं द्रव्यमुच्यते। तथा हि लौकिकी प्रसिद्धिरिति। **इतरेभ्य** एतद्व्यतिरिक्ता ये भिक्षुकास्तेभ्यः। **कृतान्नं** सिद्धमन्नं भोजनार्थं दातव्यम्। **बहिर्वेदि** यज्ञादन्यत्रातिथिभ्यो दानं गृहस्थधर्मेषु यदेतत्तदेवानूद्यते ॥ ३ ॥

(२) **सर्वज्ञनारायणः।** अन्नं सदक्षिणमन्नं दत्त्वा दक्षिणात्वेन धनं देयम्। बहिर्वेदि **इतरेभ्यः** एतद्बाह्येभ्यो **बहिर्वेदि** यज्ञाद्बहिः **कृतमन्नं** पक्वान्नमवश्यं देयम्। वेद्यां तु याचितं सर्वमेव देयमित्यर्थः॥ ३॥

(३) **कुल्लूकः।** **एतेभ्यो** नवभ्यो ब्राह्मणश्रेष्ठेभ्योऽन्तर्वेदि सदक्षिणमन्नं दातव्यम्। एतद्व्यतिरिक्तेभ्यः पुनः सिद्धान्नं बहिर्वेदि देयत्वेनोपदिश्यते धनदाने त्वनियमः॥ ३॥

(४) **राघवानन्दः।** दीक्षितो न ददातीत्यस्य वेदस्य प्रतिप्रसवार्थमाह **सदक्षिणमिति।** दाने दृष्टलोभाद्यसंभवे न स्मृतेः प्राबल्यादिति भावः। **कृतान्नं** सिद्धान्नं तच्च प्राणिमात्रे सर्वदा देयमित्याह बहिर्वेदीति। अन्नस्य क्षुधितः पात्रमिति स्मृतेः॥ ३॥

(५) **नन्दनः।** अपि **बहिर्वेदि** वेदेर्बहिरपि यज्ञादन्यत्रापि यावत्। दक्षिणां स्वर्णादिकसहितं देयमन्नं कृतमकृतं वा देयं **इतरेभ्यो** ब्राह्मणेभ्यो कृतान्नमेव देयम्। बहिर्वेदिकृतान्नविधानादन्तर्वेदितेभ्यो विकृतान्नमपि सूचितम्॥ ३॥

(६) **रामचन्द्रः।** **इतरेभ्यः** नवभ्यो भिक्षुकेभ्योऽन्ये ये तेभ्यः **बहिर्वेदि** यज्ञाद्बहिः॥ ३॥

(७) **मणिरामः।** **एतेभ्यो** नवद्विजाग्रेभ्यः ब्राह्मणेभ्यः सदक्षिणमन्नं अंतर्वेद्यां देयम्। **इतरेभ्यः** एतद्व्यतिरिक्तेभ्यः पुनः बहिर्वेदि **कृतान्नं** सिद्धान्नं देयम्। धनादिदाने त्वनियमः इति **उच्यते** उपदिश्यते॥ ३॥

(८) **गोविन्दराजः।** **एतेभ्य इति।** **एतेभ्यो** ब्राह्मणेभ्यो यद्देयं तद्भोजयित्वा दातव्यमेतद्व्यतिरिक्तेभ्यः पुनः सिद्धमन्नं यत्तदन्यत्र देयत्वेनोपदिश्यते। धनदाने त्वनियमः॥ ३॥

(९) **भारुचिः।** नियमानुवादोऽयं भोजनविशेषेण। **इतरेभ्यो**ऽतिथिभ्यो बहिर्वेदि कृतान्नमेव देयं नियमतः। तदिदं पूर्वोक्तमतिथ्यन्नदानमनूद्यते। दक्षिणास्त्वेषां न विधिर्न प्रतिषेधः॥

**सर्वरत्नानि राजा तु यथार्हं प्रतिपादयेत्॥**
**ब्राह्मणान्वेदविदुषो यज्ञार्थं चैव दक्षिणाम्॥ ४॥**

(१) **मेधातिथिः।** सर्ववर्णानां स्वर्गादिफलाय पुरुषार्थोपयोगि दानं विहितम्। अयं तु राज्ञो नियमार्थमुपदेशः। बहुधनेन राज्ञा **सर्वरत्नानि** मणियुक्तादीनि। **यथार्हं** विद्याकर्मानुरूपेण ब्राह्मणेभ्यो दातव्यानि। **यथार्थं च दक्षिणा।** काम्यकर्मसिद्धयेऽपीति पुनरुपदेशः। **प्रतिपादयेत्** स्वीकारयेत् ग्राहयेदिति यावत्॥ ४॥

(२) **सर्वज्ञनारायणः।** ब्राह्मणान् **प्रतिपादयेत्** प्रतिग्राहयेत्। यज्ञार्थं तेषाम्॥ ४॥

(३) **कुल्लूकः।** राजा पुनः **सर्वरत्नानि** मणिमुक्तादीनि यागोपयोग्यानि च दक्षिणार्थं धनं विद्यानुरूपेण वेदविदो ब्राह्मणान्स्वीकारयेत्॥ ४॥

(४) **राघवानन्दः।** राज्ञो विशेषमाह **सर्वेति।** **प्रतिपादयेत्** स्वीकारयेत्। यज्ञार्थं तेषामेव॥ ४॥

(५) **नन्दनः।** सान्तानिकादिषु राज्ञा कर्तव्यमाह **सर्वरत्नानि राजा त्विति । ब्राह्मणा-**न्सान्तानिकादीन्प्रतिपादयेद्बहिर्वेदीत्यनुवर्तते सर्वरत्नानि प्रतिपादयेदित्येव सिद्धे दाने यज्ञार्थं-ञ्चैव दक्षिणा इति पृथगुपन्यासो वक्ष्यामाणं प्रत्यादरातिशयार्थः ।। ४ ।।

(६) **रामचन्द्रः।** यथार्हं **प्रतिपादयेत्** प्रतिग्राहयेत् ।। ४ ।।

(७) **मणिरामः। यथार्हं** यथायोग्यानि न तु विद्यावते निकृष्टमविद्ये चोत्तममिति प्रकारेण ।। ४ ।।

(८) **गोविन्दराजः। सर्वरत्नानीति।** राजा पुनः सर्वाणि मणिमुक्तादीनि कस्य यज्ञोपयोगैरपि दक्षिणा नित्यं यज्ञार्थं यथोक्तेभ्यः विद्यानुरूपेण वेदवद्भ्यो ब्राह्मणेभ्यो दद्यात् ।। ४ ।।

(९) **भारुचिः।** राज्ञस्तु नियमो बहुधनत्वात् । एवं च राज्ञा सान्तानिकादिव्यतिरेकेणा-न्येभ्यः स्नातकेभ्यो नियमतो देयं स्थितिभोगार्थम् । **यज्ञार्थं** चेत्येतदारम्भसामर्थ्याद् गम्यते । निर्विवक्षमाणायापि देयमिति । अनेन सम्बन्धेनेदमुच्यते ।। ४ ।।

**कृतदारोऽपरान्दारान्भिक्षित्वा योऽधिगच्छति ।।**
**रतिमात्रं फलं तस्य द्रव्यदातुस्तु सन्ततिः ।। ५ ।।**

(१) **मेधातिथिः।** कामतो द्वितीयादिविवाहप्रवृत्तौ भिक्षमाणस्य निषेधोऽयम् । **रति-मात्रं फल**मित्यादिरर्थवादो, न यथाश्रुतमेव प्रतिपत्तव्यम् । अन्ये तु व्याचक्षते । धर्मार्थं सान्तानिकाय दातव्यं न कामप्रवृत्तायेति । स एवायमर्थः पुनरन्यथोच्यते । सान्तानिकाय दातव्यं, अयं तु रतिकामो, न सान्तानिक इत्यर्थः । **द्रव्यदातुर्हि सा संततिर्न** तस्येति ।। ५ ।।

(२) **सर्वज्ञनारायणः।** सांतानिकमिति यदुक्तं तत्र विशेषमाह **कृतदार** इति । **कृतदारः** प्राप्तधर्मप्रजासंपन्नदारः । द्रव्यदातुस्तु संततिः फलेन हानिरस्तीत्यर्थः ।। ५ ।।

(३) **कुल्लूकः। यः** सभार्यः सन्तत्यर्थादिनिमित्तमन्तरेणापरान्दारान्भिक्षित्वा करोति तस्य रतिमात्रं फलं धनदातुः पुनस्तदुत्पन्नान्यपत्यानि भवन्तीति निन्दातिशयः । नैवंविधेन धनं याचित्वाऽन्यो विवाहः कर्तव्यो नाप्येवंविधाय नियमतो धनं देयमिति ।। ५ ।।

(४) **राघवानन्दः।** सान्तानिकमित्युक्तं स चेत् । कृतदारोऽपि यद्यपरान्दारान्धनं भिक्षित्वोद्वहेत्तं भाषयन्नाह **कृतदार इति। रतिमात्रं** संभोगमात्रं निन्दामात्रं द्रव्यदातुरिति तेन सति संभवे भिक्षया किंचिन्न कार्यमिति भावः ।। ५ ।।

(५) **नन्दनः।** अथ सान्तानिकस्येति कर्तव्यं प्रसङ्गादाह **कृतदारोऽपरान्दारानिति।** भिक्षित्वा अर्थम् ।। ५ ।।

(६) **रामचन्द्रः। कृतदारः** प्राप्तधर्मप्रजासंपन्नदारः । अपरान् दारान् भिक्षित्वा यः अधिगच्छति ।। ५ ।।

**[ धनानि तु यथाशक्तिः विप्रेषु प्रतिपादयेत् ।**
**वेदवित्सु विविक्तेषु प्रेत्य स्वर्गं समश्नुते ।। ६ ।।**

(३) **कुल्लूकः।** धनानि गोभूहिरण्यादीनि शक्त्यनतिक्रमेण ब्राह्मणेषु वेदज्ञेषु विविक्तेषु पुत्रकलत्राद्यवसक्तेषु प्रतिपादयेत्तद्वशाच्च स्वर्गप्राप्तिर्भवतीति ।। ६ ।।]

(७) **मणिरामः।** तथा च संतानाद्यर्थाभावे यः सुखार्थमन्यां स्त्रियमिच्छति तस्मै धनं न देयमित्यर्थः ।। ५ ।।

(८) **गोविन्दराजः। कृतदार इति।** यः सभार्यः सन् धर्मप्रजासंपन्ने दारेऽन्यान् कुर्वीत 'अन्यतरापाये तु कुर्वीते'त्यापस्तंबस्मरणादेवंविधनिमित्तमन्तरेण परं विवाहं भिक्षित्वा करोति यस्य मन्मथमात्रं फलं धनदातुः पुनस्तदुत्पन्नान्यपत्यानि भवन्तीति निन्दातिशयः। नैवंविधोऽन्यो विवाहः कार्यो न तु तदर्थं भिक्षणीयम्। नाप्येवंविधाय नियमतो दातव्यमित्येवमर्थः ।। ५ ।।

(९) **भारुचिः।** धर्मप्रजासम्पन्ने दारे द्वितीयदारस्यात्मीयेन द्रव्येण नेदमनुज्ञानम्। यस्मात् न हि द्वितीयस्य दारस्य धर्मप्रजासम्पत्तौ सत्यां प्राप्तिरस्ति। तथा च स्मृत्यन्तरम्—"धर्मप्रजासम्पन्ने दारे नान्यां कुर्वीते"ति। एवं च सति कृतदारकार्यस्य द्वितीयधाराधिगमप्रतिषेधोऽयम्। भिक्षणपक्षमाश्रित्य निन्दा। तत्र च यथा तदङ्गभावं गच्छतो द्रव्यदातुः सन्ततिः, एवमात्मीयद्रव्याधिगमेऽपि कन्याया दातुः सन्ततिः फलमित्यतोऽप्येवं शक्यते निन्दा कल्पयितुम्। द्रव्यशब्दस्योभयत्र प्रवृत्तेः कन्यापि हि शक्यते द्रव्यशब्देनाभिधातुम्। यस्मात् कृतदारकार्यस्य द्वितीयदाराधिगमप्रतिषेधार्थोऽयं श्लोकः। एतस्मिंस्त्वर्थे प्रकरणं नानुगृह्यते, यतः अयमन्यप्रकरणानुग्राही। श्लोकार्थ उच्यते :—कृतदारकार्यस्य द्वितीयदाराधिगमार्थं भिक्षमाणाय न देयं नियमतः। अत्र चोक्तो निन्दार्थवाद इति। एवं च सति निर्विवक्षमाणायापि न देयम्। तथा च सत्ययमपवादः पूर्वस्यासान्तानिकाय न देयमिति। नित्यकर्मार्थायां तु याचनायां सान्तानिकादिश्लोके दाननियम उक्तो विज्ञेयः। काम्यकर्मार्थायां तु याचनायां दानस्य न विधिर्न न प्रतिषेधः ।। ५ ।।

**यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये ।।**
**अधिकं वाऽपि विद्येत स सोमं पातुमर्हति ।। ६ ।।**

(१) **मेधातिथिः।** त्रीणि वर्षाणि यस्य पर्याप्तं भृत्यभरणाय धनं तत् त्रैवार्षिकं ततोऽधिकं वा यस्यास्ति **स सोमं पातुमर्हति।** श्रुतौ नित्यस्य सोमस्यावश्यकर्तव्यतया उक्तत्वात् भृत्योपरोधेऽपि नैष निषेधः प्रवर्तते, बलीयस्त्वाच्छ्रुतेः। अत इच्छासोमविषयोऽयं निषेधः।

ननु च सोमे धनं परिक्रमार्थमुपयुज्यते 'तस्य द्वादशशतं दक्षिणेति'। तत्र वृत्तिर्वर्धतेऽतश्च सोमे तत्र धनमुपयुज्यते। नोच्यते यस्य त्रैवार्षिकमिति। ननु च वृत्तिधनमसति धने नित्यवदस्तीति विद्यमानधनेनापि तत्कर्तव्यमेवेष्यते। प्राशस्त्यकरदानशब्दो भक्तमात्रे यदि हिरण्यदानं सोमक्रयार्थमेवमादिनिवृत्तिः ।। ६ ।।

(२) **सर्वज्ञनारायणः। भृत्याः** भरणीया जायाद्याः। **अधिकं वापीति** वाकारः समुच्चये। त्रिवर्षभृत्यवृत्तये योग्यं त्रैवार्षिकं धनं स्थापयित्वा यद्यधिकं सामर्थ्यं पर्याप्तं तदैवेत्यर्थः ।। ६ ।।

(३) **कुल्लूकः**। यस्यावश्यपोष्यभरणार्थं वर्षत्रयपर्याप्तं तदधिकं वा भक्तादि स्यात्स काम्यसोमयागं कर्तुमर्हति। नित्यस्य पुनर्यथाकथंचिदवश्यकर्तव्यत्वान्नायं निषेधः। अत एव 'समान्ते सौमिकैर्मखैरि'ति नित्यविषयत्वमुक्तवान् ॥ ६ ॥

(४) **राघवानन्दः**। संभवद्धनस्य यागदानयोः स्वेष्टसाधनत्वेन भृत्यादिपरिपीडनेनापि तत्कर्तव्यता प्राप्ता तत्राह **यस्ये**ति चतुर्भिः। **भृत्यवृत्तये** तत्पोषणाय **पर्याप्तं** क्षमम्। यस्य त्रैवार्षिकं धनं स सोमं पातुमर्हतीति स्मृत्यन्तरात्सोमं काम्यं 'समान्ते सौमिकैर्मखै'रिति नित्यस्यावश्यकर्तव्यतोक्तेः। 'वसन्ते वसन्ते ज्योतिषा यजेते'ति श्रुतेनानेन निषेधो नित्यस्य श्रुतिबाधेन स्मृतेर्दुर्बलत्वात् ॥ ६ ॥

(५) **नन्दनः**। भिक्षित्वा वक्ष्यमाणस्यापि कर्तव्यं श्लोकद्वयेनाह **यस्य त्रैवार्षिकं भक्त**मिति। भृत्या भरणीयाः ॥ ६ ॥

(६) **रामचन्द्रः**। **भक्तं** अन्नं त्रिवर्षपर्यन्तं यः सोमं पातुं अर्हति ॥ ६ ॥

(७) **मणिरामः**। **सोमं पातुं** सोमयागं कर्तुम्। अतो न्यूनधनस्तु न कुर्यात् ॥ ६ ॥

(८) **गोविन्दराजः**। **यस्येति**। यस्यावश्यकर्तव्यभरणार्थं वर्षत्रयपूरणसमर्थं तदधिकं च भक्तादि स्यात्स काम्यसोमयागं कर्तुमर्हति। नित्यस्य पुनर्यथाकथंचिदवश्यकर्त्तव्यत्वात् नायं निषेधः ॥ ६ ॥

(९) **भारुचिः**। तथा च दर्शयति एवं च सति काम्यसोमापेक्षोऽयं सामर्थ्यादुपदेशो द्रष्टव्यः। नित्यस्य हि सोमस्य भृत्योपरोधेनापि करणमिष्यते, नित्यत्वादेव। तथा च सत्यत्र तदैव दाननियमो युज्यते, यथोक्तो यक्ष्यमाणाय देयमिति। इदं **सोम**ग्रहणं सर्वकाम्यकर्मप्रदर्शनार्थम्, कारणस्य न समानत्वात् ॥ ६ ॥

## अतः स्वल्पीयसि द्रव्ये यः सोमं पिबति द्विजः ॥
## स पीतसोमपूर्वोऽपि न तस्याप्नोति तत्फलम् ॥ ७ ॥

(१) **मेधातिथिः**। प्रतिषेधातिक्रमेणानधिकारिणः कुर्वतो न्यायसिद्धफलाभावोऽनेनानूद्यते। फलग्रहणाच्च काम्यविषयता स्फुटतरा प्रतीयते। **स पीतसोमपूर्वोऽपि**। अनेन प्रथमयज्ञस्यावश्यकर्तव्यतां दर्शयति। स पीतत्वाद्यर्थवादोऽयम्। न पुनरपीतसोमस्य प्रतिषेधः ॥ ७ ॥

(२) **सर्वज्ञनारायणः**। न फलमाप्नोति कथंचिन्मध्ये दुर्भिक्षादिना भृत्यनाशे प्रत्यवायाधिक्यादित्यर्थः ॥ ७ ॥

(३) **कुल्लूकः**। त्रैवार्षिकधनादल्पधने सति यः सोमयागं करोति तस्य प्रथमसोमयागो नित्योऽपि न संपन्नो भवति सुतरां द्वितीययागः काम्यः ॥ ७ ॥

(४) **राघवानन्दः**। अतो नियमयति **अत इति**। **सः पीतः** पूर्वयागशेषः सोमो येन सः पूर्वकृतसोमस्यापि फलं न प्राप्नोतीति निन्दा ॥ ७ ॥

(५) **नन्दनः**। अतस्त्रैवार्षिकाद्भक्ताद्यस्य पूर्वैरपीतसोमः स पीतसोमपूर्वः ॥ ७ ॥

(६) **रामचन्द्रः**। **अतः** त्रैवार्षिकात् धनात् अल्पीयसि द्रव्ये यो द्विजः सोमं पिबति सः **अपीतसोमः** पीतस्य सोमस्य सोमपानस्य फलं न प्राप्नोति ॥ ७ ॥

(७) **मणिरामः**। **अतः** त्रैवार्षिकधनात् ॥ ७ ॥

(८) **गोविन्दराजः**। तथा च दर्शयति **अतः स्वल्पीयसीति**। त्रैवार्षिकधनादल्पतरे धने सति यः सोमयागं करोति तस्य प्रथमसोमयागोऽपि नित्योऽवसंपन्नो भवति किमुत काम्य इति। तस्मादतोऽल्पधनेन काम्ययागो न कर्तव्यः ॥ ७ ॥

(९) **भारुचिः**। नियमशास्त्रव्यतिक्रमेण न केवलमस्य तत्कर्मनैष्फल्यं प्रत्यवायश्चा-परः। **अपीतसोमपूर्वस्यायं** व्यतिक्रमो निष्फलः प्रत्यवायाय न स्यात्, किं पुनरितरस्येति निन्दार्थवादः न **चापीतसोमपूर्वो**ऽपीत्यनेन स्तुत्यर्थेनातिशयवचनेन न नित्यस्य सोमपानस्या-प्रवृत्तिः शक्या कल्पयितुम्। एवं च सत्येतस्मादेव स्तुत्यतिशयाल्लिङ्गान्नित्यस्यानिवृत्ति-र्गम्यते। तथा च नित्यार्थं नियमतो देयम्। इतरत्र त्वनियमः। इदानीं शक्तस्य दातुर्नियम उच्यते ॥ ७ ॥

**शक्तः परजने दाता स्वजने दुःखजीविनि ॥**
**मध्वापातो विषास्वादः स धर्मप्रतिरूपकः ॥ ८ ॥**

(१) **मेधातिथिः**। यः **स्वजनो** भृत्यामात्यमातृपितृपुत्रदारादिः तस्मिन् **दुःखजीविनि**। यः **परजने** यशोऽर्थं ददाति तस्यासौ **विषास्वादः**। **आपाते** सन्निपाते मधुरः। यथा विषस्यास्वादः सन्निपातमधुरो विपाकविरसो मरणफलत्वात्, एवं तादृशं दानम्। यद्यपि संप्रति यशः सुखं जनयत्यमुत्र प्रत्यवायोत्पत्त्या विषास्वादसमं संपद्यते। तदेवाह **धर्मप्रतिरूपको**ऽसौ धर्मसदृशो न धर्मः, शुक्तिरिव रजतज्ञानस्य ॥ ८ ॥

(२) **सर्वज्ञनारायणः**। **शक्तः** स्वजनपोषणे। स्वजनान् भार्यादीन् विहाय कीर्त्या-धिक्यादिबोधेन परजने दाता। आपाततो मधुभूतकीर्तिलाभान्म**ध्वापातः**। **विषास्वादो** विषभक्षणं पापहेतुरूपानर्थहेतुत्वात्। **धर्मप्रतिरूपको** धर्मसदृशोऽधर्मः ॥ ८ ॥

(३) **कुल्लूकः**। यो बहुधनत्वाद्दानशक्तः सन्नवश्यभरणीये पितृमात्रादिज्ञातिजने दौर्गत्या दुःखोपेते सति यशोऽर्थमन्येभ्यो ददाति स तस्य दानविशेषो धर्मप्रतिरूपको न तु धर्म एव **मध्वापातो** मधुरोपक्रमः प्रथमं यशस्करत्वाद्विषास्वादश्चान्ते नरकफलत्वात्तस्मादेतन्न कार्यम् ॥ ८ ॥

(४) **राघवानन्दः**। अत आह **शक्त इति**। **दाता** दानशीलो यः स **परजने** प्राणान्प्र-दातुं शक्तोऽपि सति **स्वजने दुःखिनि** न दद्यादित्याह **मध्वापातः**। मधुवदापाततः कीर्तिसुख-करत्वात् **विषास्वादः** विषवदास्वादनीयं फलं यस्य सः उदर्के संतापादिदृष्टेः। विषमपि मारकत्वेऽप्यतिमधुरम् ॥ 'दीयते च परिक्लिष्टं तद्दानं राजसं स्मृत'मित्युक्तेः ॥ **धर्मप्रति-रूपकः** धर्माभासः ॥ ८ ॥

(५) **नन्दनः।** प्रासङ्गिकं समाप्य प्रकृतमेव सान्तानिकादिषु भिक्षितैः कर्तव्यमुपसंक्रम्याह **शक्तः परजने दातेति**। **शक्तः** धनवान्। **स्वजने** स्वकुटुम्बे। मधु ईषत्पिबतीति **मध्वापातः।** विषं समंतात्स्वादयतीति **विषास्वादः** प्रभूतविषाशीति यावत्। स **धर्मप्रतिरूपकः** धर्मप्रतिरूपसहितः स्वजने **दुःखजीविनि** सान्तानिकानि सान्तानिकादिष्वपि दातुधर्मो भूयानित्यर्थः ॥ ८ ॥

(६) **रामचन्द्रः।** **शक्तः** स्वजनपोषणसमर्थः **स्वजने** स्वभर्तव्ये **दुःखजीविनि मध्वापातः** मधुरोपक्रमः **विषास्वादः** नरकदर्श [नम्] धर्मप्रतिरूपको धर्मसदृशोऽधर्मः ॥ ८ ॥

(७) **मणिरामः।** **शक्तः** बहुधनत्वाद्दाने समर्थः सन् **स्वजने** पितृमात्रादि जातिजने **दुःखजीविनि** दुःखोपेते सति **परजने**भ्यो ददाति स दानविशेषो **धर्मप्रतिरूपकः** धर्मप्रतिनिधिः न तु धर्मः। कथंभूतः **मध्वापातः** मधुरोपक्रमः प्रथमं यशस्करत्वात्। अंते विषास्वादः नरकफलत्वात्। तस्मात्स्वजनान्पोष्य पश्चादन्येभ्यो देयमिति ज्ञेयम् ॥ ८ ॥

(८) **गोविन्दराजः।** **शक्त इति।** यो धनं दत्वा दानसमर्थः सजातिषु दौर्गत्योपेतेषु सत्स्वन्येभ्यो ददाति तस्य तद्दानं संप्रति यशस्करत्वात् मधु इव प्रथमभक्षणयोग्योऽमुत्र च नरकपाताद्विषविपरिणामतुल्यमतश्चासौ धर्मप्रतिच्छंदको न तु धर्म इति तस्मात्तदेवं न कर्तव्यम् ॥ ८ ॥

(९) **भारुचिः।** एवं च सत्येतदर्थाद् गम्यते स्वजनोपरोधेन परेभ्यो न देयम्। **स्वजनं** च पुत्रदारादि वक्ष्यति। अन्यथा हि स्वजनातिक्रमेण यो ददाति दातुः तस्यासौ **मध्वापातः,** अधुना इवापातः आपात आस्वादः सन्निपात रमणीयो यशः, सुखं यशोऽर्थिनां यद्यपि भवति, तथाप्यसौ **विषास्वाद** इव ज्ञेयोऽप्येव। कटुरसत्वेनात्र प्रत्यवायोत्पत्त्या। तथा च दर्शयति **स धर्मप्रतिरूपको** दातुरधर्म इत्यर्थः। कटुः। नियमातिक्रमात्। अस्य निन्दार्थनादो निवृत्त्यर्थः ॥ ८ ॥

## भृत्यानामुपरोधेन यत्करोत्यौर्ध्वदेहिकम् ॥
## तद्भवत्यसुखोदर्कं जीवतश्च मृतस्य च ॥ ९ ॥

(१) **मेधातिथिः।** पूर्वस्य निन्दार्थवादोऽयम्। **भृत्या** व्याख्याताः। **उपरोधो** भक्तवस्त्रादिना यथोपयोगमाहरणम्। **और्ध्वदेहिकं** परलोकप्रयोजनम्। **असुखोदर्क** 'मुदर्कः' आगामीकालः, सोऽस्य दानस्यासुखोदर्कं भवतीति प्रयोजनं सिद्धमेव ॥ ९ ॥

(२) **सर्वज्ञनारायणः।** न केवलं कीर्त्यर्थं दानादावेवमदृष्टबुद्ध्यापि करणे तथेत्याह **भृत्यानामिति। उपरोधो** वृत्तिसंकोचः। जीवतोऽसुखोदर्कं वृत्त्यभावेन भार्यादिनाशात् ॥ ९ ॥

(३) **कुल्लूकः।** पुत्रदाराद्यवश्यभर्तव्यपीडनेन यत्पारलौकिकधर्मबुद्ध्या दानादि करोति तस्य दातुर्जीवतो मृतस्य च तद्दानं दुःखफलं भवतीति पूर्वं कीर्त्यादिदृष्टार्थदानप्रतिषेधः। अयं त्वदृष्टार्थदानप्रतिषेधः ॥ ९ ॥

(४) **राघवानन्दः**। ततः किं तत्राह **भृत्यानामिति**। भृत्यानामुपरोधेन भरणीयानां पीडया। **औध्वंदेहिकं** पारलौकिकम्। **असुखोदर्कं** इह भरणीयव्यग्रमनस्तया जीवतः मृतस्य तु अमुत्रफलराहित्येन च अतो भृत्या पीडया दृष्टादृष्टं दानादिकं कर्तव्यमिति भावः ।। ९ ।।

(५) **नन्दनः**। न केवलं दानमेव स्वजनोपरोधेन न कार्यं किन्तु सर्वोऽपि धर्मो न कार्य इत्याह **भृत्यानामुपरोधेनेति**। मरणादूर्ध्वं येन देहः प्राप्यते स ऊर्ध्वं देहस्तस्मै हितमौर्ध्वदेहिकं धर्ममिति यावत् ।। ९ ।।

(६) **रामचन्द्रः**। भृत्यानां जीवनोपरोधेन **औध्वंदेहिकं** पारलौकिकं अस्य जीवतो मृतस्य वाऽसुखोदर्कं तद्द्वयं भवति ।। ९ ।।

**[ वृद्धौ च मातापितरौ साध्वी भार्या शिशुः सुतः ।।**
**अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ।। १ ।। ]**

(७) **मणिरामः**। **भृत्यानामुपरोधेन** पुत्रदाराद्यवश्यपोष्यपीडनेन। **औध्वंदेहिकं** पारलौकिकधर्मबुद्ध्या दानादिकम् ।। ९ ।।

(८) **गोविन्दराजः**। **भृत्यानामिति**। पुत्रदाराद्यवश्यभर्तव्योपपीडने यत्पारलौकिकं दानादि करोति तस्य जीवतो मृतस्य वाऽसुखफलं भवति ।। ९ ।।

(९) **भारुचिः**। मातापितरौ पुत्रदारं च **भृत्याः**। तथा चोक्तम् "गुरून्भृत्यांश्चोज्जिहीर्षन् इति। एवं च स्मृत्यन्तरं "वृद्धौ च मातापितरौ साध्वि भार्या शिशुः सुतः। अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्" ।। अतस्तेषामुपरोधेन यदन्यत् करोति औध्वंदेहिकमिष्टपूर्वं वा युक्तमस्यासुखोदर्कत्वं प्रत्यवायोत्पत्त्या च तत्रेह चेति। अपरे तु पूर्वश्लोकपादं वा पठन्ति" "मध्वास्वादो विषापात" इति अर्थस्तु यथोक्त एव ।। ९ ।।

**यज्ञश्चेत्प्रतिरुद्धः स्यादेकेनाङ्गेन यज्वनः ।।**
**ब्राह्मणस्य विशेषेण धार्मिके सति राजनि ।। १० ।।**
**यो वैश्यः स्याद्बहुपशुर्हीनक्रतुरसोमपः ।।**
**कुटुम्बात्तस्य तद्द्रव्यमाहरेद्यज्ञसिद्धये ।। ११ ।।**

(१) **मेधातिथिः**। अत्राङ्गग्रहणान्न केवलं सर्वासां दक्षिणानामसंपत्तौ वैश्यानामिदमाहरणं विधीयते। अपि च तस्मिन्नपि **पश्वादौ। आहरेदिति** तत्स्वीकारोत्पत्तिमात्रमुच्यते, नोपायविशेषः। अतश्च याञ्चया विनिमयेन चौर्येणैवापहर्तव्यम्। "ननु च चौर्येण साम्यं नोत्पद्यत इत्युक्तम्"। नैष दोषः। इह स्वशब्देनैवोक्तं 'हर्तव्यमिति'। एवं ह्याह— 'कर्तव्यं हीनकर्मण' इति। अयं वापहारः प्रागारब्धयागस्य सर्वाङ्गोपेतस्यैकाङ्गासंपत्तौ प्रारिप्स्यमानस्य वेति न विशेषहेतुरस्ति। **ब्राह्मणस्य विशेषेणेति** वचनात्क्षत्रियवैश्ययोरप्यस्ति तदेकाङ्गग्रहणमस्मिन्निमित्ते। ननु कः क्षत्रियो याचेदिति क्षत्रियस्य याञ्चा प्रतिषिद्धा। अत्यल्पमिदमुच्यते। ब्राह्मणस्यापि चौर्यं निषिद्धम्। तस्मात्तस्मिन्निमित्ते नास्त्यर्जनोपाय-

नियमः। **धार्मिके सतीत्यनुवादोऽयम्।** यो हि धर्मज्ञो राजा तस्मिन्निमित्ते चौर्यं विहितमिति। अन्यस्य तु निगृहीतत्वात्कुतः प्रवृत्तिः। **बहुपशुग्रहणं** धनमात्रोपलक्षणार्थम्। **हीनक्रतुः** कर्मयोगादन्यदपि दानादि न करोति। सत्यप्यसोमपे। **कुटुंबाद्**गृहादित्यर्थः। गृहाद्धि चौर्यं दोषवत्तरमतस्तदनुज्ञायते। न पुनरप्येवमेव नियमः। अन्यतोऽपि यत्खलादेः संपद्यते तत्कर्तव्यमेव। वक्ष्यति च 'खलात्क्षेत्रादगाराद्वेति' ।। १०-११ ।।

(२) **सर्वज्ञनारायणः। यज्वनः** क्षत्रियस्य **विशेषेण तु ब्राह्मणस्य। एकेनाङ्गेनाप्राप्तेन** आज्यस्य पशोर्दस्त्रादीनां वा दक्षिणानामन्यतमस्याभावेन **प्रतिरुद्धः** प्रतिबद्धः। धार्मिके सतीत्यधार्मिकस्य राज्ञो यज्ञसंपत्त्यनुरोधेन वैश्यधनापहरणानुपपत्तेरुक्तम् ।। ११ ।।

(३) **कुल्लूकः।** क्षत्रियादेर्यजमानस्य **विशेषतो ब्राह्मणस्य** यदि यज्ञ इतराङ्गसंपत्तौ सत्यामेकेनाङ्गेनासंपूर्णः स्यात्तदा यो वैश्यो बहुपश्वादिधनः पाकयज्ञादिरहितोऽसोमयाजी तस्य गृहात्तदङ्गोचितं द्रव्यं बलेन चौर्येण वाहरेत्। एतच्च धर्मप्रधाने सति राजनि कार्यं स हि शास्त्रार्थमनुतिष्ठन्तं न निगृह्णाति ।। १०–११ ।।

(४) **राघवानन्दः।** विहितदक्षिणा तु शूद्रादिप्रतिग्रहेणापि देयेत्याह **यज्ञश्चेति** पञ्चभिः। **प्रतिरुद्धः** असमाप्तकल्पः। **एकेन** दक्षिणारूपेण। धार्मिक इति विशेषणाद्बलादपि वैश्यादिभ्यो दक्षिणा ग्राह्येति शेषः। ब्राह्मणस्य विशेषेणेति विशेषणं दक्षिणार्थं क्षत्रियस्यापि भिक्षासूचकम् ।। ११ ।।

(५) **नन्दनः।** अथ वर्षत्रयपर्याप्तभृत्यवृत्तिना वक्ष्यमाणेन किञ्चिन्न्यूनधनेन स्नातकेन निवेदितस्य कोशहीनस्य राज्ञः कर्तव्यमाह **यज्ञश्चेत्प्रतिरुद्धः स्यादिति।** श्लोकद्वयमेकं वाक्यं सति राजनि दानशीले राजनि विद्यमानेऽपि **एकेनाङ्गेन**ैकाङ्गवैकल्येन यज्ञः **प्रतिरुद्धश्चेद्**विघ्नितश्चेत् राज्ञः कोशाभावादिति भावः ।। ११ ।।

(६) **रामचन्द्रः।** द्वाभ्यामाह **यज्ञेति। यज्वनः यज्ञः एकेनांशेन प्रतिरुद्धः** स्यात् ।। ११ ।।

(२) **सर्वज्ञनारायणः। हीनक्रतु**रकृतपञ्चमहायज्ञः। **असोमपः** अपीतसोमः। एतेन सोमपस्य पञ्चयज्ञाकरणेऽपि श्रेष्ठतोक्ता। तस्य वैश्यस्य कुटुम्बात् कुटुम्बार्थधनादाकृष्यैकमंशं राजा ब्राह्मणाय दद्यात् ।। ११ ।।

(४) **राघवानन्दः। किंच य** इति। **कुटुम्बात्** गृहादपि ग्राह्यम्। **यज्ञसिद्धये** यज्ञसमाप्तये। तद्द्रव्यं दक्षिणारूपमिति भावः ।। ११ ।।

(५) **नन्दनः। हीनक्रतुः** अनग्न्याधानादिकान्तस्य वैश्यस्य कुटुंबाद्गृहा**द्यज्ञसिद्धय एकाङ्गहीनयज्ञस्य** समाप्तये यावता द्रव्येण स यज्ञः सिध्यति ताव**द्द्रव्यमाहरे**त्प्रसह्य गृह्णीयात्स राजेति विपरिणामः। राजैव कर्ता न यज्वा, कुत एतत्? राज्ञ एवाहरणबलोपपत्तेः **महाभारते**ऽप्यस्य वचनस्य **चतुर्थः** पादो 'यज्ञार्थं पार्थिवो हरे'दिति पठ्यते तेनापि राजैककर्तव्याख्ये यो न यज्वेति ।। ११ ।।

(६) **रामचन्द्रः।** धार्मिके राजनि सति। यो **वैश्यो** बहुपशुहीनः क्रतुर्यस्य सः। सः असोमपः तस्य **कुटुम्बात्** गृहात् तद्द्रव्यं यज्ञसिद्धये राजा **आहरेत्** स्वीकुर्यात् ।। ११ ।।

(७) **मणिरामः। यज्वनः** क्षत्रियादेर्यजमानस्य। इतरांगे जाते सति एकेनांगेनऽसंपूर्णः स्यात् ।। १० ।। तदा एतादृशाद्वैश्याद्द्रव्यं बलात् चौर्याद्वा आहृत्य यज्ञं संपूर्णं कुर्यात् इदमपि धार्मिके राजनि सति कर्तव्यं नान्यथा। स हि शास्त्रार्थं ज्ञात्वा न दंडयेत् ।। ११ ।।

(८) **गोविन्दराजः। यज्ञ इति। य इति।** क्षत्रियादेर्यजमानस्य यदि यज्ञेज्यायज्ञसंपत्तौ सत्यामेकेनाङ्गेन विना न निरूद्धः स्यात्तदा यो वैश्यो बहुपश्वादिधनः प्राक् यज्ञसिद्धर्थं चौर्येणाहरेत् । एतच्च धर्मप्रधाने राजनि सति कार्यं स हि शास्त्रमनुतिष्ठन्तमुपेक्षते ।।१०—११।।

(९) **भारुचिः।** भिक्षमाणस्यापि तदर्थमसामग्र्यां सत्यां यज्ञसाधनानां परादानं वक्ष्यति। **एकाङ्गेनेति,** येन केनचिदल्पेनापि यज्ञसाधनप्रतिपूरणेनेत्यर्थः। **ब्राह्मणस्य विशेषेण**दमित्यर्थः। तन्निमित्ते। एवं च सति क्षत्रियवैश्ययोरपि यायजूकयोरेवमनुज्ञायते परादानं, ब्राह्मणस्य विशेषेणेति वचनात् । **धार्मिके** सति **राजनि** धर्मज्ञो यो ह्येतद्वेत्ति। अनेन निमित्ते उपन्यस्ते स्त. शास्त्रे इहैन्तस्मिन्नेवंगुणे **सति राजन्ये**तदुपदिश्यते परादानम्। कुतः। पुनस्तादिति यतस्तदाह—**हीनक्रतुश्च बहुपशुः** स्यात्। हीनकर्मा। अहीनक्रतुरपि यद्यसोमपो भवति, ततः कुटुम्बात्तस्य तद्द्रव्यमाहरेत् ।। १०—११ ।।

**आहरेत्त्रीणि वा द्वे वा कामं शूद्रस्य वेश्मनः ।।**
**न हि शूद्रस्य यज्ञेषु कश्चिदस्ति परिग्रहः ।। १२ ।।**

(१) **मेधातिथिः।** वैश्यासंभवे शुद्रादप्याहर्तव्यम्। **त्रीणि वा द्वे वे**त्यङ्गप्रकरणादङ्गानि वेदितव्यानि। अत्रार्थवादो **न हि शूद्रस्येति।** यद्यपि पूर्वमनेकोपायकृतमाहरणं विहितं तथापि भिक्षणमत्र नास्ति, 'न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेतेति'। ननु" च स्मृत्यन्तरेऽविशेषेण शुद्रधनेन यागः प्रतिषिद्धः"। अस्योपदेशस्य सामर्थ्याच्छूद्रात्प्रतिगृह्णीतेति द्रष्टव्यम्। अन्ये त्वाहुः। ब्राह्मणेन स्वीकृतत्वान्नैव तच्छूद्रधनमिति। यस्तु प्रतिषेधः, स **शूद्रस्य** शान्तिकपौष्टिकादि येन धनेन करोति ऋत्विग्वत्तत्र द्रष्टव्यः। इह तु भूतपूर्वगत्या शूद्रधनव्यपदेशोऽस्य स्यात् सांप्रतिकत्वाभावे च सा ।। १२ ।।

(२) **सर्वज्ञनारायणः।** यदि तु यज्ञाङ्गद्वयत्रयस्यासंपत्तिस्तदा शूद्रस्यैव तथाविधस्य धनादित्याह **आहरेदिति। यज्ञेषु परिग्रहो** यज्ञनिमित्तधनपरिग्रहो यज्ञार्थता धनस्य ।। १२ ।।

(३) **कुल्लूकः।** यज्ञस्य द्वित्र्यङ्गवैकल्ये सति तानि त्रीणि चाङ्गानि द्वे वाङ्गे वैश्यादलाभे सति निर्विशङ्कं शूद्रस्य गृहाद्बलेन चौर्येण वाहरेत् यस्माच्छूद्रस्य क्वचिदपि यज्ञसंबन्धो नास्ति न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेतेति वक्ष्यमाणप्रतिषेधः शूद्राद्याचनस्य न तु बलग्रहणादेः ।। १२ ।।

(४) **राघवानन्दः।** तत्र च कैमुत्यमाह आहरेदिति गवाम्। **कश्चिदिति** यज्ञोद्देशेन न यज्ञार्थं धनमित्यादिवचनविरोधात् तत्समाप्त्यर्थं न तु दोषः ।। १२ ।।

(५) **नन्दनः।** वैश्याभावे राजा किं कुर्यादित्यपेक्षायामाह **आहरेत् त्रीणि वा द्वे वेति।** न केवलमङ्गं राजा शूद्रस्य गृहादाहरेत्किन्तु त्रिभिरङ्गैः यज्ञप्रतिग्रहहेतुरुत्तरार्धेनोक्तः परिग्रहः संबन्धः ।। १२ ।।

(६) **रामचन्द्रः** । शूद्रस्य त्रीणि यज्ञस्याङ्गानि द्वे वाङ्गे हीने भवतः तदास्य वेश्मतः आहरेत् । शूद्राद्धनादानं कुर्यात् । कश्चित् **परिग्रहः** संबन्धः शूद्रस्य यज्ञेषु नास्ति ॥ १२॥

(७) **मणिरामः** । वैश्याच्चेन्न प्राप्यते तदा यज्ञसिद्धिः कथं स्यादत्राह । **आहरेदिति** । **परिग्रहः** संबंधः ॥ १२ ॥

(८) **गोविन्दराजः** । **आहरेदिति** । यज्ञस्य द्वित्राङ्गकवैकल्ये सति तानि त्रीणि वाङ्गानि द्वे चाङ्गे निर्विकल्पः । शूद्रग्रहाच्चौर्येणाहरेद्यस्माच्छूद्रस्य यज्ञसंबन्धो मनागपि नास्ति । यज्ञार्थत्वं धनम् । तथा च यज्ञाय सृष्टानि धनानि धात्रे विस्मर्यते । भिक्षितशूद्रधनस्य प्रतिषेधो भविष्यति न यज्ञार्थं धनं शूद्रादिति ॥ १२ ॥

(९) **भारुचिः** । तदसम्भवे च—आहरेत् त्रीणि वा द्वे वा कामं शूद्रस्य वेश्मनः । अङ्गप्रकरणात् त्रीणि वा द्वे वाङ्गानि सम्बध्यन्ते । अङ्गभूयस्त्वादानं च हीनजातित्वादस्य । अस्यार्थवादो भवति ॥ एवं चाह व्यासः— यज्ञाय सृष्टानि धनानि धात्रा यष्टा सृष्टः पुरुषो रक्षिता च, तस्मात् सर्वं यज्ञ एवोपयोज्यं धनं न कामाय एतत्प्रशस्तम् । ननु शूद्रधनेन यागप्रतिषेधं वक्ष्यति—'न यज्ञार्थं धनं शूद्रा'दित्येवमादिभिः । भिक्षित्वा तत्र प्रतिषेधः, इदं च परादानं पदार्थान्तरम् । यतो न विरोधः । अथवा शूद्रधनैरेव केवलैस्तत्र प्रतिषेधः, इह तु द्वित्रिमात्राङ्गवैकल्येऽसम्भवद्वित्तस्य तत आदाय यागो युक्तः । वचनाद्वात्रैवं भविष्यति, निमित्ते भेदे सति । न वचनस्यातिभारोऽस्ति उपदेशपरत्वाच्छास्त्रस्य । इदानीं ब्राह्मणक्षत्रियाभ्यामिदमादानमुच्यते ॥ १२ ॥

**योऽनाहिताग्निः शतगुरयज्ञश्च सहस्रगुः ॥**
**तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ॥ १३ ॥**

(१) **मेधातिथिः** । ब्राह्मणक्षत्रियाभ्यामप्येवंविधाभ्यामाहर्तव्यमिति श्लोकार्थः । **गो**ग्रहणं तावत्परिमाणधनोपलक्षणार्थम् । **अयज्ञो**ऽसोमयाजी ॥ १३ ॥

(२) **सर्वज्ञनारायणः** । क्षत्रियादप्येवंभूतादेकमंशमानेतव्यमित्याह **योऽनाहिताग्निरिति** । **अयज्वा** असोमयाजी ॥ १३ ॥

(३) **कुल्लूकः** । योऽनाहिताग्निर्गोशतपरिमाणधनः आहिताग्निर्वाऽसोमयाजी गोसहस्रपरिमितधनः द्वयोरपि गृहाभ्यां प्रकृतमङ्गद्वयं त्रयं वा शीघ्रं संपादयितुं ब्राह्मणेन द्वाभ्यामाहरणीयं ब्राह्मणक्षत्रियाभ्यामपि ब्राह्मण आहरेत् क्षत्रियस्य तु अदस्युक्रियावद्ब्राह्मणस्वहरणं नेषेधयिष्यति ॥ १३ ॥

(४) **राघवानन्दः** । **किंच य** इति । **शतगुः** शतं विद्यमाना गावो यस्य । एवं **सहस्रगुरपि** । अयज्वा चेद्ब्राह्मणः क्षत्रियो वा अविचारयन् द्वित्राणामाहरणे तेषां क्लेशाभावात् ॥ १३ ॥

(५) **नन्दनः** । शूद्राभावे च किं कुर्यादित्याह **योऽनाहिताग्निः शतगुरिति** । योऽनाहिताग्निः परिशेषात्क्षत्रियो ब्राह्मणश्च आहरेद्योधे त्रीण्यङ्गानि द्वाभ्यां चेद्द्वे सर्वैश्चेत्सर्वाणीत्युक्तम् ॥ १३ ॥

(६) **रामचन्द्रः**। योऽनाहिताग्निः शतगुः गोशब्द उपलक्षणं तावद्धनमुच्यते च पुनः यः **अयज्वा** असोमयाजी च सहस्रगुः तयोः शतगुसहस्रग्वोः कुटुम्बाभ्यां त्रैवर्णिके अविचारयन् राजा आहरेत् ।। १३ ।।

(७) **मणिरामः**। शतगुः गोशतपरिमाणधनः। **कुटुंबाभ्यां** क्षत्रियवैश्याभ्यामपि अंगद्वयत्रयसिद्ध्यर्थं ब्राह्मणेन क्षत्रियवैश्याभ्यामपि आहरणीयम् ।। १३ ।।

(८) **गोविन्दराजः**। **य इति**। योऽनाहिताग्निर्गोशतपरिमाणधनः आहिताग्निरपि वा असोमयाजी गोसहस्रपरिमाणधनस्तयोरपि गृहाभ्यां प्रकृतमङ्गद्वयं त्रयं वा क्षिप्रमाहरेत्। वैश्यादपहरणस्योक्तत्वाद्ब्राह्मणाच्च वक्ष्यमाणत्वादिदं क्षत्रियविषयम् ।। १३ ।।

**आदाननित्याच्चादातुराहरेदप्रयच्छतः ।।**
**तथा यशोऽस्य प्रथते धर्मश्चैव प्रवर्धते ।। १४ ।।**

(१) **मेधातिथिः**। अयं सर्ववर्णविषयः श्लोकः। **आदाननित्यो** यः सर्वकालं कृषि-प्रतिग्रहकुसीदादिभिर्धनमर्जयति न च ददाति। तत उपायान्तराण्याश्रयणीयानि। **अदातु**-रित्ययागशीलस्यापि द्रष्टव्यम् ।। १४ ।।

(२) **सर्वज्ञनारायणः**। अदातुरदानशीलादादाननित्यान्नित्यार्जकादप्रयच्छतः तदा तद्धनमददतोऽपि त्रैवर्णिकादाहरेत्। एकमङ्गं द्वयं त्रयमित्यन्येषूक्तमतस्तु बह्वपि ग्राह्यम्। ब्राह्मणस्य त्वयज्वनोऽपि धनमनादेयमिति वक्ष्यति। एतच्च राजा स्वकोशे सत्यपि गृहीत्वा दद्यादिति ग्राह्यम् ।। १४ ।।

(३) **कुल्लूकः**। प्रतिग्रहादिना **आदानं** धनग्रहणं नित्यं यस्यासावादाननित्यः ब्राह्मण-स्तस्मादिष्टापूर्तदानरहिताद्यज्ञाङ्गद्वयत्रयार्थायां याचनायां कृतायामददतो बलेन चौर्येण वा हरेत् तथा कृतेऽपहर्तुः ख्यातिः प्रकाशते धर्मश्च वृद्धिमेति ।। १४ ।।

(४) **राघवानन्दः**। **आदाननित्यात्** प्रतिग्रहपरात्। **अदातुः** स्वरसतः। **अप्रय-च्छतः** अनिषेधकात्। अस्यायज्वनो यज्वनो वा। यशोऽमुकस्य धनेनास्मद्यागः समाप्त इति वर्धते परधर्मोत्पादकत्वोपकारात् ।। १४ ।।

(५) **नन्दनः**। एवंकुर्वतो राज्ञः फलमाह **आदाननित्याच्चादातुरिति**। **अदातु**-रत्यप्रयच्छतो दातुः कदर्यादिति यावत् तद्द्रव्यमाहरेत्तथा कुर्वतो राज्ञो यशः प्रथते ।। १५ ।।

(६) **रामचन्द्रः**। आदातुः आददतः आदाननित्यात्प्रतिग्रहादिना नित्यात्स्व-कृत्यात् अप्रयच्छतः **आहरेत्** स्वीकुर्यात् अस्य यशः प्रथते ।। १४ ।।

(७) **मणिरामः**। **आदानं** धनग्रहणं नित्यं यस्यासौ**आदाननित्यः** ब्राह्मणः तस्मात्। **अदातुः** इष्टापूर्तदानरहितात्। **अप्रयच्छतः** याचनायां कृतायां अददतः। एतादृशाद्ब्राह्मणा-दपि द्वित्र्यंगसिद्ध्यर्थं बलेन चौर्येण वा आहरेत्। तथा आहृते सति आहर्तुः यशः प्रथते धर्मश्च वर्धते इत्यर्थः ।। १४ ।।

(८) **गोविन्दराजः । आदाननित्यादिति ।** प्रतिग्रहादिना आदानं धनग्रहणं नित्यं यस्यासावादाननित्यो ब्राह्मणस्तस्मादिष्टापूर्तदानरहिताद्यज्ञाङ्गयाञ्चायां कृतायामददन् चौर्येण हरेदेवं कृतोऽस्यापहर्तुः ख्यातिः प्रकाश्यते धर्मश्च वृद्धिमेति ।। १४ ।।

(९) **भारुचिः ।** अयं **चादायनित्यो** ब्राह्मण उच्यते । आदाय यो न कल्पयति धनमिष्टापूर्ताङ्गतया । तस्माद**प्रयच्छत** इदमादानमुच्यते । न त्वादाननित्यस्यापि सतो यज्ञशीलस्य । एवं च सति पूर्वश्लोकः क्षत्रियविषय एव द्रष्टव्यः । अपरे त्वादाननित्यं वार्धुषिकं मन्यते । शास्त्रप्रतिषिद्धवृद्धिगृहीतार्थमयागशीलम् । एतस्यां च कल्पनायां जातिरविवक्षिता । तथा च मन्त्रः "किं ते कृण्वन्ति कीकटेषु गावः' इत्येवमादिः ।। १४ ।।

**तथैव सप्तमे भक्ते भक्तानि षडनश्नता ।।**
**अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः ।। १५ ।।**

(१) **मेधातिथिः ।** आत्मकुटुम्बावसादेऽपि पूर्ववत्परादानं कर्तव्यम् । **अश्वस्तन**ग्रहणादेकदिनवृत्त्यर्थमेवानुजानाति नाधिकम् । **हीनकर्मण** इति कर्मार्थम् । स्मृत्यंतरे 'हीनादादेयमादौ स्यात्तदलाभे समादपि । असंभवे त्वाददीत विशिष्टादपि धार्मिकात् ।। **सप्तमे भक्ते ।** त्र्यहं येन न भुक्तं चतुर्थेऽहनि प्रातर्भोजनार्थं परादाने प्रवर्तेत । सायंप्रातर्भुञ्जीतेत्यहन्यहनि भक्तद्वयं विहितम् ।। १५ ।।

(२) **सर्वज्ञनारायणः ।** त्र्यहमुपोषितेन चतुर्थदिनेऽप्युवपासशङ्कायां तद्दिनमात्रपर्याप्तम् । **हीनकर्मणः** पतितादेरपि ।। १५ ।।

(३) **कुल्लूकः ।** सायंप्रातर्भोजनोपदेशात्त्रिरात्रोपवासे वृत्ते चतुर्थेऽहनि प्रातः सप्तमे भक्ते दानादि धर्मरहितादेकदिनपर्याप्तमर्थं चौर्यादिना हर्तव्यम् ।। १५ ।।

(४) **राघवानन्दः ।** धर्मार्थस्येव प्राणात्यय प्रायेऽपि ग्राह्यमित्याह **तथैवे**ति द्वाभ्याम् । सप्तमे चतुर्थेऽहनि प्रातर्भक्ष्ये एतत्स्पष्टयति भक्तानि षडिति । अनश्नता चातुर्वर्ण्येन **अश्वस्तनविधानेन** परदिनासंचयित्वेन हर्तव्यं चौर्यादिना । **हीनकर्मणः** कदर्यादपि ।। १५ ।।

(५) **नन्दनः ।** एवं यज्ञापदि राज्ञः कर्तव्यमुक्तमधुना क्षुत्पीडापदि पुरुषेण कर्तव्यमाह **तथैव सप्तमे भक्त** इति । सप्तमे भक्तानि षडनश्नता त्र्यहमभुञ्जानेन सप्तमे भक्ते सप्तम्यां भक्तं तु चतुर्थेऽहनि हीनकर्मणः स्वस्माद्धीनकर्मणः पुरुषात् अश्वस्तननिधानाय श्वोभवं श्वस्तनं निधानं न्यासः श्वस्तनञ्च तन्निधानं चेति श्वस्तनन्निधानं तदभावायाश्वस्तननिधानाय एवमापद्विषये परस्वहरणं यथोक्तं कुर्वन्राज्ञा न दण्ड्यः ।। १५ ।।

(६) **रामचन्द्रः ।** सप्तमे भक्ते चतुर्थदिने षट्भक्तानि अन्नानि अनश्नता त्रीणि दिनानि अनश्नता **हीनकर्मणः** शूद्रात् अश्वस्तनविधानेन एकदिनपर्याप्तं अन्नादानं कर्तव्यम् ।। १५ ।।

(७) **मणिरामः ।** तथैव षडनश्नता सायंप्रातर्भोजनोपदेशात् त्रिरात्रोपवासे जाते सप्तमे भक्ते चतुर्थेऽहनि । **हीनकर्मणः** दानादि धर्मरहितादपि । **अश्वस्तनविधानेन** एकदिनपर्याप्तम् । भक्तानि अन्नं हर्तव्यं चौर्यादिनापीत्यर्थः ।। १५ ।।

(८) **गोविन्दराजः।** **तथेति।** सायंप्रातर्भोजनोपदेशात्त्र्यहमनुभुक्ते चतुर्थे प्रातः सप्तमे भक्ते यागादि कर्मरहितादाह्निकमात्रपर्याप्तं यथैव यज्ञाप्रतिरोधस्तथैव हर्तव्यम् ।। १५ ।।

(९) **भारुचिः।** आत्मकुटुम्बक्षुदवसादेनापि निमित्तेन पूर्ववत् परधनं शिष्यते। ब्राह्मणस्य विशेषेणेत्येतदनुवर्तते। **अश्वस्तननिधानायेति** वचनात्, आहोरात्रिकमादेय परिणामनुजानाति नाधिकम्। **हीनकर्मण** इति च क्रमार्थमिदं वचनम्। तथा च स्मृत्यन्तरं "हीनादादेयमादौ स्यात्तदलाभे समादपि। असम्भवे त्वाददीत विशिष्टादपि धार्मिकात्"। एवं च सति पूर्वस्याप्ययमेव क्रमो विज्ञेयः। तथा च गौतमः "द्रव्यादानं विवाहसिद्धयर्थं धर्मतन्त्रसंयोगे च शूद्रादन्यत्रापि शूद्रात्" इति।। १५ ।।

**खलात्क्षेत्रादगाराद्वा यतो वाप्युपलभ्यते ।।**
**आख्यातव्यं तु तत्तस्मै पृच्छते यदि पृच्छति ।। १६ ।।**

(१) **मेधातिथिः।** **यतो** वापीति आरामादेरपि। **आख्यातव्यं पृच्छत** इत्येव। **यदि पृच्छतीति** वचनं न हठात्पुनः प्रेषणादिना प्रश्नमसौ कारयितव्यः। अथवा **पृच्छते** धनस्वामिने, यदि पृच्छति राजेति। 'राजपुरं नीत्वैव' विषयभेदो दर्शयितव्यः। तथा च गौतमः (अ. १८ सू. ३०) 'आचक्षीत राज्ञा पृष्टः' इति। **भक्तच्छेदे** यज्ञप्रतिबन्धतः प्रकरणविशेषादुभयत्रायं विधिर्ज्ञेयः ।। १६ ।।

(२) **सर्वज्ञनारायणः।** खलादेरपि रक्षितात्स्वयमेवाहर्तव्यं प्रार्थनेन वा ग्राह्यम्। न तेनास्य पतितग्रहणदोषः। दिने वारद्वयभोजननियमाद्भोजनद्वयं भवतीति व्यवस्थया सप्तमे भक्त इत्युक्तम्। आख्यातव्यमिति तस्मै तथाऽन्यस्मा अपि अरक्षितादाने कुतः प्राप्तमिदमिति पृष्टेन नाक्षेप्तव्यं तथापत्युरित्यर्थः।। १६ ।।

(३) **कुल्लूकः।** धान्यादिमर्दनस्थानात्क्षेत्राद्वा गृहाद्वा यतो वाऽन्यस्मात्प्रदेशाद्धान्यं हीनकर्म संबन्धि लभ्यते ततो हर्तव्यं यदि वासौ धनस्वामी **पृच्छति** किन्निमित्तं कृतमिति पृच्छते निमित्तं चौर्यादि वक्तव्यम् ।। १६ ।।

(४) **राघवानन्दः।** हरणस्थलान्याह **खलेति।** **खलात्** प्राङ्गणात्। त्वया हृतमेतदिति यदि पृच्छति तदा तस्मै पृच्छते मया हृतमेतदिति वक्तव्यम् ।। १६ ।।

(५) **नन्दनः।** अश्वस्तननिधानाय भक्तं द्रव्यं कुतो हर्तव्यमित्यपेक्षायामाह **खलात्क्षेत्रादगाराद्वेति।** यतो वाप्युपपद्य लभ्यते ततो हर्तव्यमित्यनुषञ्जनीयम् ।। १६ ।।

(६) **रामचन्द्रः।** **यतः** स्थानात् ।। १६ ।।

(७) **मणिरामः।** **तस्मै** धनस्वामिने **आख्यातव्यं** चौर्येण मया गृहीतमिति सत्यं वक्तव्यं यदि पृच्छति तदा वक्तव्यं नान्यथेत्यर्थः ।। १६ ।।

(८) **गोविन्दराजः।** **खलादिति।** धान्यादि क्षोदनात्क्षेत्राद्वा यतो वान्यस्माद्देशाद्धीनकर्मसम्बन्धेन लभ्यते ततो हर्तव्यं यदि वासौ धनस्वामी पृच्छति तदा तस्य पृच्छतः तच्चौर्यं सनिमित्तकम् ।। १६ ।।

(९) **भारुचिः।** एवं च खलादिग्रहणात् धान्यमिदं विज्ञेयं भोजनार्थीयं तथा च सप्तमे भक्त इत्युक्तम्। धनस्वामिने **पृच्छते** सुप्तमुत्थाप्य जाग्रित्वा **यदि पृच्छति। अथवाख्यातव्यं तत्तस्मै पृच्छते** धनस्वामिने **यदि** जाग्रद्धनापहर्तारं **पृच्छति,** न बलादुत्थाप्याख्यातव्यम्। अथवा **यदि पृच्छति** राजा धनस्वामिना राजपुरूषैर्वा राजसमीपमानीतम्। तथा च गौतमः "आचक्षीत राज्ञा पृष्टः" इति धनापहरणप्रयोजनम्। अयं च परादानप्रतिरोधेऽपि समानत्वात् कारणस्य विज्ञेयः।। १६।।

**ब्राह्मणस्वं न हर्तव्यं क्षत्रियेण कदाचन।।**
**दस्युनिष्क्रिययोस्तु स्वमजीवन्हर्तुमर्हति।। १७।।**

(१) **मेधातिथिः। क्षत्रियेणेति।** क्षत्रियग्रहणं वैश्यशूद्रयोरपि प्रदर्शनार्थम्। **कदाचनेति** महत्यामापदीत्यर्थः। **दस्युनिष्क्रिययोर्ब्राह्मणयो**रेव। 'दस्यु'स्तस्करो 'निष्क्रिय'स्त्वकर्माऽनाश्रमी।। १७।।

(२) **सर्वज्ञनारायणः। दस्युः** शूद्रः **निष्क्रियौ** क्षत्रियविशौ तेषां वित्तमजीवन्क्षत्रियो राजा गृह्णीयात्।। १७।।

(३) **कुल्लूकः।** उक्तेष्वपि निमित्तेषु क्षत्रियेण ब्राह्मणस्य धनं ततोऽपकृष्टत्वान्न हर्तव्यं समानन्यायतया तु वैश्यशूद्राभ्यामुत्कृष्टजातितो न हर्तव्यं प्रतिषिद्धकृद्विहितानुष्ठायिनोः पुनर्ब्राह्मणक्षत्रिययोरत्यन्तापदि क्षत्रियो हर्तुमर्हति।। १७।।

(४) **राघवानन्दः।** तत्र प्रतिप्रसवमाह **ब्राह्मणेति।** क्षत्रियेणेत्युपलक्षणं वैश्यशूद्रयोः **दस्युनिष्क्रिययोः। अजीवन्** वृत्त्यन्तराभावात्। **निष्क्रियो** धर्महीनः।। १७।।

(५) **नन्दनः।** तद्द्रव्यं तस्मै स्वामिने जात्या स्वस्मादपकृष्टाद्धर्तव्यं नोत्कृष्टादित्याह **ब्राह्मणस्वं न हर्तव्यमिति।** ब्राह्मणक्षत्रियग्रहणमुत्कृष्टापकृष्टजात्युपलक्षणार्थम्। अस्यापवादेनोत्तरार्धेनोक्तं **दस्युः** सहिंसः निष्क्रियस्त्यक्तनिजधर्मक्रियः दस्युनिष्क्रिययोर्ब्राह्मणयोरिति विपरिणामः **अजीवन्**वृत्तिहीनः।। १७।।

(६) **रामचन्द्रः।** दस्यति यः सः **दस्युः निष्क्रियः** तस्करानाश्रमिणौ तयोः स्वं द्रव्यं क्षत्रियः अजीवन् हर्तुं स्वीकर्तुं अर्हति।। १७।।

(७) **मणिरामः।** दस्युनिष्क्रिययोस्तु स्वं प्रतिषिद्धकृद्विहितानुष्ठायिनोः ब्राह्मणक्षत्रियोरपि धनं अत्यंतापदि हर्तव्यमित्यर्थः।। १७।।

(८) **गोविन्दराजः। ब्राह्मणस्वमिति।** उक्तेष्वपि निमित्तेषु ब्राह्मणधनं क्षत्रियेण न हर्तव्यम्। अर्थाच्च वैश्यशूद्राभ्यां अपि न हर्तव्यम्। प्रतिषिद्धकृद्विहिताननुष्ठानयोः पुनर्ब्राह्मणयोरत्यन्तापदि क्षत्रियो हर्तुमर्हति।। १७।।

(९) **भारुचिः।** कदाचिदपि यथोक्तायामपि अवस्थायाम्। एवं च दण्डापूपिकया वैश्यशूद्रयोरपि प्रतिषेधो विज्ञेयः। ब्राह्मणस्य ब्राह्मणस्वापहरणेऽप्रतिषेधः। तथा चोक्तम् "आदाननित्याच्चादातुः" इति। कारणात् पूर्वप्रतिषेधविषये प्रतिप्रसवोऽयं विज्ञेयः। एवं च ब्राह्मणस्य श्रेयसोऽपि ब्राह्मणादेतदनुज्ञातं भवति।। १७।।

**योऽसाधुभ्योऽर्थमादाय साधुभ्यः संप्रयच्छति ॥**
**स कृत्वा प्लवमात्मानं संतारयति तावुभौ ॥ १८ ॥**

(१) **मेधातिथिः।** **प्लवः** समुद्रतरणः। **उभौ** यस्यापहरति यस्मै च प्रयच्छति। शेषोऽर्थवादः ॥ १८ ॥

(२) **सर्वज्ञनारायणः।** आत्मानं प्लवं कृत्वेत्यात्मनस्तरणं तारणं परस्येति दर्शयति। तथा च राजा दस्युनिष्क्रिययोर्द्रव्यं गृहीत्वापि देयमित्यर्थः। तावुभावित्यर्थलाभेन साधूनन्यांश्च तद्वित्तविनियोगेन ॥ १८ ॥

(३) **कुल्लूकः।** यो हीनकर्मादिभ्य उत्कृष्टेभ्योऽभिहितेष्वपि निमित्तेषूक्तानुरूपं यज्ञाङ्गादि साधनं कृत्वा **साधुभ्य** उत्कृष्टेभ्य ऋत्विगादिभ्यो धनं ददाति स यस्यापहरति तद्दुरितं नाशयति यस्मै तद्ददाति तद्दौर्गत्याभिघातादित्येवं द्वावप्यात्मानमुडुपं कृत्वा दुःखान्मोचयति ॥ १८ ॥

(४) **राघवानन्दः।** चातुर्वर्ण्यस्य बलबुद्धिगतः उपायान्तरमाह **य इति। असाधुभ्यो** दस्य्वादिभ्यः। **साधुभ्यो** यागादिशीलेभ्यः। **उभौ** दातृप्रतिग्राहकौ। **प्लवं** प्लवस्थानीयम् ॥ १८ ॥

(५) **नन्दनः।** अपरमपि परस्वादानविषयमाह **योऽसाधुभ्योऽर्थमादायेति। असाधुभ्योऽयज्ञशीलेभ्यः** ता उभौ तानुभयान् ॥ १८ ॥

(६) **रामचन्द्रः।** यः असाधुभ्योऽर्थं आदाय साधुभ्यः संप्रयच्छति सः क्षत्रियः आत्मानं **प्लवं** तरणसाधनं कृत्वा **तौ उभौ** असाधुसाधू संतारयति ॥ १८ ॥

(७) **मणिरामः।** सः पुरुषः आत्मानं **प्लवं** उडुपं कृत्वा **उभौ** यस्मादसाधुतः धनं गृह्णाति यस्मै च साधवे यज्ञाङ्गादि साधनं कृत्वा प्रयच्छति तावुभौ संतारयति ॥ १९ ॥

(८) **गोविन्दराजः। य इति।** यो हीनकर्मादिभ्यः संप्रयच्छति स कृत्वा प्लवमात्मानमुक्तेभ्यो विहितेषु निमित्तेषु उक्तरूपं यज्ञाङ्गादि धनं हृत्वा **साधुभ्य** ऋत्विगादिभ्यो ददाति स यस्यापहरति तं धनसंरक्षणदुःखाद्यस्यैव ददाति तं दौर्गत्यादिरित्येवं द्वावपि तौ नौ रूपमात्मानं कृत्वा दुःखान्मोचयति ॥ १८ ॥

(९) **भारुचिः।** धनस्वाम्यप्यहर्तारौ। गृहीतमेव धनापहर्तारं यज्ञप्रतिरोधेन निमित्तेनानिगृह्णतः पूजयतश्च राज्ञ इदमुच्यते परानुगृहीतृत्वात्। एतच्चासाधुभ्यो यज्ञार्थमादीयमानं साधुनोपेक्षया राज्ञैव दत्तं भवति। यथा इदमुच्यते ॥ १९ ॥

**यद्धनं यज्ञशीलानां देवस्वं तद्विदुर्बुधाः ॥**
**अयज्वनां तु यद्वित्तमासुरस्वं तदुच्यते ॥ १९ ॥**

(१) **मेधातिथिः।** अयमस्यार्थवाद एव। 'गुणवद्भ्यो नापहर्तव्यं निर्गुणेभ्यस्तु न दोषः' ॥ १९ ॥

(२) **सर्वज्ञनारायणः** । यद्धनमित्यस्यैव शेषः ।। १९ ।।

(३) **कुल्लूकः** । यज्ञशीलानां यद्धनं तद्यागादौ विनियोगाद्देवस्वं विद्वांसो मन्यन्ते यागादि शून्यानान्तु यद्द्रव्यं तद्धर्मविनियोगाभावादासुरस्वमुच्यते अतस्तदप्यपहृत्य **याग-संपादनात्तद्देवस्वं** कर्तव्यम् ।। १९ ।।

(४) **राघवानन्दः** । यज्वाऽयज्वनोर्धनेषु देवासुरस्वदृष्टिमारोपयति **यदिति** ।। १९ ।।

(५) **नन्दनः** । अत्रोपपत्तिमाह **यद्धनं यज्ञशीलानामिति** । ।। १९ ।।

(६) **रामचन्द्रः** । **देवस्वं** देवांशम् । **असुरांशं** दैत्यांशम् ।। १९ ।।

(८) **गोविन्दराजः** । यस्मात् **धनं यद्यज्ञशीलानामिति** । यजनस्वभावानां सम्बन्धि यद्द्रव्यं तद्यागादिविनियोगाद्देवस्वं विद्वांसो मन्यन्ते । यागशून्यानां यत्पुनर्द्रव्यं तद्विकर्मविनि-योगाद्धर्माभावादसुरसंबन्धि । अतस्तदपहृत्य यागसंपादनेन देवस्वं कर्तव्यम् ।। १९ ।।

(९) **भारुचिः** । यस्मात् तस्मात् युक्ता तत्र राज्ञ उपेक्षा, एतां शास्त्रपरिभाषामन्व-वेक्ष्य । एवं च सति ।। १९ ।।

**न तस्मिन्धारयेद्दण्डं धार्मिकः पृथिवीपतिः ।।**
**क्षत्रियस्य हि बालिश्याद्ब्राह्मणः सीदति क्षुधा ।। २० ।।**

(१) **मेधातिथिः** । अस्मिन्निमित्ते चौरत्वेनानीतेभ्यो राज्ञा दण्डो न कर्तव्यः । यतस्तस्यैव **बालिश्यान्मौर्ख्यात् क्षुधाऽवसीदति** । क्षुधेत्यविवक्षितमुभयोः प्रकरणादर्थ-वादत्त्वाच्च ।। २० ।।

(२) **सर्वज्ञनारायणः** । तस्मिन्निति तत्पदं व्यवहितवाचि येनाश्वस्तनविधानेन त्रिरात्रोप [वासादिनाऽ]र्थ (हरणं) कृतं तस्मिन्नित्यर्थः । **बालिश्यादज्ञानात्** ।। २० ।।

(३) **कुल्लूकः** । तस्मिन्नुक्तनिमित्ते चौर्यबलात्कारं कुर्वाणे धर्मप्रधानो राजा दण्डं न कुर्यात् यस्माद्राज्ञो मूढत्वाद्ब्राह्मणः क्षुधावसादं प्राप्नोति ।। २० ।।

(४) **राघवानन्दः** । आरोपस्य फलमाह **नेति** । **तस्मिन्नासुर**धनहारिणि ब्राह्मणे । ब्राह्मणस्यान्यधनापहरणं क्षुधासीदनं वा क्षत्रियस्यैवापराध इत्याह क्षत्रियस्येति ।। २० ।।

(६) **रामचन्द्रः** । **तस्मिन्ब्राह्मणे** क्षत्रियस्य बालिश्यात् ।। २० ।।

(७) **मणिरामः** । तस्मिन् यज्ञांगसिद्ध्यर्थं चौर्यादिना धनग्राहको **बालिश्यात् मौर्ख्यात्** ।। २० ।।

(८) **गोविन्दराजः** । **नेति** । तस्मिन् निमित्तेषु चौर्यं कुर्वाण ब्राह्मणे धर्मप्रधानो राजा दण्डं न कुर्यात् । यस्माद्दानमौर्ख्यात् ब्राह्मणः क्षुदवसादं प्राप्नोति ।। २० ।।

(९) **भारुचिः** । **क्षुत्** लिङ्गं चैतदुभयत्रापि समानप्रकरणत्वाद् विज्ञेयम् ।। २० ।।

**तस्य भृत्यजनं ज्ञात्वा स्वकुटुम्बान्महीपतिः ॥**
**श्रुतशीले च विज्ञाय वृत्तिं धर्म्यां प्रकल्पयेत् ॥ २१ ॥**

(१) **मेधातिथिः।** **धर्म्यां** वृत्तिर्यया नित्यकर्माण्यपि संपद्यन्ते। क्षीणकोशेनापि महिषीराजपुत्रादिकल्पितादायाद्विहिताच्च धनाच्च किंचिदवकृष्य दातव्यमिति। **स्वकुटुम्बा-**दित्यादिना महाधनस्यैव राज्ञोऽयं विधिः। 'सर्वरत्नानीति' वचनात् ॥ २१ ॥

(२) **सर्वज्ञनारायणः।** **तस्य** ब्राह्मणस्य। **कुटुम्बात्** स्वकुटुम्बमध्यांशकाद्धनात्। **शीलं** वृत्तम्। **धर्म्यां** असद्दानादिव्यतिरिक्ताम् ॥ २१ ॥

(३) **कुल्लूकः।** ततश्च **तस्येति।** **तस्य** ब्राह्मणस्यावश्यभरणीयपुत्रादिवर्गं ज्ञात्वा श्रुताचारोचिततदनुरूपां वृत्तिं स्वगृहाद्राजा कल्पयेत् ॥ २१ ॥

(४) **राघवानन्दः।** अत आह **तस्येति** द्वाभ्याम्। **भृत्यजनं** पोष्यजनम्। स्वकुटु-म्बादपि धर्म्यां स्वधर्मोत्पत्तये हेतुभूताम् ॥ २१ ॥

(५) **नन्दनः।** **तस्य** ब्राह्मणस्य ॥ २१ ॥

(६) **रामचन्द्रः।** **स्वकुटुम्बात्** गृहात् **तस्य** ब्राह्मणस्य **श्रुतिशीले** वेदाभ्यासरते ॥ २१ ॥

(७) **मणिरामः।** **तस्य** क्षुधया पीडयमानस्य ब्राह्मणस्य ॥ २१ ॥

(८) **गोविन्दराजः।** तथा चाह **तस्येति।** तस्य ब्राह्मणस्यावश्यभरणीयपुत्रादि परिमाणं विज्ञायानुष्ठानबुद्धौ तदनुरूपां जीविकां धर्मादनपेतां स्वगृहाद्राजा प्रकल्पयेत् ॥ २१ ॥

(९) **भारुचिः।** क्षुदवसन्नात्मकभृत्यस्यैतदुच्यते विशेषेण ॥ २१ ॥

**कल्पयित्वास्य वृत्तिं च रक्षेदेनं समन्ततः ॥**
**राजा हि धर्मषड्भागं तस्मात्प्राप्नोति रक्षितात् ॥ २२ ॥**

(१) **मेधातिथिः।** स्पष्टार्थोऽयं श्लोकः ॥ २२ ॥

(२) **सर्वज्ञनारायणः।** वृत्तिं दानादिना। रक्षेच्चौरादेः ॥ २२ ॥

(३) **कुल्लूकः।** **अस्य** ब्राह्मणस्य जीविकां विधाय शत्रुचौरादेः सर्वतो रक्षेत् यस्माद् ब्राह्मणाद्रक्षितात्तस्य धर्मषड्भागं प्राप्नोति ॥ २२ ॥

(४) **राघवानन्दः।** रक्षेत्ताम्रपट्टलिखितादिना ब्राह्मणरक्षणे परमलाभ इत्याह राजेति। बलिषड्भागमिव रक्षितात्प्रजारूपात्तद्धर्मात् षड्भागमाप्नोतीत्यन्वयः ॥ २२ ॥

(५) **नन्दनः।** समन्ततः सर्वापद्भ्यः फलं षड्भागं यत्पुण्यं प्रत्यहं क्रियते तस्य फलषड्भागम् ॥ २२ ॥

(६) **रामचन्द्रः।** **अस्य** द्विजस्य वृत्तिं कल्पयित्वा **एनं** द्विजं **तस्मात्** द्विजात् धर्मस्य षड्भागं आप्नोति ॥ २२ ॥

(७) **मणिरामः ।** **तस्मात्** ब्राह्मणात् धर्मषड्भागं प्राप्नुयात् ।। २२ ।।

(८) **गोविन्दराजः ।** **कल्पयित्वेति** । अस्य च ब्राह्मणस्य जीविकां विधाय शत्रुचौरादेः सततं चैनं रक्षेत् । यस्माद् ब्राह्मणरक्षिताद्राजा तदर्जितधर्मषट्भागं प्राप्नोति ।। २२ ।।

(९) **भारुचिः ।** शौर्यादिशंसनमात्रादपि, किं पुनस्तस्करेभ्यः, यस्मात् धर्मषड्भागग्रहणं रक्षार्थवादो विज्ञेयः ।

**न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत कर्हिचित् ।।**
**यजमानो हि भिक्षित्वा चण्डालः प्रेत्य जायते ।। २३ ।।**

(१) **मेधातिथिः ।** भिक्षणमत्र निषिध्यते । अयाचितोपपन्नं तु न दुष्यति । तथा चोक्तं 'अयाचितोपपन्नानां द्रव्याणां यः प्रतिग्रहः । विशिष्टलोकशास्त्राभ्यां तं विद्याद-प्रतिग्रहम्' ।। इति । केचित्पूर्वशेषमेव मन्यन्ते । भिक्षणे दोषदर्शनादुपायान्तरेणोक्त-मादानम् । यज्ञार्थोऽयं प्रतिषेधो न तु भृत्यभरणे ।। २३ ।।

(२) **सर्वज्ञनारायणः ।** शूद्राद्भिक्षित्वा यजमानो यागं कुर्वाणः ।। २३ ।।

(३) **कुल्लूकः ।** यज्ञसिद्धये धनं ब्राह्मणः कदाचिन्न शूद्राद्याचेत् यस्माच्छूद्राद्याचित्वा यज्ञं कुर्वाणो मृतश्चण्डालो भवति । अतो याचननिषेधाच्छूद्रादयाचितोपस्थितं यज्ञार्थ-मप्यविरुद्धम् ।। २३ ।।

(४) **राघवानन्दः ।** ननु दक्षिणार्थं गोत्रयादित्यागार्थमपि किंचिच्छूद्रात्प्रतिगृह्णीया-त्तत्राह **नेति ।** दक्षिणाया यागोत्तरकालीनत्वाद्यागस्योद्देश्यत्वाभावात् यजमानो हि तेन धनेनेति शेषः ।। २३ ।।

(५) **नन्दनः ।** पुनर्वक्ष्यमाणं प्रत्याह **न यज्ञार्थं धनमिति ।** अत्र हेतुरुत्तरार्धेनोक्तः यजमानः यजन् ।। २३ ।।

(७) **मणिरामः ।** 'न भिक्षेते'त्युक्तत्वात् स्वेच्छया दत्तशूद्रधनाद्यागे न दोषः ।।२३।।

(८) **गोविन्दराजः ।** **न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत धर्मविदिति ।** धर्मज्ञो ब्राह्मणो ज्योतिष्टोमादि यज्ञसंपत्त्यर्थं शूद्राद्धनं न भिक्षेत । यस्माच्छूद्राद्धनं भिक्षित्वा यो यजते स जन्मान्तरे चाण्डालो जायते ।। २३ ।।

(९) **भारुचिः ।** निषेधोऽपि विप्रः सन् । द्वित्रिमात्राङ्गवैकल्ये तु प्रशस्तम् । न त्वद्रविणो द्विमात्राङ्गादानं कुर्याच्छूद्रादिति । अथवा भिक्षणमत्र प्रतिषिद्धं शूद्रात्, नायाचिलाभः । एवं च भिक्षणादयाचितः श्रेयानिति विज्ञायते । तथा चोक्तम् "अयाचितोपपन्नानां द्रव्याणां यः प्रतिग्रहः, स विशिष्टः शिलोञ्छाभ्यां तं विद्यादप्रतिग्रहमि"ति । अविद्यमानधनस्तु सर्वमेव यज्ञार्थं शूद्रात् । एवं निन्दार्थवादः प्रतिषिद्धार्थानुष्ठाननिवृत्त्यर्थः । कथं नामायं निन्दितं न समाचरेदिति । अथवा नित्यकर्मातिपत्तौ यः सर्वतः प्रतिग्रह उक्तः तस्यायं श्रौतस्मार्तयज्ञार्थ-प्रतिषेधः । एतस्यामवस्थायां कामं प्रतिषिद्धाभ्युपगमः स्यात् । न क्षुद्राद् भिक्षणम् । भृत्य-

भरणार्थं तु शूद्रादपि भिक्षणं न प्रतिषिद्धयते। काम्ययज्ञार्थं पुनरसत्प्रतिग्रह एव नास्ति। कुतस्तस्य प्रतिषेधः। एवं च सति यः काम्ययज्ञार्थं शूद्राद् भिक्षेत तेनोभयमतिक्रान्तं भवति' असत्प्रतिग्रहनियमो भिक्षणनियमश्च। अथवा शूद्रात्परादानस्तुतिरियम् "न यज्ञार्थं धनं शूद्राद् विप्रो भिक्षेत धर्मविदिति। कथम्। परादानमपि युक्तं शूद्रात्, न तु भिक्षण-मित्येवम् ॥ २३ ॥

**यज्ञार्थमर्थं भिक्षित्वा यो न सर्वं प्रयच्छति ॥**
**स याति भासतां विप्रः काकतां वा शतं समाः ॥ २४ ॥**

(१) **मेधातिथिः**। भिक्षितस्य यज्ञार्थपरिशेषितस्य कार्यान्तराय फलं काकताभासता-प्राप्तिः ॥ २४ ॥

(२) **सर्वज्ञनारायणः**: भिक्षित्वा द्विजेभ्योऽपि न प्रयच्छति तत्र यज्ञे न त्यजति ॥ २४ ॥

(३) **कुल्लूकः**। यज्ञसिद्ध्यर्थं धनं याचित्वा यो यज्ञे सर्वं न विनियुङ्क्ते स शतं वर्षाणि भासत्वं काकत्वं वा प्राप्नोति ॥ २४ ॥

(४) **राघवानन्दः**। त्रैवर्णिकेभ्योऽपि यज्ञार्थं यावद्धनं गृहीतं कुतश्चिन्निमित्तात्तदद-दन्पक्षिषु स्यादतस्तदवश्यं यज्ञे देयमिति सार्थवादमाह **यज्ञेति**। **भासः** पक्षिविशेषः। **समाः** अब्दान् व्याप्य ॥ २४ ॥

(५) **नन्दनः**। **भिक्षितात्** प्रतिग्राह्यात् **भासो** गृध्रविशेषः ॥ २४ ॥

(६) **रामचन्द्रः**। **अर्थं** द्रव्यम् ॥ २४ ॥

(७) **मणिरामः**। **भासः** लहटोरेति प्रसिद्धः ॥ २४ ॥

(८) **गोविन्दराजः**। **यज्ञार्थमिति**। यज्ञसंपत्त्यर्थं धनं भिक्षित्वा यः सर्वं यज्ञे ब्राह्मणे-भ्यो न ददाति स शतं वर्षाणां काकत्वं भासत्वं प्राप्नोति ॥ २४ ॥

(९) **भारुचिः**। क्षुद्रादन्येभ्यो द्विजातिभ्यो नित्यार्थं भिक्षितस्य काम्यार्थं वा नियमतः सर्वस्योपयोगार्थमिदमारब्धं वाक्यम्। अधुना विहितधर्मस्तुत्यर्थमिद-मारभ्यते ॥ २४ ॥

**देवस्वं ब्राह्मणस्वं वा लोभेनोपहिनस्ति यः ॥**
**स पापात्मा परे लोके गृध्रोच्छिष्टेन जीवति ॥ २५ ॥**

(१) **मेधातिथिः**। यागशीलानां त्रयाणां वर्णानां यद्वित्तं **तद्देवस्वम्**। ब्राह्मणस्यायाग-शीलस्यापि **यत्स्वं तद्ब्राह्मणस्वमिति**। एवमपि श्लोको गच्छत्येव। किंतु अर्थवादश्लोको-ऽसौ। 'यद् धनं यज्ञशीलानामिति', न चौर्यादिशब्दवच्छब्दार्थपरिभाषापरः। अतोऽन्यथा व्याख्यायते। देवानुद्दिश्य यागादिक्रियार्थं धनं यदुत्सृष्टं **तद्देवस्वम्**। मुख्यस्य स्वस्वामि-संबन्धस्य देवानामसंभवात्। न हि देवता इच्छया धनं नियुञ्जते। न च परिपालन-व्यापारस्तासां दृश्यते। स्वं च लोके तादृशमुच्यते। तस्माद्देवोद्देशेन यदुक्तं 'नेदं मम देवताया

इदमिति' तद्देवस्वम्। तच्च दर्शपूर्णमासादियागेष्वग्न्यादिदेवताभ्यश्चोदितम्। शिष्टसमाचारप्रसिद्धचैव गौणोपायदुर्गायागादिषु। "ननु चतुर्भुजादिप्रतिमासंबन्धि लोके देवस्वमुच्यते। लोकप्रसिद्धश्च शब्दार्थः शास्त्रे ग्रहीतुं न्याय्यः"। स्यादेवं यदि देवस्वशब्दो निर्भागः प्रसिद्धिमुपेयात्। देवानां स्वं देवस्वमित्यवयवप्रसिद्धचा समुदायार्थः प्रकृष्टः। न च वाक्यान्तरप्रकल्पना प्रमाणेनाप्यस्ति। मुख्यं चतुर्भुजादीनां देवत्वं प्रतिमाव्यवहारेणैवापहृतम्। न च व्ययोकूल (?) लक्षणमस्ति। अथ समाचारतो देवस्वं भवतु, स्वस्वामिभावस्तावन्नास्ति। यथोक्तेन च प्रकारेण स्वव्यवहारोपपत्तिरिति शिष्टं द्वितीये ॥ २५ ॥

(२) **सर्वज्ञनारायणः। देवस्वं** देवोद्देशेनोत्सृष्टं यज्वनां च धनम् ॥ २५ ॥

(३) **कुल्लूकः।** प्रतिमादिदेवतार्थमुत्सृष्टं धनं देवस्वं ब्राह्मणस्वं च यो लोभादपहरति स पापस्वभावे जन्मान्तरे गृध्रोच्छिष्टेन जीवति ॥ २५ ॥

(४) **राघवानन्दः।** यज्ञार्थे भिक्षितं **देवस्वमिति** ज्ञापयन्सदृष्टान्तनरकपातमाह **ब्राह्मणस्वमिति** दृष्टान्तार्थम्। यथा हि विप्रधनं नरकोत्पादकं तथा देवस्वमपीति। तस्मादुभयं न ग्राह्यमिति ॥ २५ ॥

(५) **नन्दनः।** एतदेवोपपादयति **देवस्वं ब्राह्मणस्वं चेति। यज्ञार्थं** यज्ञभिक्षितं तद्देवस्वं ब्राह्मणस्वं **चोपहिनस्त्य**पहरति सर्वं प्रयच्छतीति यावत् उच्छिष्टजीवनं य उपयोगार्हद्रवोच्छेषणात् ॥ २५ ॥

(६) **रामचन्द्रः। यः लोभेन देवस्वं उपहिनस्ति** नाशयति ॥ २५ ॥

(७) **मणिरामः। उपहिनस्ति** हरति। **गृध्रः** शूद्रः तदुच्छिष्टेन जीवति ॥ २५ ॥

(८) **गोविन्दराजः। देवस्वमिति।** वृद्धव्यवहारैकगोचरत्वाच्छब्दार्थसंबन्धस्य यस्य लोके देवस्वं ब्राह्मणधनं यो लोभादपहरति स पापस्वभावो जन्मान्तरे जन्मसंबन्धिनो जन्मांतरे गृध्रसंबन्धिनोच्छिष्टेन जीवति ॥ २५ ॥

(९) **भारुचिः।** देवतार्थं यत् प्रकल्प्य स्थाप्यते तद् **देवस्वम्।** प्रकरणसामर्थ्याद् यज्ञार्थं भिक्षितम्। नान्यत्। **ब्राह्मणस्वम**प्येवमेव विज्ञेयं, यद् ब्राह्मणभोजनार्थं प्रतिगृहीतं श्राद्धादिषु। समानवादार्थं च देवस्वेनास्य ग्रहणम्। एवं च सति यदिदं लोके प्रसिद्धं देवस्वं तन्नेहाभिधीयते, प्रकरणविरोधात्। चदेवतानां च ममता नास्त्यनधिकारात् शास्त्रदृष्टं यद्देवस्वं तत्संप्रदानकाल एवोद्देशसामर्थ्याद्देवस्वमिति शक्यते वक्तुम्। क्षणिकश्चासौ देवतोपभोगकालः, निवृत्ते च तस्मिन् देवतोपभोगे देवस्वं तदित्यशक्यं व्यपदेष्टुम्। एवं च सति यज्ञार्थं भिक्षितं सर्वं यज्ञ एवोपयोज्यम्। न किञ्चिदात्मोपभोगायस्थापनीयम्। यस्तु मोहान्न सर्वमुपयुङ्क्ते तस्य नियमव्यतिक्रमेऽयं निन्दार्थवादः दृष्टान्तरार्थं वा प्रसिद्धस्य ब्राह्मणस्य ग्रहणम् ॥ २५ ॥

**इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये ॥**
**क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसंभवे ॥ २६ ॥**

(१) मेधातिथिः। **वैश्वानार्या** इष्टेर्गृह्यस्मृतिभ्यः स्वरूपमवसातव्यम्। समाप्ते वर्षे द्वितीयवर्षस्य प्रवृत्तिर**ब्दपर्ययः। क्लृप्तानां** विहितानां **पशुसोमानां** नित्यानां षाण्मास्यः सांवत्सरः पशुर्नित्यं वसन्ते सोमः। तेषाम**संभवे** धनाभावादिदोषेण। **निष्कृत्यर्थं** नित्यस्याकरणे यो दोषस्तन्निवृत्त्यर्थम्। श्रुतेऽग्निनिमित्तेऽन्यकर्म समामनन्ति। तत्र केचित्समुच्चयं मन्यन्ते, सत्यप्येककार्यत्वे प्रमाणभेदेन विधानात्। तदयुक्तम्। तथा च ब्रह्महत्याप्रायश्चित्ते श्रौते स्मार्ते च स्वशब्देन विकल्पं वक्ष्यति 'अभिजिद्विश्वजिद्भ्यां च' इति ॥ २६ ॥

(२) **सर्वज्ञनारायणः। इष्टिं वैश्वानरीमिति** पशुबन्धादिककरणाशक्तस्यानुकल्पो यागप्रसंगादुक्तः। **क्लृप्तानां** नियतानामसंभवे धनाभावे न निष्कृत्यर्थं प्रत्यवायानुत्पादार्थम्। **पशुः** पशुहविष्को यागः। **सोमः** सोमहविष्कः॥ २६ ॥

(३) **कुल्लूकः।** समाप्ते वर्षे द्वितीयवर्षस्य प्रवृत्तिरब्दपर्ययं चैत्रशुक्लादिवर्षप्रवृत्तिस्तत्र वर्षान्तरे वैश्वानरीमिष्टिं विहितसोमयागासंभवे तदकरणदोषनिर्हरणार्थं सर्वदा शूद्रादित उक्तधनग्रहणरूपामिष्टिं कुर्यात्॥ २६ ॥

(४) **राघवानन्दः।** यस्य त्रैवार्षिकमित्यत्र यागस्य कर्तव्यतां सामान्यतः प्रोक्तां विशेषे स्थापयति **इष्टिमिति**। मध्वापात इत्यादि निन्दास्तु नित्यातिरिक्तविषयाः। अब्दपर्यये पूर्ववर्षसमापकोत्तरवर्षाद्यचैत्रशुक्लप्रतिपदादिकाले क्लप्तानां आवश्यकत्वेन निष्कृत्यर्थं तदकरणपापनिवृत्त्यर्थम्॥ २६ ॥

(५) **नन्दनः।** अथ पशुसोमयोः प्रत्यब्दं कर्तव्ययोरापदि प्रत्याम्नायमाह **इष्टिं वैश्वानरीं चैवेति**। नित्यमब्दं क्लप्तानामनुष्ठेयत्वेन विहितानां निष्कृत्यर्थं प्रत्याम्नायार्थं असंभवे द्रव्यासंभवे॥ २६ ॥

(६) **रामचन्द्रः।** क्लप्तानां नियतानां पशुसोमानां असंभवे अब्दपर्यये नित्यं वैश्वानरीं इष्टिं प्रायश्चित्तार्थं निर्वपेत्॥ २६ ॥

(७) **मणिरामः। अब्दपर्यये** वर्षे समाप्ते। द्वितीयवर्षस्य प्रवृत्तौ तत्र **क्लृप्तानां** नित्यत्वेनोक्तानां **पशुसोमानां असंभवे** अकरणे निष्कृत्यर्थं तदकरणदोषनिवृत्त्यर्थं **वैश्वानरीं इष्टिं निर्वपेत्** कुर्यात्॥ २६ ॥

(८) **गोविन्दराजः। इष्टिमिति** संवत्सरप्रवृत्तौ वसन्ते शास्त्रनोदितानां पशुयागसोमयागानामसंभवे तदकरणदोषनिर्वहणार्थं सर्वदा वैश्वानरदेवताकामिष्टिं गृह्याद्युक्तं वैश्वानर्यादि नानापदि योऽनुष्ठानस्वरूपं द्विजः कुर्यात्। श्रौतप्रायश्चित्तेन सहास्य विकल्पोऽश्वमेधद्वादशवार्षिकयोर्ब्रह्महत्यादिप्रायश्चित्तयोः श्रौतस्मार्तयोरपि॥ २६ ॥

(९) **भारुचिः।** यदि त्वसामर्थ्यात् पशुसोमाना शास्त्रचोदितानामनुष्ठाने न शक्नुयात्, तत इमामिष्टिं वैश्वानरीं कुर्यान्निष्कृत्यर्थम्। नित्यानां कर्मणामनुष्ठानाशक्तौ। एवं च सति इत्यकर्मातिपत्तावविरोधात् श्रौतस्य प्रायश्चित्तस्य प्रतिनिधेर्वैश्वानर्याश्च समुच्चयः। ननु चैकार्थत्वाद् विकल्पः प्राप्नोति। न ह्येकार्थता साक्षादुपलभ्यते, किं तर्हि एकं श्रौतमन्यत् स्मार्तम्। एवं च प्रमाणभिन्नयोरविकल्पः। एकप्रमाणत्वे सति तद्विकल्पो न्यायः स्यात्।

अपरे तु विकल्पमेव मन्यन्ते । तथा च ब्रह्महत्याप्रायश्चित्तयोः श्रौतस्मार्तयोर्विकल्पं वक्ष्यति । एतत् त्वापत्कल्पे नित्यकर्मातिपत्तावस्य स्यात् ।। २६ ।।

**आपत्कल्पेन यो धर्मं कुरुतेऽनापदि द्विजः ।।**
**स नाप्नोति फलं तस्य परत्रेति विचारितम् ।।२७।।**

(१) **मेधातिथिः** । आपत्कल्पप्रतिनिधिं वैश्वानरीं वा विद्यमानधनो यो गौणपक्षमाश्रयति तस्य न सोऽर्थः सिध्यति ।। २७ ।।

(२) **सर्वज्ञनारायणः** । न चैवं विभवेऽपि तन्मात्रेऽपि प्रत्यवायासंभव इत्याह **आपत्कल्पेनेति** ।। २७ ।।

(३) **कुल्लूकः** । आपद्विहितेन विधिना योऽनापदि धर्मानुष्ठानं द्विजः कुरुते तस्य तत्परलोके निष्फलं भवतीति मन्वादिभिर्विचारितम् ।। २७ ।।

(४) **राघवानन्दः** । तर्हि सामर्थ्येनापि सैवेष्टिः कार्या कृतं पशुसोमैस्तत्राह **आपदिति** द्वाभ्याम् । **आपत्कल्पेन** प्रतिनिध्यादिना करोति **तस्य** कर्मणः फलं नाप्नोति ।। २७ ।।

(५) **नन्दनः** । संभवे तु मुख्यः कल्प एव कार्यो नापत्कल्प इत्याह **आपत्कल्पेन यो धर्ममिति** ।। २७ ।।

(६) **रामचन्द्रः** । अनापदि यः द्विजः **आपत्कल्पेन** आपत्कालसदृशेन व्यवहारेण धर्मं करोति तस्य धर्मस्य फलं न प्राप्नोति ।। २७ ।।

(८) **गोविन्दराजः** । **आपत्कल्प इति** । आपच्चोदितेन विधिना वैश्वानर्यादि नानापदि योऽनुष्ठानं द्विजः कुरुते तस्य परलोके तं निष्फलं भवति इति मन्वादिभिर्विचारितम् ।। २७ ।।

(९) **भारुचिः** । एवं च सति न विद्यमानधनो वैश्वानरीं कुर्यात् पशुसोमवैकल्पिकीं, प्रायश्चित्तप्रतिनिधिं वेति ।। २७ ।।

**विश्वैश्च देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः ।।**
**आपत्सु मरणाद्भीतैर्विधेः प्रतिनिधिः कृतः ।।२८।।**

(१) **मेधातिथिः** । एष एवार्थः 'आपदि प्रतिनिधिराश्रयितव्यो न संपदि' ।। २८ ।।

(२) **सर्वज्ञनारायणः** । मरणाद्भीतैर्नासोमपो म्रियेतेत्यादिनिषिद्धोऽसोमपादिर्मरणभीतेः । विधेर्विहितस्य प्रतिनिधिः प्रतिरूपकः ।। २८ ।।

(३) **कुल्लूकः** । विश्वेदेवाख्यैर्देवैः साध्यैश्च तथा महर्षिभिर्ब्राह्मणैर्मरणाद्भीतैरापत्सु मुख्यस्य विधेः सोमादेर्वैश्वानर्यादिः प्रतिनिधिरनुष्ठितोऽसौ मुख्यासंभवे कार्यः न तु मुख्यः संभवे ।। २८ ।।

(४) **राघवानन्दः** । मरणादावश्यकानामकरणात्तज्जन्यनरकाद्वा भीतैस्तैः प्रतिनिधिः सोमाद्यभावे वैश्वानर्यादि च त्रयं समुच्चयः ।। २८ ।।

(५) **नन्दनः**। आपदि त्वकरणादापत्कल्प एव श्रेयानिति परकृतिरूपेणार्थवादेनाह **विश्वैश्च देवैरिति** ।। २८ ।।

(६) **रामचन्द्रः**। **विधेर्विहितस्य** पशुबन्धादिकर्मणः प्रतिनिधिः कृतः ।। २८ ।।

(७) **मणिरामः**। **विधेः** वेदविहितस्य नित्यस्य सोमादेः । **प्रतिनिधिः** वैश्वानर्यादिरिष्टिः कृतः ।। २८ ।।

(८) **गोविन्दराजः**। **वैश्वैरिति**। वैश्वैर्देवैराख्यैर्देवैः साध्यैश्च तथा महर्षिभिः ब्राह्मणैर्मरणाद्भीतैरापत्सु मुख्यविधेः सोमादेर्वैश्वानर्यादि प्रतिनिधिरनुष्ठितोऽतोऽसौ मुख्यासंभवे कार्यो न तु तत्संभवे ।। २८ ।।

**प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।।**
**न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ।। २९ ।।**

(१) **मेधातिथिः**। **सांपरायिकं** पारलौकिकमयमपि पूर्वशेषोऽर्थवादः । ।। २९ ।।

(२) **सर्वज्ञनारायणः**। **प्रभुः** शक्तः । **प्रथमकल्पस्य** मुख्यस्य । **अनुकल्पेन** प्रतिनिध्यादिना । **सांपरायिकं** पारलौकिकम् ऐहिककीर्त्यादेस्तु लाभो भवत्येव ।। २९ ।।

(३) **कुल्लूकः**। यो मुख्यानुष्ठानसंपन्नः सन् आपद्विहितेन प्रतिनिधिनाऽनुष्ठानं करोति तस्य दुर्बुद्धेः पारलौकिकमभ्युदयरूपं प्रत्यवायपरिहारार्थं फलं च न भवति आपत्कल्पेन यो धर्ममित्यनेनोक्तमप्येतच्छास्त्रादरार्थं पुनरुच्यते ।। २९ ।।

(४) **राघवानन्दः**। समर्थस्यापत्कल्पप्रवर्तने बाधकमाह **प्रभुरिति**। प्रभुर्मुख्यकरणे समर्थः । **सांपरायिकं** पारलौकिकम् ।। २९ ।।

(५) **नन्दनः**। शक्तो मुख्यकल्पमेव कुर्यान्नानुकल्पमित्याह **प्रभुः प्रथमकल्पस्येति**। **प्रभुः** शक्तः **प्रथमकल्पस्य** मुख्यकल्पस्य सांपरायो विपत्तित उत्तारकं सांपरायिकं उक्तस्यार्थस्य पुनर्वचनमादरार्थम् ।। २९ ।।

(६) **रामचन्द्रः**। शक्तः तस्य अनुकल्पकर्तुः **सांपरायिकं** पारलौकिकं फलं न विद्यते ।। २९ ।।

(७) **मणिरामः**। **सांपरायिकं** पारलौकिकम् ।। २९ ।।

(८) **गोविन्दराजः**। **प्रभुरिति**। यो मुख्यानुष्ठानसमर्थः सन्नापश्चोदितेन प्रतिनिधेरनुष्ठानं करोति तस्य दुर्बुद्धेः पारलौकिकमभ्युदयप्रत्यवायाभावाख्यं न भवतीत्यापत्कल्पेन यो धर्म इत्यनेनोक्तमप्येतदुपसंहारार्थं पुनरुच्यते ।। २९ ।।

(९) **भारुचिः**। तस्मात् परेण यत्नेन नित्यकर्मार्थमुद्यच्छतस्तदशक्तावेतद् भवेत् । न सति सामर्थ्ये इति । यश्च धर्मतन्त्रसङ्गे सति परापहरणादिषु प्रवर्तमानः केनचिद् राजपुरुषेण कथंचिद् बाध्यते, ततो बाध्यमानोऽपि असौ ।। २९ ।।

**न ब्राह्मणो वेदयेत किंचिद्राजनि धर्मवित् ।।**
**स्ववीर्येणैव तान् शिष्यान्मानवानपकारिणः ।।३०।।**

(१) **मेधातिथिः** । निमित्तेऽभिचारो न दोषायेति श्लोकार्थः । न त्वभिचारो विधीयते । न च राजनि वेदनं प्रतिषिध्यते । केवले सति निमित्तेऽभिचरितुं प्रवृत्तो राज्ञा न किंचिद्वक्तव्यः । तथा वक्ष्यति 'विधाता शासिता वक्ता' इति । 'तस्मै नाकुशलं ब्रूयात्' इति राजेति प्रतीयते । **शिष्यादिति** । सत्यपि विधौ राजनि निवेदयेत् । न च प्रतिषेध उपसंहारश्लोकपर्यालोचनया तत्परमवतिष्ठते । निमित्तानि चोक्तानि 'भार्यातिक्रमकारी' चेत्यादीनि । **किंचित्पीडा**-निमित्तं 'अनेन मे कृतमिति' राज्ञे **निवेदयेत्** । **धर्मवित्** अभिचारविधिज्ञः । **स्ववीर्येण** मन्त्रा-भिशापाभ्याम् । तत्रैवोत्तरश्लोकार्थः ।। ३० ।।

(२) **सर्वज्ञनारायणः** । अत्र प्रसंगात्प्रायश्चित्तस्य वक्ष्यमाणस्य ब्राह्मणेन स्वशत्रावभि-चारेण मार्यमाणे भाव्यो राज्ञ इवास्य शत्रुवध इत्याह **न ब्राह्मण इति** । **वेदयेत** निवेदयेत् ।। ३० ।।

(३) **कुल्लूकः** । धर्मज्ञो ब्राह्मणः किंचिदप्यपकृतं न राज्ञः कथयेत् अपि तु स्वशक्त्यैव वक्ष्यमाणाभिचारादिनापकारिणो मनुष्यान्निगृह्णीयात् ततश्च स्वकीयधर्मविरोधादपकृष्टा-पराधकरणे सत्यभिचारादि न दोषायेत्येवं परमेतन्नत्वभिचारो विधीयते राजनिवेदनं वा निषिध्यते ।। ३० ।।

(४) **राघवानन्दः** । अदृष्टभये ब्राह्मणस्य तप एव साधनं दृष्टभये तु किं स्यात्तत्राह-**नेति** पञ्चभिः । वेदयेत न **निवेदयेत्** ममेदपकृतमिति । **स्ववीर्येण** तप आदिना शिष्यान्नि-गृह्णीयात् ।। ३० ।।

(५) **नन्दनः** । अथ शत्रुपीडापदि ब्राह्मणस्य कर्तव्यमाह **न ब्राह्मणो वेदयेतेति** । किञ्चिदपहरणम् ।। ३० ।।

(६) **रामचन्द्रः** । ब्राह्मणः राजनि किंचित् स्ववीर्येणैव अभिचारं वर्तयन् **न वेदयेत्** न निवेदयेत् ।। ३० ।।

(७) **मणिरामः** । **धर्मवित्** धर्मज्ञः ब्राह्मणः किंचिदपि अपकृतं **राजनि** राज्ञे **न निवेदयेत** न कथयेत् अनपकारिणः तान् मानवान् स्ववीर्येणैव **शिष्यात्** दंडयेत् ।। ३० ।।

(८) **गोविन्दराजः** । **नेति** । धर्मज्ञो ब्राह्मणो न किंचिदपि अपराधजातं राज्ञः कथयेदपि तु शक्त्यैव वक्ष्यमाणाभिचारकरणेनैव तान् मनुष्यानपराद्धान् निगृह्णीयादिति शरीरधर्मस्तन्न व्यासाङ्गहेतुप्रकृष्टापराधकरणे सत्यभिचरणीयाभिचारो न दोषायेत्येवं परमेतन्न व्यभिचारो विधीयते । नापि राजनिवेदनं निषिध्यते । कस्मात्पुनरवेमुच्यते ।। ३० ।।

**स्ववीर्याद्राजवीर्याच्च स्ववीर्यं बलवत्तरम् ।।**
**तस्मात्स्वेनैव वीर्येण निगृह्णीयादरीन्द्विजः ।। ३१ ।।**

(१) **मेधातिथिः** । राजा कदाचिदनिपुणतया न निग्रहेण प्रवर्तेत स्वतस्तु न कदा-चिदुपेक्षेति स्ववीर्यं बलीयः ।। ३१ ।।

(२) **सर्वज्ञनारायणः** । **बलवत्तरमधिकं** प्रयत्नाधिक्यसंभवात् ।। ३१ ।।

(३) **कुल्लूकः** । यस्मात्स्वसामर्थ्याद्राजसामर्थ्याच्च पराधीनराजसामर्थ्यापेक्षया स्वसामर्थ्यमेव स्वाधीनत्वाद्बलीयः तस्मात्स्वेन वीर्येणैव शत्रून्ब्राह्मणो **निगृह्णीयात्** ।। ३१ ।।

(४) **राघवानन्दः** । तत्र हेतुः **स्ववीर्यादिति** । राजवीर्यस्य धनाद्युपाधिदर्शनात् ।। ३१ ।।

(५) **नन्दनः** । अत्र हेतुमाह **स्ववीर्याद्राजवीर्याच्चे**ति । **द्विजः** द्विजोत्तमः ।। ३१ ।।

(७) **मणिरामः** । तत्र हेतुमाह **स्ववीर्यादिति** ।। ३१ ।।

(८) **गोविन्दराजः** । यस्मात् **स्ववीर्यादिति** । यस्माद्राजशक्तितः स्वशक्तिः प्रकृष्टा स्वाधीनत्वात् तस्माद्ब्राह्मणः शत्रून्निगृह्णीयात् ।। ३१ ।।

**श्रुतीरथर्वाङ्गिरसीः कुर्यादित्यविचारयन् ।।**
**वाक्शस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन्द्विजः ।। ३२ ।।**

(१) **मेधातिथिः** । किं तत्स्ववीर्यमिति शङ्कानिवृत्त्यर्थोऽयं श्लोकः । श्रूयन्त इति **श्रुतयः** । अथर्वणवेदे येऽभिचारप्रकाराः श्रुतास्ते कर्तव्या इत्यर्थः । बाहुल्येन तत्राभिचाराणां विधानात् अथर्वाङ्गिरसग्रहणम्, न पुनरन्येषु वेदेष्वननुज्ञातम् । अथवाऽभिचारश्रुतयोऽथर्वाङ्गिरसशब्देनोच्यन्ते । अथवाथर्वणशब्दा एवंविध एवार्थे प्रयुज्यन्ते 'यज्ञोऽथर्वणवित्काम्य' इति ।। ३२ ।।

(२) **सर्वज्ञनारायणः** । श्रुतीरथर्वाङ्गिरसीः तच्छ्रुत्युदितानि कर्माणि कुर्यात् इत्यनेन हेतुनेत्यर्थः । अभिचारयन्नभिचारं प्रवर्तयन् ।। ३२ ।।

(३) **कुल्लूकः** । तत्किं स्ववीर्यमित्याह **श्रुतीरिति** । अथर्ववेदस्याङ्गिरसीर्दृष्टाभिचारश्रुतीरविचारयन्कुर्यात्तदर्थमभिचारमनुतिष्ठेदित्यर्थः । यस्मादभिचारमन्त्रोच्चारणात्मिका ब्राह्मणस्य वागेव शस्त्रकार्यकरणाच्छस्त्रं तेन ब्राह्मणः शत्रून्हन्यान्न तु शत्रुनिग्रहाय राजा वाच्यः ।। ३२ ।।

(४) **राघवानन्दः** । **अथर्वाङ्गिरसीः** अथर्ववेदे अङ्गिरसा दृष्टा अभिचारश्रुतिः । अभिचारयन् अभिचाररीत्या तत्र हेतुः वाक्शस्त्रं तेन **अरीन**पकारिणः ।। ३२ ।।

(५) **नन्दनः** । हेत्वन्तरमप्याह **श्रुतीरथर्वाङ्गिरसीति** । अभिचारितमभिचारं कुर्यादित्यथर्वशिरसि श्रुतिवाक्यमस्ति तेन युक्तं तदाश्रयणमिति तच्चाङ्गं सर्वशास्त्राणामिति तच्चाभिचारितं मातृरूपं शस्त्रं वाङ्मन्त्र**स्तेन** वाङ्मयेन शस्त्रेण ।। ३२ ।।

(६) **रामचन्द्रः** । अथर्वाङ्गिरसीः श्रुतीः अभिचारयन् । वाक्शस्त्रं आथर्वश्रुत्युपचाररूपं कुर्यात् ।। ३२ ।।

**[ तदस्त्रं सर्ववर्णानामनिवार्यं च शक्तितः ।**
**तपोवीर्यप्रभावेण अवध्यानपि बाधते ।। १ ।। ]**

(७) **मणिरामः** । ब्राह्मणः कथं शत्रून्हन्यात्तत्राह । **श्रुतिरिति** । **अथर्वांगिरसीः** अथर्ववेदे अंगिरसा दृष्टाः अभिचारश्रुतिः । अविचारयन् कुर्यात् । तदर्थमभिचारं कर्तव्यमित्यर्थः । **'वै'** एवार्थे ब्राह्मणस्य वागेव । अभिचारमंत्रोच्चारणात्मिकैव शस्त्रम् । **तेन** शस्त्रेण अरीन् हन्यात् ।। ३२–३३ ।।

(८) **गोविन्दराजः। श्रुतीरिति।** अथर्वाङ्गिरेभ्यः प्रोक्ता अभिचारश्रुतीर्निर्विकल्पमनुतिष्ठेद्यस्मादभिचारमन्त्रोच्चारणात्मिका ब्राह्मणस्य वागेव कार्यकरणाच्छस्त्रं तेन ब्राह्मणः शत्रून्निर्ह्लीयात् ।। ३२ ।।

(९) **भारुचिः।** अभिचारानुज्ञानार्थमिदमारभ्यते। कथम्। यो हि धर्माचरणाभिमुखस्य प्रतिबन्धे वर्तते स शत्रुः सुकृतपरिबन्धितया भवति। स प्राप्तापराधो राजनिवेदनानर्हश्चेत्, अतस्तदर्थोऽभिचारोऽनुज्ञायते। एवं च सति सक्रोधमात्रेणाभिचारो न कर्तव्यः। यश्च स्मृत्यन्तरेऽभिचारस्याशुचिकरत्वमुच्यते," अभिचाराभिशापावशुचिकरौ" इति तत्क्रोधमात्रेणाभिचरतो दर्शितं भवति, अनधिकृतत्वात्। एवं च सत्ययमप्यनभिचरणीयाभिचारे प्रायश्चित्तं वक्ष्यति, "अभिचारं च त्रिभिः कृच्छ्रैर्व्यपोहति" इति। अपरे त्वहीनकर्मार्त्विज्यापेक्षमिदं प्रायश्चित्तं वर्णयति। एवमनयोः स्मृत्योर्विरोधः। ब्राह्मणस्तावदेवमधीतवेदः श्रुतशास्त्रकर्मा च तदनुष्ठानप्रतिघातापदं निस्तरेत्। अथेतरे वर्णाः कथमिति ।। ३२ ।।

**क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः ।।**
**धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः ।। ३३ ।।**

(१) **मेधातिथिः।** पूर्वशेष एव ।। ३३ ।।

(२) **सर्वज्ञनारायणः। धनेन** राज्ञे धनं दत्वा तेन स्ववैरिमारणेन ।। ३३ ।।

(३) **कुल्लूकः।** क्षत्रियः स्वपौरुषेण शत्रुतः परिभवलक्षणामात्मन आपदं निस्तरेत् वैश्यशूद्रौ पुनः प्रतिकर्त्रे धनदानेन ब्राह्मणस्त्वभिचारात्मकैर्जपहोमैः ।। ३३ ।।

(४) **राघवानन्दः।** अत्रार्थे दृष्टान्तः **क्षत्रिय इत्यादि।** प्रासंगिकमुपायपरं वा। **जपहोमैर**भिचारात्मकैः। विकल्पस्त्ववरिगतगुणवत्त्वाद्यपेक्षया। एतेन क्षत्रियादीनाम्। न वाक्शस्त्रावरणमित्युक्तम् ।। ३३ ।।

(५) **नन्दनः।** नेयं वर्णानामापदि प्रतीकारोपायव्यवस्थेत्याह **क्षत्रियो बाहुवीर्येणेति** ।। ३३ ।।

(६) **रामचन्द्रः। वैश्यशूद्रौ** राज्ञे धनदानेन ।। ३३ ।।

(८) **गोविन्दराजः। क्षत्रिय इति।** क्षत्रियः पौरुषेण शत्रुपराभवलक्षणामापदमतिक्रामेत्। वैश्यशूद्रौ तु पुनः राज्ञे धनं दत्त्वा व्यवहारलेखनेन ब्राह्मणस्त्वभिचारात्मकैर्होमैरित्युक्तम् ।। ३३ ।।

(९) **भारुचिः। द्विजोत्तमग्र**हणं चात्र दृष्टान्तार्थं विज्ञेयं, उक्तत्वादस्येति। एवं च ब्राह्मणप्रकरण एव स्थित्वेदमुच्यते ।। ३३ ।।

**विधाता शासिता वक्ता मैत्रो ब्राह्मण उच्यते ।।**
**तस्मै नाकुशलं ब्रूयान्न शुष्कां गिरमीरयेत् ।। ३४ ।।**

(१) **मेधातिथिः।** प्राग्व्याख्यातोऽयम्। **तस्मै** ब्राह्मणायाभिचरते 'निगृह्यतामयमि'**त्यकुशलं न ब्रूयात्। न शुष्कां गिरमीरयेत्।** वाग्दण्डधिग्दण्डयोरपि प्रतिषेधः। अथवा

सर्वेषां वर्णानां न ब्राह्मणः क्षोभयितव्यो यस्त्रयीविद्याप्रभावेण शक्तः स्वयं निग्रहीतुम् । **विधाता स्रष्टा** । अन्यस्य राज्ञः **शासिता** निग्रहीता । **वक्ता** हितान् । अतो **मैत्रस्तस्मात्सर्व**-प्रशक्तियुक्तत्वान्न दुर्बलोऽयमित्यवमन्तव्यः ।। ३४ ।।

(२) **सर्वज्ञनारायणः । विधाता** यज्ञादिद्वारेण जगतः स्रष्टा । **शासिता**ऽधर्मस्य । **वक्ता**ऽध्यापकः । **मैत्रो**ऽहिंस्रः । अतो बहूपकारकत्वादकुशलमयुक्तं हिंसादि न कुर्यात् । **शुष्कां** पर्युषिताम् ।। ३४ ।।

(३) **कुल्लूकः** । विहितकर्मणामनुष्ठाता पुत्रशिष्यादीनां शास्ता प्रायश्चित्तादिधर्माणां वक्ता सर्वभूतमैत्रीप्रधानो ब्राह्मण उच्यते । तस्मै निगृह्यतामयमित्येवमनिष्टं न ब्रूयान्नापि साक्रोशां वाचं वाग्दण्डधिग्दण्डरूपां तस्योच्चारयेत् ।। ३४ ।।

(४) **राघवानन्दः** । अन्येषां विप्रापेक्षत्वं विप्रात् भीतिं च व्यञ्जयंस्तस्य त्वन्यत्र नैर-पेक्ष्यमाह **विधातेति** । विधाता कर्तुमकर्तुमन्यथाकर्तुं समर्थः । **शासिता** वाक्शस्त्राद्यैर्वक्ता धर्मादेः **मैत्रो** हितानुसंधाता । **अकुशलं** बीभत्सम् । **शुष्कां** शोकजननीं आक्रोशवाचकमिति यावत् ।। ३४ ।।

(५) **नन्दनः** । तस्माद्ब्राह्मणो नावमन्तव्य इति प्रसङ्गादाह **विधाता शासिता वक्तेति** । अभिचारादीनां विधाता शासिता कारयिता वक्ता उपदेष्टा मित्रस्य भावो मैत्री तद्वान्मैत्रः सर्वभूतहितः **अकुशलम**निष्टं **शुक्तं** विरसम् ।। ३४ ।।

(६) **रामचन्द्रः । विधाता** यज्ञादिद्वारेण जगतः स्रष्टा । **शासिता** धर्मस्याध्यापकः । वक्ता हितानाम् **तस्मै** ब्राह्मणाय अकुशलं न ब्रूयात् । न **शुष्कां** निष्ठुरां गिरं ईरयेत् ।।३४ ।।

(७) **मणिरामः । विधाता** विहितकर्मणामनुष्ठाता । **शासिता** पुत्रशिष्यादीनाम् । **वक्ता** प्रायश्चित्तधर्माणाम् । **मैत्रः** सर्वप्राणिमैत्रीप्रधानः एतादृशो ब्राह्मणः उच्यते **तस्मै** ब्राह्मणाय । **अकुशलं** अनिष्टम् । **शुक्तं गिरं** वाग्दंडधिग्दंडरूपाम् ।। ३४ ।।

(८) **गोविन्दराजः । विधातेति** । स्वकर्मानुष्ठातारमपि रिक्तेन चौर्यादिव्यापयिता-चारः सर्वभूतोपकारको ब्राह्मण उच्यते । तस्माद्राजन्निगृह्यतामयमित्येवमनिष्टं तस्य नो ब्रूयान्नाप्याक्रोशवाचं वाग्दण्डरूपांतरस्योच्चारयेत् ।। ३४ ।।

(९) **भारुचिः** । राज्ञोऽयमुपदेशः । एवं धर्माचरणाभिमुखो ब्राह्मणस्तत्प्रत्यनीकोपघाते वर्तमानो राज्ञा क्वचिदपि न किञ्चिदपि वक्तव्य इति । ब्राह्मणापकर्तृपुरुषाणां वायमुपदेशः । न राजबलमाश्रित्य बाधितव्यः । समर्थो ह्यसौ पश्यतः क्रोशतश्च राज्ञोभिचारेण शत्रून् निहन्तुमिति । अतस्तस्मै **नाकुशलं कुर्यान्न शुष्कां गिरमीरयेदिति** ।। ३४ ।।

**न वै कन्या न युवतिर्नाल्पविद्यो न बालिशः ।।**
**होता स्यादग्निहोत्रस्य नार्त्तो नासंस्कृतस्तथा ।।३५।।**

(१) **मेधातिथिः** । अग्निहोत्रे ऋत्विग्वरणस्य समाम्नानात् 'जुहुयाद्धावयेद्वेति स्त्रीपुंसयोरविशेषेण क्षीरहोतृताप्राप्तौ कन्यायुवत्योः प्रतिषेधः । एवमाहुतिद्वयमात्रविधिज्ञ-

**स्याल्पविद्यस्य बालिशस्य** वा प्राप्तिः प्रतिषिध्यते । **आर्त्तो** व्याधिना । **असंस्कृतो**ऽनुपनीतः । एतच्चायुक्तम् । श्रौते ह्यग्निहोत्रे 'स्वय पर्वणि जुहुयात् ऋत्विजामेक इतरेषां कालमिति' समाचरन्ति । न च स्त्रीणामार्त्विज्यसंभवोऽतो गृह्याग्निविषये कन्यायुवत्योः प्रतिषेधो, जातपुत्राया: प्राप्त्यर्थ इति वर्णयन्ति । तथा चान्येऽपि सूत्रकाराः 'कामं गृह्येऽग्नौ पत्नी जुहुयात्सायंप्रातर्होमाविति' । अन्ये तु 'वैतानकुशल' इति वचनात्त्रेताग्निविषयमेवेदं मन्यन्ते । 'वितानो' विहारः । स च श्रौतेष्वग्निषु सम्भवति । न च तत्र स्त्र्यादीनां प्राप्ति., न त्वविदुषां, विशिष्टानामेव पुंसामार्त्विज्यविधानात् । अतोऽ'ग्निहोत्र'ग्रहणं सर्वकर्मणां, 'होतृ'ग्रहणं च सर्वर्त्विजां प्रदर्शनार्थम् । अतः श्रुत्यर्थानुवादमात्रमेषा स्मृतिः ।। ३५ ।।

**(२) सर्वज्ञनारायणः** । यथा कन्यादयो होतारस्तथा अविद्योऽतिबालो दुःखाद्यार्त्तश्च न होता स्यादिति त्रितयदृष्टान्ततया त्रयाणां कन्यायुवत्यसंस्कृतानामभिधानम् । अत एवाग्रे तथैवोपसंहारः ।। ३५ ।।

**(३) कुल्लूकः** । **कन्या**ऽनूढा ऊढापि तरुणी तथाऽल्पाध्याधिमूर्खव्याध्यादिपीडितानुपनीताः श्रौतान्सायंप्रातर्होमान्न कुर्युः । ह्रापयेदिति प्रसक्तादयं कन्यादीनां प्रतिषेधः ।। ३५ ।।

**(४) राघवानन्दः** । विधेः प्रतिनिधिरित्युक्तेनासामर्थस्य नित्ये प्रारब्धे वा कर्मणि प्रतिनिधिः प्राप्तस्तं विशिनष्टि नेति । **कन्या युवतिश्च** ऊढानूढे ।। असामर्थ्ये शरीरस्य व्रते च समुपस्थिते । 'कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितमिति ।। स्वपत्न्याः प्रतिनिधित्वेन प्रापितत्वात् । **बालिशो** देहमात्राहंबुद्धिरधीतवेदवेदाङ्गोऽपि नास्तिकः अल्पविद्यनिरासेन मूर्खस्य निरस्तत्वात् । **आर्त्तो** रोगी। **असंस्कृतो**ऽनुपनीत इति प्राप्तपुत्रनिषेधार्थः ।। ३६ ।।

**(५) नन्दनः** । आपद्यग्निहोत्रहोमोऽर्हेणैव कर्तव्यो नानर्हेणेति । श्लोकद्वयेनाह **न वै कन्या न युवतीरिति** । **अल्पविद्यो**ऽमन्त्रज्ञः **असंस्कृतो**ऽनुपनीतः ।। ३५ ।।

**(७) मणिरामः** । **कन्या** अनूढा । तरुणी ऊढापि । **बालिशः** मूर्खः । **अग्निहोत्रस्य** श्रौताग्निहोत्रस्य । **होता** होमकर्ता न स्यात् ।। ३५ ।।

**(८) गोविन्दराजः** । **नेति** । कन्या तरुणा अल्पाध्ययनमूर्खव्याध्यादिपीडितानुपनीताः श्रौतं सायंप्रातर्होमं न कुर्यान्नापि कारयितव्या । इति शास्त्रपरिज्ञाना प्रतिनिधिरूपेणैषां होमं कारयेत्ततोऽयं प्रतिषेधः कन्यादीनां च ।। ३५ ।।

**(९) भारुचिः** । कन्यादीनामप्राप्तानां प्रतिषेधोऽयं, अग्निहोत्रादीनां सर्वकर्मणामनुष्ठातृस्तुत्यर्थः । तत् पुनर्विचारणीयं युक्तायुक्ततया ।। ३५ ।।

**नरके हि पतन्त्येते जुह्वतः स च यस्य तत् ।।**
**तस्माद्वैतानकुशलो होता स्याद्वेदपारगः ।।३६।।**

**(१) मेधातिथिः** । **एते** कन्यादयो **जुह्वतो नरकं** गच्छन्ति । **स च** यजमानो हावयिता ।। ३६ ।।

**(२) सर्वज्ञनारायणः** । **एते**ऽल्पविद्यादयो **जुह्वतो** होमं कुर्वाणाः । **यस्य तद**ग्निहोत्रम् । वैतानमग्निहोत्रकर्म तत्र कुशलः शक्तोऽबालत्वानार्त्तत्वाभ्याम् । **वेदपारगो**ऽतिविद्यः ।। ३६ ।।

**(३) कुल्लूकः ।** **एते** कन्यादयो होमं कुर्वाणा नरकं गच्छन्ति यस्य तदग्निहोत्रं प्रतिनिधिरूपेण कुर्वन्ति सोऽपि नरकं गच्छति । तस्माच्छ्रौतकर्मप्रवीणः समस्तवेदाध्यायी होता कार्यः ।। ३६ ।।

**(४) राघवानन्दः ।** तत्रैव निन्दां प्रदर्शयस्तद्व्यतिरिक्तान्द्रढयति **नरकमिति** । तदग्निहोत्रं **जुह्वतः** कुर्वाणा एते यस्य सोऽपि नरकं पतत्यतो **वैतानकुशलः** श्रौतकर्मकुशलः होता स्यादित्यन्वयः ।। ३६ ।।

**(५) नन्दनः ।** **एते** कन्यादयो **यस्या**हिताग्नेस्त**द**ग्निहोत्रं स च नरके पतति ।। ३६ ।।

**(६) रामचन्द्रः ।** **एते** कन्यादयः । **तत्** अग्निहोत्रं यजमानः प्रतिनिधित्वेन होमं कुर्वाणः सः नरके पतति ।। ३६ ।।

**(७) मणिरामः ।** **एते** कन्यादयः तत् अग्निहोत्रं यस्य स च नरकं गच्छतीत्यर्थः । तस्माद्वैतानकुशलः श्रौतकर्मप्रवीणः वेदपारगश्च यः स होता कार्यः ।। ३६ ।।

**(८) गोविन्दराजः ।** **नरकमिति** । **एते** कन्यादयो होमं कुर्वाणा नरकं गच्छन्ति । यस्य च अग्निहोत्रं प्रतिनिधिरूपेण कुर्वन्ति सोऽपि नरकं व्रजति । तस्माच्छ्रौतकर्मप्रवीणः समस्तवेदाध्यायी होता कार्यः ।। ३६ ।।

**(९) भारुचिः ।** एवं च सतीदमाह । अतश्च विज्ञायतेऽग्निहोत्रग्रहणं सर्वकर्मनिदर्शनार्थम् । तस्मादेवंगुणास्सर्वऋत्विज इष्यन्ते, न केवलमग्निहोत्रस्य हावकः । अपरे प्रतिनिधिविषयमेतं प्रतिषेधमाहुः । यथा "नान्तरीक्षे न दिव्यग्निश्चेतव्यः" इत्ययमप्राप्तप्रतिषेधो रुक्म-सम्बन्धस्तुत्यर्थः । एवमयमपीति । अपराह–गृह्यमेतदग्निहोत्रं गृह्यते । तत्र च स्त्र्यादीना-मपि प्राप्तिः, "कामं गृह्येऽग्नौ पत्नी जुहुयात् सायं प्रातः होमौ" इति वचनात् । एवं च सत्युपाधि सती यावत् कन्या तावन्न जुहुयादौपासनमग्निमूढा च संवत्सरं त्रिरात्रं वा कन्या भवति । यत एवं प्राप्तायाः प्रतिषेधः । एवं युवत्यादीनामपि प्राप्तानां प्रतिषेधः । तच्चैत-दौपरिष्टेन श्लोकार्धेन विरुद्धयते, **तस्माद् वैतानकुशलो होता स्याद् वेदपारगः** इत्यनेन । अग्निहोत्रसम्बन्धेनाग्न्याधायदक्षिणाधर्म उच्यते ।। ३६ ।।

**प्राजापत्यमदत्वाऽश्वमग्न्याधेयस्य दक्षिणाम् ।।**
**अनाहिताग्निर्भवति ब्राह्मणो विभवे सति ।।३७।।**

**(१) मेधातिथिः ।** अग्न्याधेयेऽश्वो दक्षिणा दातव्या । प्राजापत्यग्रहणं स्तुत्यर्थम् । अथवा नात्युत्कृष्टो नातिनिकृष्टः 'प्राजापत्यः' । अथ च लौकिका ईदृशे वस्तुनि 'प्रजापति' शब्दमुदाहरन्ति । **विभवे सतीति** वचनादसंपत्तावदद्भवत्येवाहिताग्निः ।। ३७ ।।

**(२) सर्वज्ञनारायणः ।** प्रजापतिः पञ्चाग्निरूपो विराट् तत्संबन्धिनं तन्निष्पत्त्यर्थ-त्वात् । **अनाहिताग्नि**रित्याहवनीयाद्यसिद्धिरुक्ता ।। ३७ ।।

**(३) कुल्लूकः ।** आधाने प्राजापत्यमश्वं प्रजापतिदेवताकं धनसंपत्तौ सत्यां ब्राह्मणो दक्षिणामदत्वा कृतेऽप्याधानेऽनाहिताग्निर्भवति आधानफलं न लभते तस्मादाधाने-ऽश्वं दक्षिणां दद्यात् ।। ३७ ।।

(४) **राघवानन्दः।** समर्थस्यानुकल्पनिषेधेन दक्षिणाननुकल्पं प्राप्तमनूद्य तत्रैव विशेषमाह **प्राजापत्यमिति।** **प्राजापत्यं** प्रजापतिदैवताकं प्रजापतिर्विराट् स यथा अस्मदादि हिरण्यगर्भयोर्मध्यम एवं मध्यमपरिमाणोऽश्वो वा। विभवे सतीति विशेषणमत्र स्तुतिः। **अनाहिताग्निरसंस्कृताग्निः** ॥ ३७ ॥

(५) **नन्दनः।** आपद्यग्न्याधाने किंचिन्न्यूनापि दक्षिणा दातव्येति सूचितम् ॥ ३७ ॥

(६) **रामचन्द्रः।** **प्राजापत्यं** प्रजापतिरूपो विराट् तत्संबन्धिनं अश्वं अग्न्याधेयस्य दक्षिणां अदत्वा अनाहिताग्निर्भवति ॥ ३७ ॥

(७) **मणिरामः।** **प्राजापत्यं** प्रजापतिदेवताकमश्वं विभवे सति धनसंपत्तौ सत्यां अग्न्याधेयस्य दक्षिणां अदत्त्वाकृतेऽप्याधाने अनाहिताग्निर्भवति आधानफलमलभते तस्मादाधाते अश्वं दक्षिणां दद्यात् ॥ ३७ ॥

(८) **गोविन्दराजः।** **प्रजापत्यमिति।** आधाने प्रजापतिदेवताकमश्वमृत्विग्भ्यो दक्षिणां ब्राह्मणः संपाद्य दत्वाऽनाहिताग्निर्भवति तस्माच्छ्रौतदक्षिणातिरिक्तोऽश्वः समृद्धौ सत्यां ब्राह्मणेनाम्नायेन दातव्यः ॥ ३७ ॥

(९) **भारुचिः।** **ब्राह्मणग्रहणाच्च** क्षत्रियवैश्ययोः प्राजापत्याश्वदाने न नियमः। ब्राह्मणस्याप्यश्वदानं **विभवा**पेक्षत्वादनित्यं दर्शयति। समुच्चयन्यायत्वाच्च दक्षिणानामश्वः समुच्चीयते। अग्न्याधेयदक्षिणादानसम्बन्धेन चेदमन्यदुच्यते। समग्रदक्षिणा यज्ञाः स्युः। एवं च सति दक्षिणावैगुण्ये दोषमाह ॥ ३७ ॥

**पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः ॥**
**न त्वल्पदक्षिणैर्यज्ञैर्यजेतेह कथंचन ॥३८॥**

(१) **मेधातिथिः।** यावती दक्षिणा विहिता ततो न्यूना दीयते यत्र **सोऽल्पदक्षिणो यज्ञः।** "परिक्रयः किल दक्षिणा। स्वल्पेन चेत्परिक्रयेण कर्मकरो लभ्यते किमिति बहुदीयते लोक इव वाहादीनाम्। 'पणलभ्यं हि कः प्राज्ञः क्रीणाति दशभिः पणैः'। द्वादशशतदानं तत्फलभूयस्त्वायेति" मन्यमानस्य प्रतिषेधः। ये तु स्वल्पदक्षिणा उत्पत्त्यैव च सोमे दक्षिणेति क्रतुमन्तो न तन्निषिध्यते ॥ ३८ ॥

(२) **सर्वज्ञनारायणः।** **पुण्यान्यन्यानि** जपादीनि ॥ ३८ ॥

(३) **कुल्लूकः।** श्रद्धावान्वशीकृतेन्द्रियः यज्ञव्यतिरिक्तानि तीर्थयात्रादीनि कर्माणि पुण्यानि कुर्वीत न तु शास्त्रोक्तदक्षिणातोऽल्पदक्षिणैर्यजेत परोपकारार्थत्वाद्दक्षिणायाः स्वल्पेनापि ऋत्विगादि दोषनिषेधार्थमिदं वचनम् ॥ ३८ ॥

(४) **राघवानन्दः।** किं च **पुण्यानीति।** अन्यान्यल्पधनसाध्यानि अन्नदानादीनि ॥ ३८ ॥

(५) **नन्दनः।** अग्न्याधान एवानुकल्पदक्षिणा न यज्ञेष्वित्याह **पुण्यान्यन्यानि कुर्वीतेति** ॥ ३८ ॥

(७) **मणिरामः । अन्यानि** यज्ञव्यतिरिक्तानि ।। ३८ ।।

(८) **गोविन्दराजः । पुण्यानीति ।** श्रद्धालुर्वशीकृतेन्द्रियो यज्ञव्यतिरिक्तानि पुण्यानि कुर्यान्नतु शास्त्रोक्तदक्षिणां तेभ्यो दत्वा कदाचिदिह यज्ञं कुर्यात्परिक्रयार्थत्वाद्दक्षिणायाः स्वल्पेनापि परिक्रयसिद्धिरित्याशङ्कायामिदं वचनम् ।। ३८ ।।

(९) **भारुचिः ।** काम्ययज्ञदक्षिणा विधिरयम् । नित्यानां तु कर्मणामल्पदक्षिणानामप्यनुज्ञानमिति ।। ३८ ।।

**इन्द्रियाणि यशः स्वर्गमायुः कीर्तिं प्रजाः पशून् ।।**
**हन्त्यल्पदक्षिणो यज्ञस्तस्मान्नाल्पधनो यजेत् ।। ३९ ।।**

(१) **मेधातिथिः ।** पूर्वविध्यतिक्रमे फलकथनम् ।। ३९ ।।

(२) **सर्वज्ञनारायणः । यशः** परैर्गुणज्ञानम् । **कीर्तिः** परैस्तत्कीर्तनम् ।। ३९ ।।

(३) **कुल्लूकः ।** चक्षुरादीनीन्द्रियाणि जीवतः ख्यातिरूपं यशः स्वर्गायुषी मृतस्य ख्यातिरूपां कीर्तिमपत्यानि पशूंश्चाल्पदक्षिणो यज्ञः नाशयति तस्मादल्पदक्षिणादानेन यागं न कुर्यात् ।। ३९ ।।

(४) **राघवानन्दः ।** दक्षिणानुकल्पाभावं सार्थवादं निगमयति **इन्द्रियाणीति ।** उक्तप्राजापत्याश्वद्वादशशतादि दक्षिणागुणसंख्याभावेऽसाङ्गत्वात्स्वर्गस्य हतिः इतरेषां ब्राह्मणापरितोषादिभिरिति भावः ।। ३९ ।।

(५) **नन्दनः ।** अत्र हेतुमाह **इन्द्रियाणि यशः स्वर्गमिति** ।। ३९ ।।

(६) **रामचन्द्रः ।** अल्पदक्षिणः यज्ञः इन्द्रियादीनि हन्ति ।। ३९ ।।

**[अन्नहीनो दहेद्राष्ट्रं मंत्रहीनस्तु ऋत्विजः ।**
**दीक्षितं दक्षिणाहीनो नास्ति यज्ञसमो रिपुः ।। १ ।।]**

(८) **गोविन्दराजः । इन्द्रियाणीति ।** चक्षुरादीनि जीवितश्च ख्यातिं स्वर्गायुषी मृतस्य च ख्यातिमपत्यानि पशूंश्चाल्पदक्षिणो यज्ञो नाशयति । तस्मादल्पदक्षिणादानेन यागं न कुर्यात् ।। ३९ ।।

(९) **भारुचिः ।** नित्यानां हि कर्मणामारब्धानां यथा कथंचित् क्रियाप्रसिद्धौ तदारंभाशङ्कायां काम्यकर्मार्थप्रतिषेधोऽयं श्लोकद्वयेनानुद्यते । न्यायादेव हि काम्यानां विगुणानामप्रवृत्तिः सिद्धा । एवं च न नित्यानामयं प्रतिषेधः, नित्यत्वादेव । विगुणान्यपि नित्यानि फलाय चेति मीमांसकाः । इदमपरमग्निहोत्रप्रकरणाभिसंबन्धेनोच्यते ।। ३९ ।।

**अग्निहोत्र्यपविध्याग्नीन्ब्राह्मणः कामकारतः ।।**
**चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत् ।। ४० ।।**

(१) **मेधातिथिः । अपविध्य** त्यक्त्वा । त्यागश्च नित्यानामग्निहोत्रादीनां अकरणमुद्वापनं च । प्रसङ्गादत्र प्रकरणात्प्रायश्चित्तोपदेशः । **अग्नीनिति** बहुवचन-

निर्देशात् गृह्याग्नित्यागे कल्पना कार्या । **वीरहत्यासममिति** श्रुतिः 'वीरहा वा एष देवानामिति' । कामकारवचनादकामत्यागे कल्पनैव ।। ४० ।।

(२) **सर्वज्ञनारायणः** । चान्द्रायणं चरेत्तच्चरणानन्तरं पुनरादध्यादित्यर्थः । **वीरहत्या** पुत्रहत्या स्वयमुत्पादितत्वादग्नीनां वीर इति पुत्रनाम ।। ४० ।।

(३) **कुल्लूकः** । अग्निहोत्री ब्राह्मण इच्छातोऽग्निषु सायंप्रातर्होमानकृत्वा मासं चांद्रायणं चरेत् यस्माद्वीरः पुत्रः तस्य हत्या हननं तत्तुल्यमेतत्तया च श्रुतिः वीरहा वा एष देवानां भवति योऽग्निमुद्वासयते अन्ये तु मासमपविध्येति समर्थयन्ति ।। ४० ।।

(४) **राघवानन्दः** । किं च **अग्नीति** । **अपविध्य** त्यक्त्वा । **कामकारतः** शास्त्रादृते । चान्द्रायणचरणे हेतुः वीरं वीरहत्या वीरा देवा ज्येष्ठ पुत्रो वा तस्य **हत्या** हननम् । तथा च श्रुतिः । वीरहा वा एष देवानां योऽग्निमुद्वासयेदिति ।। ४० ।।

(५) **नन्दनः** । अनापद्यग्निहोत्रं परित्याज्यमित्याह **अग्निहोत्र्यपविध्याग्नीनिति** । **कामकारतो**ऽनापदीत्यर्थः । **वीरहत्या**ऽयुध्यमानस्य क्षत्रियस्य वधः तदपि वेधनं कामकारत इति विशेषणादापदि दोषाभावः सूचितः ।। ४० ।।

(६) **रामचन्द्रः** । कामकारतो अग्निहोत्री ब्राह्मणः अग्नीन् **अपविध्य** परित्यज्य मासं चान्द्रायणं चरेत् । **वीरहत्यासमं** पुत्रहत्यासमं व्रतं चरेत् । वीरहा वा एष देवानामिति श्रुतेः ।। ४० ।।

(७) **मणिरामः** । अग्निहोत्री ब्राह्मणः कामकातरः इच्छातः अग्नीन् अपविध्य यस्मात् सायंप्रातर्होमानकृत्वा । मासं चांद्रायणं चरेत् । हि यस्मात् तत् अहवनं **वीरहत्यासमं** पुत्रहत्यासमम् ।। ४० ।।

(८) **गोविन्दराजः** । **अग्निहोत्र्यपविध्याग्नीनिति** । आहिताग्निर्ब्राह्मण इच्छातोऽग्नींस्त्यक्त्वा मासं चान्द्रायणं कुर्यात् । यस्माद्यजमानहत्यातुल्यमेतदिति । यज्ञचर्याप्रसङ्गे दमप्रकरणेऽपि प्रायश्चित्तमादरार्थं मासमित्यनुवादोऽन्ये तु मासमपविध्येति संबन्धयन्ति ।। ४० ।।

(९) **भारुचिः** । प्रायश्चित्तमिदं कामकारेणाग्निहोत्रपरित्यागे ब्राह्मणस्य विधीयते चान्द्रायणम् । अकामतस्तु सामान्यप्रायश्चित्तमिदम् । इदं चाप्रकरणेऽपि प्रायश्चित्तविधानं विगुणानामपि नित्यानां कर्मणामनुष्ठानस्तुत्यर्थम् ।। ४० ।।

**ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते ।।**
**ऋत्विजस्ते हि शूद्राणां ब्रह्मवादिषु गर्हिताः ।। ४१ ।।**

(१) **मेधातिथिः** । शूद्रादधिगतेनार्थेन प्रीत्यादिनाऽग्न्याधेयं न कर्तव्यमिति व्याचक्षते । न तु प्रवृत्तकर्मणो नित्यकर्मानुष्ठानं प्रतिषिध्यते । तथा चोक्तं न शूद्राद्भिक्षित्वाऽनुष्ठानं करणीयम् । अयाचितलाभे तु नास्ति दोषः प्रवृत्तकर्मणस्तदर्थम् । तथा चासत्प्रतिग्रहादात्मवृत्तिरेका प्रतिषिद्धा । नित्यानि कर्माण्यभ्यनुज्ञातानि । अतः शूद्रधनेन प्रार्थित-

लब्धेन वाऽविशेषाभिधानसामर्थ्यादग्न्याधेयस्यैकस्य प्रतिषेधोऽयं विज्ञायते। यदि सर्व-कर्मार्थोऽयं प्रतिषेधः स्यादनेनैव सिद्धत्वान्न भिक्षणं प्रतिषिध्येत 'न यज्ञार्थं धनं शूद्रात्' इति ॥ ४१ ॥

(२) **सर्वज्ञनारायणः। ब्रह्मवादिनो** वेदवादिनः ॥ ४१ ॥

(३) **कुल्लूकः:** ये शूद्रादधिगम्यार्थं प्राप्य सामान्याभिधानेन याचनेन वाऽर्थस्वीकृत्य वृषलाग्न्युपसेविनामिति वक्ष्यमाणलिङ्गादाधानपूर्वकमग्निहोत्रमनुतिष्ठन्ति ते शूद्राणामेव याजका नतु तेषां तत्फलं भवति अतस्ते वेदवादिषु निन्दिताः ॥ ४१ ॥

(४) **राघवानन्दः।** पूर्वं न यज्ञार्थमित्यनेन शूद्रभिक्षितेन न यज्ञादिकं कर्तव्यमित्युक्तं संप्रति निश्चितया शूद्राग्निहोत्रोपासकान्प्रत्याह **य इति। अधिगम्य** तवाग्निहोत्रं कर्तास्मीति धनमादाय ॥ ४१ ॥

(५) **नन्दनः।** आपद्यपि च शूद्रादग्निहोत्रार्थप्रतिग्रहः कार्य इत्याह श्लोकद्वयेन **ये शूद्रादधिगम्यार्थमिति।** ॥ ४१ ॥

(६) **रामचन्द्रः।** ये शूद्रात् अर्थं प्राप्य अग्निहोत्रं उपासते ॥ ४१ ॥

(८) **गोविन्दराजः। य इति।** ये शूद्राद्याचित्वा अयाचित्वा वार्थं स्वीकृत्य वृषला-ग्न्युपसेविनामिति वक्ष्यमाणलिङ्गादाधानपूर्वकमग्निहोत्रं कुर्वन्ति ते परमात्मस्वरूपनिरूपण-परविषये निन्दिताः शूद्राणां याजकाः न तु तेषां ततः फलं भवति ॥ ४१ ॥

(९) **भारुचिः।** शूद्रादधिगतेनार्थेनाग्न्याधेयं न कर्तव्यम्। एवमग्न्याधेयं न कर्तव्यमित्यग्न्याधेयप्रतिषेधः। न तु प्रवृत्तकर्मणो नित्यानुष्ठानार्थः। तथा चोक्तम्, "न शूद्राद् भिक्षित्वा यज्ञानुष्ठानं कर्तव्यमि"ति। अयाचितलाभे तु नास्ति दोषः। तथाचासत्प्रतिग्रहादात्मतृप्तिरेवा प्रतिसिद्धा। नित्यानि त्वभ्यनुज्ञातानि। यतः शूद्रधनेन प्रार्थितलब्धेन वाविशेषाभिधानसामर्थ्यादग्न्याधेयस्यैकस्य प्रतिषेधोऽयं विज्ञेयः। यदि सर्व-कर्मार्थोऽयं प्रतिषेधः स्याद्, अनेनैव सिद्धत्वान्न शूद्राद् भिक्षणं प्रतिषिद्धं स्यात् "न यज्ञार्थं धनं शूद्रात्" इत्येवमादिना वाक्येन। अग्निनां च वृषलाग्नित्वापवादादग्न्याधेयप्रतिषेधोऽयं गम्यते ॥ ४१ ॥

**तेषां सततमज्ञानां वृषलाग्न्युपसेविनाम् ॥**
**पदा मस्तकमाक्रम्य दाता दुर्गाणि संतरेत् ॥ ४२ ॥**

(१) **मेधातिथिः।** अग्नीनां वृषलाग्नित्ववचनं लिङ्गात् पूर्वविध्यतिक्रमे दोषाभिधाने निखिलप्रकरणमेतत् ॥ ४२ ॥

(२) **सर्वज्ञनारायणः।** दाता स शूद्रः। तदेतत्सर्वमग्निहोत्रविषयं प्रसंगादुक्तम् ॥ ४३ ॥

(३) **कुल्लूकः। तेषां** शूद्रधनाहिताग्निपरिचारिणां मूर्खाणां मूर्ध्निपादं दत्वा शूद्रस्तेन धानेन सततं परलोके दुःखेभ्यो निस्तरति न तु यजमानानां फलं भवति ॥ ४२ ॥

**(४) राघवानन्दः ।** ततः किं तत्राह **तेषामिति । पदा** पादेन । **दाता** प्रतिनित्यर्थं-धनस्य । **दुर्गाण्यापदः** ।। ४२ ।।

**(६) रामचन्द्रः ।** वृषालानां द्रव्येणाग्न्युपसेविनां मस्तकं **पदा** चरणेन अज्ञादीनां मस्तकं आक्रम्य दाता **दुर्गाणि** नरकान् संतरेत् ।। ४२ ।।

**(७) मणिरामः । वृषालाग्न्युपसेविनां** शूद्रधनेनाग्निहोत्रसेविनाम् । **दाता** शूद्रः **दुर्गाणि** परलोकदुःखानि ।। ४२ ।।

**(८) गोविन्दराजः । तेषामिति । तेषां** शूद्रधनाहिताग्निपरिचारिणां मूर्खाणां मूर्ध्निपादं दत्त्वा स **दाता** शूद्रस्तेन दानेन नित्यं परलोके दुःखेभ्य उत्तरति । न तु ततस्तेषां फलमुत्पद्यते ।। ४२ ।।

**(९) भारुचिः ।** परिसमाप्त एतस्मिन्नखिलप्रकरणे तत्रैव स्थितम् "अतः प्रवक्ष्यामि प्रायश्चित्तविधिं शुभाम्" इति । यतः प्रायश्चित्ताभिधित्सया सामान्यतस्तन्निमित्तान्येव तावदादावुच्यते ।। ४२ ।।

**अकुर्वन्विहितं कर्म निंदितं च समाचरन् ।।**
**प्रसञ्जन्निन्द्रियार्थेषु प्रायश्चित्तीयते नरः ।। ४३ ।।**

**(१) मेधातिथिः ।** इदानीं प्रकृतान्येव प्रायश्चित्तानि कथ्यन्ते । प्रथमं तावत्तेष्व-धिकारं निरूपयति । कोऽत्राधिकारः । **विहितं** नित्यतया संध्योपासनाग्निहोत्रादि 'याव-ज्जीवमग्निहोत्रं जुहुयात्' इत्यादिभिः पदैर्ज्ञापितनित्यभावात् । यदप्यनियतनिमित्ते-ऽशुचिस्पर्शनादौ स्नानादि **तद्विहितम् । अकुर्वन्** प्रमादालस्यादिना । तथा **निन्दितं** प्रति-षिद्धं सुरापानादि । तदपि शास्त्रमतिक्रम्य सेवमानः । **प्रायश्चित्तीयते** । तदेतदुक्तं भवति । नैमित्तिकोऽयमधिकारो विहिताकरणात्प्रतिषिद्धसेवनाच्च प्रायश्चित्तम् । "ननु च ग्राम-कामस्य सांग्रहणी विहिता । ततो ग्रामार्थिनः कथंचिदकरणे विहितातिक्रमः स्यात् । यदि नाम ग्रामार्थी प्रत्यवेयात्ततस्तत्कामोऽस्य । यदा तु ग्रामं कामयते तदा तस्य तद्विहितं भवति । न चेत्प्रवर्तते विहितमतिक्रामेत् । अतश्च प्रायश्चित्ती प्राप्तः" । उच्यते । ग्रामस्य स्वामी स्यामिति फललिप्सया तस्य तत्र प्रवृत्तिर्न विधिलक्षणा । शास्त्रं तु यागग्रामयोः साध्यसाधन-संबन्धावेदकमेव । वस्तुतो यद्यपि तत्रापि कर्तव्यता प्रधानप्रसाधनो वाक्यार्थः, तथापि फलसिद्ध्यर्थमेव कर्तव्यतां विधिरवगमयति । अतश्च यागमकुर्वतः फलं न निष्पद्यते, न पुनः प्रत्यवायः । यत्र प्रत्यवायस्तत्र च प्रायश्चित्तम् । "ननु च नित्यानामकरणे प्रत्यवायो भवतीति कुत इयमवगतिः । न ह्येवमग्निहोत्रादौ श्रूयते 'यो न कुर्यात्स प्रत्यवेयात्' " । श्रूयते वाक्यशेषेषु 'वेदिभ्यः परमा भवति' इति । सर्वत्रार्थवादाः प्रत्यवायप्रदर्शनार्थाः सन्ति । अवश्यं च तेषामालंबनं वाच्यं नान्यथा विधिनैकवाक्यतां भजन्ति । यत्रापि न श्रूयन्ते तत्रापि विध्यनुग्रहार्था अर्थवादाः प्रकल्प्यन्ते । किं चार्थवादैर्विधेरेव प्रवर्तकत्वम्, अन्यथा नोपपद्यते यावदप्रवृत्तौ प्रत्यवायपरिहारो न कल्पितः । एवंविध एवार्थे वृद्धव्यवहारे विधिः प्रवर्तते । बोध्यते तु पुरुषप्रवर्तनारूढोऽसौ । न च पुरुषा अपुरुषार्थे प्रवर्तयितुं शक्यन्ते । अतः प्रवर्तक-

त्वविहितविधिर्माभूदिति श्रुति सिद्धयर्था कल्पनैषा। यद्यपि स्वर्गादिकल्पनायामपि तथार्थलाभस्तथापि यावज्जीवादिपदविरोधात्प्रत्यवायपरिहारार्थताऽपि स्यात्। उक्तम्— 'भयाद्धि यादृशो पुंसां प्रवृत्तिरुपजायते। न तादृशी भवेदत्र विधिकोटिशतैरपि'। तस्माद- **कुर्वन्विहितम्** इति नित्यं कर्मेति द्रष्टव्यम्। "ननु चाशुचिस्पर्शनादौ न नित्यावेदि किंचित्पदमस्ति, यावज्जीवमित्यादिवत्"। किमन्यान्येन पदेन निमित्तविशेषे यत् श्रुतं तस्य च तन्निमित्तेन कर्तव्यता प्रतीयते। नाधिकारान्तर प्रत्यपेक्षा जायते। यदा निमित्त- संविधानं तदा कर्तव्यमित्युपगमैर्नित्यतासिद्धिः। अग्निहोत्रादावपि न नित्यशब्दोऽस्ति निमित्तनित्यत्वात्। **प्रसञ्जन्न**विदितत्वेषु विषयेषु संस्कृतान्नभोजनचन्दनानुलेपनादिषु तात्पर्यत आसेवा प्रसङ्गो विषयाभिलाषपरतेति यावत। "ननु चैतदपि प्रतिषिद्धम् 'इन्द्रियार्थेषु सर्वेषु न प्रसज्येत कामत' इति"। स्नातकव्रताधिकारान्नायं प्रतिषेध इति मन्यते। व्रतशब्दाधिकारे हि तत्र प्रतिषेधकः। संकल्पविशेषो हि मानसस्तत्रादिश्यते 'इदं मया न कर्तव्यमिति'। अथवा कश्चिदल्पप्रतिषेधे न तुल्यतां मन्येत, 'पदार्थस्तावदयं न निषिध्यत' इति मन्यमानः, अतः समानीक्रियते। अथवा सामान्ये तद्भूतस्यापि विशेषस्य पृथगुपदेशो दृष्टः, प्राधान्यख्यापनार्थम्। यथा 'ब्राह्मणा आयाताः' 'वसिष्ठोऽप्यायात' इति। **प्रायश्चित्तीयते** प्रायश्चित्तशब्दो रूढिरूपेण विशिष्टे नैमित्तिके वर्तते। तदेती- च्छति वेति विनिमयः (?) **कर्त्तव्यो** "व्यत्ययो बहुलम्" इति (व्या. सू. ३-१-८५)। **नर** इति वचनं चातुर्वर्ण्याधिकारार्थम्॥ ४३॥

(२) **सर्वज्ञनारायणः**। एवं प्रासंगिकं तत्तद्विक्षिप्तं समर्थ्य प्रकृतं प्रायश्चित्तमुपक्रमते **अकुर्वन्निति**। **विहितं** नित्यं संध्योपासनादि नतु काम्यमपि। **निन्दितं** निषिद्धं परस्त्री- गमनकलञ्जभक्षणादि **समाचरं**स्तद्विषयं कायव्यापारं कुर्वन्। इन्द्रियार्थेषु तेष्वेव प्रसजन् मनसा व्याप्रियमाणः। एतेन निषिद्धविषयौ कायिकमानसव्यापारौ गृहीतौ। वाचिकोऽपि व्यापारः प्रायिक एव। प्रायश्चित्तीयते प्रायश्चित्तार्हो भवति॥ ४३॥

(३) **कुल्लूकः**। नित्यं यद्विहितं सन्ध्योपासनादि नैमित्तिकं च शवस्पर्शादौ स्नानादि तदकुर्वन् तथा प्रतिषिद्धं हिंसाद्यनुतिष्ठन्नविहितनिषिद्धेष्वत्यन्तासक्तिं **कुर्वन्नरो** मनुष्यजाति- मात्रं प्रायश्चित्तमर्हति। नन्विन्द्रियार्थेषु न सर्वेषु प्रसज्येत। काम इति निषेधान्निन्दितपदेनैव प्रसक्तश्चेन्द्रियार्थेष्वित्यपि संगृहीतमतः पृथङ्न वक्तव्यं उच्यतेऽस्य स्नातकव्रतेषु पाठात्तत्र व्रतानीमानि धारयेदित्युपक्रमान्नायं प्रतिषेधः किन्तु व्रतविधिः तर्ह्यकुर्वन्विहितं कर्मेत्यनेनैव प्राप्तत्वात्पृथङ् न वक्तव्यमिति चेन्न स्नातकेतरविषयत्वेनास्य सविषयत्वात्॥ ४३॥

(४) **राघवानन्दः**। प्रायश्चित्तार्थं तन्निमित्तान्यनुवदति **अकुर्वन्निति**। **विहित- मग्निहोत्रादि**। **निन्दितं** ब्राह्मणवधादि। **प्रसजन्** अत्यन्तं प्रसक्तिं कुर्वन् स्वदारेष्वनृतौ गच्छन् अरण्येष्वपि दिवा स्त्रीसंभोगत्रिचतुर्वारभोजनादौ प्रायश्चित्तीयते तदधिकारी च। [स्यात् पाप] विशोधकं कर्म प्रायश्चित्तं तदकरणे नरकः। तत्र **याज्ञवल्क्यः** विहितस्याननु- ष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छतीति॥ ४३॥

(५) **नन्दनः**। अथ प्रायश्चित्तं वक्तुं प्रायश्चित्तनिमित्तानि तावत्सामान्यत आह **अकुर्वन्विहितं कर्मेति**। **विहितं** नित्यनैमित्तिकम्। **निन्दितं** प्रतिषिद्धम्। **प्रसजन्**प्रकर्षेण सङ्गं कुर्वन् ननु इन्द्रियार्थेषु न प्रसज्येत, प्रसङ्गोऽपि निषिद्ध एव तद्धि स्नातकब्राह्मणमात्रविषयमत नरग्रहणं मनुष्यमात्राधिकारार्थम्॥ ४३॥

(६) **रामचन्द्रः**। **विहितं** कर्म सन्ध्योपासनादि॥ ४३॥

(७) **मणिरामः**। **प्रसंजन्** अत्यंतासक्तिं कुर्वन्॥ ४३॥

(८) **गोविन्दराजः**। एवमखिलप्रकरणमुक्त्वाऽधुना प्रायश्चित्तानामधिकारे निरूपणार्थमाह **अकुर्वन्निति**। प्रसज्जंस्त्विन्द्रियार्थेषु प्रायश्चित्तीयते नरः। कर्तव्यत्वेन चोदितं संध्योपासनादि कर्म अननुतिष्ठन् प्रतिषिद्धं च। हिंसादि कुर्वन् इन्द्रियोपभोगेषु चार्थेषु रूपादिषु विषयेषु प्रतिषिद्धेषु शक्तिं भावयन्नरो मनुष्यमात्रं प्रायश्चित्तमर्हति! नन्विन्द्रियार्थेषु सर्वेषु न प्रसज्जेत कामतः इति प्रतिषेधान्निन्दितग्रहणेनैव प्रसज्जंस्त्विन्द्रियार्थेषु इत्येतद्गतार्थमित्यतः पृथक् न वक्तव्यमुच्यते अस्य स्नातकव्रतमध्ये पाठात्तत्र न च व्रतानीमानि धारयेदित्येवंविधमुखेनोपक्रमाद्विधिसंस्पर्शयोर्थक्रियात्मकत्वात्प्रतिषेधसंस्पर्शः येन पृथगभिधानम्। किं चासत्यस्मिन्ब्राह्मणांश्च स्नातकव्रताधिकारादतः प्रायश्चित्तीयता स्यान्नेतरेषाम्॥ ४३॥

(९) **भारुचिः**। श्रौतस्मार्तमिज्याध्ययनादि **विहितम्**; **निन्दितं** च प्रतिषिद्धं **समाचरन्** हिंसानृतस्तेयादि, **प्रसक्तश्चेन्द्रियार्थेष्व**भिप्रेतपुरुषार्थसाधनेषु शब्दादिषु, **प्रायश्चित्तीयते नरः**। **नर**ग्रहणाद्वा सर्ववर्णधर्मोऽयं गम्यते। ननु चेन्द्रियार्थप्रसंगस्य निन्दितग्रहणेनैव गृहीतत्वात् पुनरारंभो न न्याय्य इति। अस्य परिहारः। येष्वस्याः प्रतिषेध **इन्द्रियार्थेषु** यथा मांसाशनेऽन्यायतः क्षत्रियादिस्त्रीपरिग्रहादौ च, तेष्वपि प्रकर्षेण सक्तिप्रतिषेधार्थमस्य पृथग्ग्रहणं युक्तम्। कथं, असौ प्रायश्चित्तीयत इति।॥ ४३॥

## अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः॥
## कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्॥ ४४॥

(१) **मेधातिथिः**। कामकारकृतेऽप्यतिक्रमे प्रायश्चित्तगौरवार्थमिदमुच्यते। **अकामतः कृत** इति प्रमादकृते पापे शास्त्रव्यतिक्रमे **प्रायश्चित्तमाहुः**। कस्य पुनर्हेतोः। विधिः। 'प्रतिशास्त्रमतिक्रम्याकार्ये प्रवर्तते स प्रायश्चित्तमाचरिष्यत' इति। कोऽत्र विशिष्टहेतुः यस्मात्कामकृते दोषे प्रायश्चित्तशास्त्रानर्थक्यमिति मन्यन्ते। एवं पूर्वपक्षभङ्गचोपन्यस्यति। **कामकारकृतेऽपीति** शब्दात्कामतोऽकामतश्च कृते व्यतिक्रमे प्रायश्चित्तं कर्तव्यमिति शास्त्रार्थः। **श्रुतिनिदर्शनादिति** वैदिकलिङ्गनिदर्शनमुपहव्यब्राह्मणमुदाहर्तव्यम्। 'इन्द्रो **यतीन्** शालावृकेभ्यः प्रायच्छत्'। न च श्वभ्यो दानं यतीनामकामतः संभवति। उपहव्यं प्रायश्चित्तार्थं प्रजापतिरिन्द्राय प्रायच्छदिति स्पष्टार्थः॥ ४४॥

(२) **सर्वज्ञनारायणः**। **प्रायश्चित्तं** पापनिर्णेजकं तपोविदुषः कर्तव्यत्वेन। कामकारकृते तु महापातके वैधमरणान्निष्कृतिरन्यथा तु भोगादेवेति केषांचिन्मतम्। तत्र स्वमतं प्रमाण-

दर्शनपूर्वकं दर्शयति **कामकारेति। कामकारः** कामपूर्वकः प्रयत्नः। तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजत इति श्रुतिः। न चात्राकामकृता ब्रह्महत्या ग्राह्या। इन्द्रो यतीन्सालावृकेभ्यः प्रायच्छत्तमश्लीला वागित्यवदत्स प्रजापतिमुपाधावत्तस्मा एतमुपहव्यं प्रायच्छदिति प्रक्रमान्न चाज्ञानादेवापि हत्येति प्रकल्प्यं यतीनां तपसो भयादेव। तेन ज्ञात्वा धातनस्य प्रकृतत्वादि (यदा चैवं स्थितं तदाह **अकामत इति**। अकामतोऽज्ञाने सत्यपि अग्रे मोहादित्युक्तेः। वेदाभ्यासेन गायत्र्यादिजपेन। विप्रस्य जप्येनैव तु संसिध्येद् ब्राह्मण इत्युक्तत्वात्) ॥ ४४ ॥

**(३) कुल्लूकः। अबुद्धिकृते पापे** प्रायश्चित्तं भवतीत्याहुः पण्डिताः एके पुनराचार्याः कामतः कृते पापे प्रायश्चित्तं भवतीत्याहुः एतच्च पृथक्कृत्याभिधानं प्रायश्चित्तगौरवार्थं श्रुतिनिदर्शनादिति। इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् तमश्लीला वागित्यवदत् स प्रजापतिमुपाधावत्तस्मात्तमुपहव्यं प्रायच्छदिति अस्यार्थः इन्द्रो यतीन्बुद्धिपूर्वकं स्वभ्यो दत्तवान्स प्रायश्चित्तार्थं प्रजापतिसमीपमगमत्तस्मै प्रजापतिरुपहव्याख्यं कर्म प्रायश्चित्तं दत्तवान्। अतः कामकारकृतेप्यस्ति प्रायश्चित्तम् ॥ ४४ ॥

**(४) राघवानन्दः।** इच्छानिच्छाकृते पापे मतभेदं प्रदर्शयन्प्रायश्चित्तमाह **अकामत इति** द्वाभ्याम्। श्रुतिनिदर्शनात् इन्द्रो यतीन्सालावृकेभ्यः प्रायच्छत्तमश्लीला वागभ्यवदत्स प्रजापतिमुपाधावत्तस्मा इंद्रायैतमुपहव्यं प्रायच्छदिति श्रुतेः। सालावृकेभ्यः श्वभ्यः अश्लीला-ब्राह्महासीत्येवंरूपा उपहव्यमश्वमेधरूपं प्रायश्चित्तं प्रायच्छदुपदिदेशेति श्रुतेरर्थः। एके मन्वादयः ॥ ४४ ॥

**(५) नन्दनः। आकामतो**ऽमतिपूर्वतः बुधाः सर्वे विद्वांसः **एके** कतिपये श्रुतिनिदर्शनात् ॥ ४४ ॥

**(६) रामचन्द्रः। एके** आचार्याः **कामकारकृते** पापे प्रायश्चित्तं आहुः ॥ ४४ ॥

**(७) मणिरामः।** पापद्वैविध्यमाह **अकामत इति** ॥ ४४ ॥

**(८) गोविन्दराजः। आकामत इति।** अबुद्धिपूर्वकृतपापप्रायश्चितार्थं प्रजापतिराहेति श्रुत्यर्थः ॥ ४४ ॥

**(९) भारुचिः। अकामतः कृते पापे** पापार्थे तु व्यतिक्रमे यथोक्ते प्रायश्चित्तं वक्ष्यमाणं **विदुर्बुधाः**। कस्य पुनर्हेतोः। येन स्मृतिप्रामाण्येन हि प्रायश्चित्तोपदेशो युज्यते, न कामतोऽप्यतिक्रमे। यो हि नियमं स्मृतिप्रामाण्यमुल्लङ्घ्य प्रवर्तते, तं प्रति प्रायश्चित्तोपदेशोऽनर्थकः। येन तदव्यवसायतः लंघयिष्यति। यतः किं तस्यैतेनोपदिष्टेनेति प्रायश्चित्तोपदेशोऽनर्थः। एवमेतस्मिन्नेव प्रायश्चित्ताधिकरणे प्राप्त इदमन्यद् द्वितीयं प्रायश्चित्ताधिकरणमुच्यते **कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्**। एवं हि श्रूयते इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्। तमश्लीला वागभ्यवदत्। स प्रजापतिमुपाधावत्। तस्मादेतमुपहव्यं प्रायच्छत्" इत्येतदुपहव्यार्थवादब्राह्मणं दर्शयति कामतोऽप्यसति प्रायश्चित्तमिति। अविशेषण निमित्तमात्रे स्मर्यमाणं प्रायश्चित्तमकामकृत एवेत्युक्तम्। तथा

चातुर्वेदलोकयोरुभयथाभिव्यतिक्रमे प्रायश्चित्तं दृष्टम्, यतस्तेन चेदमनुमातव्यमिति। तथा च संदर्शयति पक्षद्वयमप्याश्रित्य ॥ ४४ ॥

**अकामतः कृतं पापं वेदाभ्यासेन शुद्धयति ॥**
**कामतस्तु कृतं मोहात्प्रायश्चित्तैः पृथग्विधैः ॥ ४५ ॥**

(१) मेधातिथिः। किं पुनरेतानि प्रायश्चित्तानि निमित्तमात्रपर्यवसायीनि सन्ध्योपासनादिवत्, उत कार्यपर्यन्तानि शारीरशौचवदुत्पन्नदोषनिर्घातार्थानि। तत्र केचिदाहुः। न हि कर्म क्षीयते। कार्यविरामित्वमेव धर्माधर्मयोः। न हि कर्माणि स्वफलमदत्त्वा प्रलीयन्ते। तदुक्तं 'न हि कर्म क्षीयत' इति। तस्माद्योऽतिक्रमकारी स ततो नरकफलं भुंक्त एव। प्रायश्चित्तानि यदि न करोति ततस्तदतिक्रमात्प्रत्यवायान्तरोत्पत्तिः। तदेतदयुक्तम्। न हि कर्म चरितव्यमतो नित्यं प्रायश्चित्तम्। 'विशुध्यत' इति स्वशब्देनैव शुद्धयर्थता विहिता। तथा च तैः कृतैरपोहेत पाप स्वयं कृतत्वात्। यदप्युच्यते "प्रतिषेधविधिना प्रतिषिध्यमानक्रियाकर्तुः प्रत्यवायभागित्वमवगमितं, न तस्य प्रायश्चित्तैर्मिथ्यात्वं शक्यते कर्तुं" तदप्ययुक्तम्। यतस्तेन दुःखहेतुता तस्यावगमिता। प्रायश्चित्तेष्वपि तपादानादि दुःखमस्त्येव। अल्पेन तादात्मिकेन दुःखेनागामिनः संभाव्यमानस्य महतो दुःखस्य निवृत्तिर्युक्तैव। यथा व्याधेस्तिक्तकटुकौषधदानलघ्वाहारादिना। यथा व्यतिक्रमं कृत्वा कश्चित्स्वयमागत्य राजनिवेदनं करोति 'इत्येवं कर्मास्मि' इति सोऽर्द्धदण्डभाग्भवति। यस्तु राजपुरुषैर्हठादानीयेत स भूयो दण्डयते। एवमुपदेशानामर्थवत्वसिद्धिः। अतः स्वयं कार्यविरोधित्वमस्य विहितत्वात्। निष्कृतिः प्रायश्चित्तमिति समाख्यानमपि सत्तदेव कृतदोषस्य निर्यातनमपि। अकारणं निर्यातो निष्कृतिरिति उच्यते। एवं प्रायश्चित्तमपि नास्याधिकारप्रतिप्रसवार्थम्। पंचानामेव पातकानामधिकारोपगमविहितत्वाद्द्विजातिकर्मभ्यो हानिः पतनमिति। न चात्र 'वेदाभ्यासोऽकामतः, कामतस्तप इति, विषयविभागो बोद्धव्यः। उभयार्थोभयत्रोपदर्शनार्थत्वात्। निमित्तोपदेशकरणे पठितत्वात्। 'ब्रह्महा द्वादशे'त्यादि प्रायश्चित्तानामुपक्रम्यमाणत्वात्। तस्मादकामतो लघुप्रायश्चित्तं कामतो गरीय इति श्लोकस्य तात्पर्यम्। "ननु चाकामतो नैव तस्य कर्तृत्वं, बुद्धिपूर्वं कुर्वन्कर्त्तेत्युच्यते। यथा च लौकिको 'दैवेन कार्यते। किमयं करोतीति'। किं च लिप्सया यत्र प्रवृत्तिस्तत्र प्रतिषेधः। यो हि मद्याय स्पृहयति स पिपासुं न कदर्थयति 'मा पासीः सुराम्' इति। यस्तु जलार्थी जलबुद्धया सुरां पीतवांस्तस्याजानतो नापराधो न हि तस्य सुरालिप्सया प्रवृत्तिः। अथोच्यते 'विधिलक्षणाप्रवृत्तिर्न निषिध्यते', सत्यम्। भवत्वनर्थलक्षणानां तु मध्ये तर्ह्युदकेन च सर्वस्या अर्थलक्षणायाः प्रतिषेधः"। केचिदाहुः। प्रत्यवायपर्यन्तो विधिर्विषभक्षणवन्निषेधशास्त्रार्थः। तेषामचोद्यमेत्। विषमविशषेणोपात्तं ज्ञानतोऽज्ञानतश्च मरणाय कल्पत एव। एवं ब्रह्महत्यादयोऽपीति। येषामपि 'कर्तव्यमिति वचनात्' क्रियते, 'न कर्तव्यमिति' न क्रियते, तेषामपि लौकिकक्रियया प्रवर्तमानस्य निषेधः प्रवर्तमानश्चोच्यते प्रवृत्तः कर्त्ता। कर्तृत्वमबुद्धिपूर्वकमप्यस्ति। कूले पततीति। न चायं गौणः कर्तृताभावः। 'स्वतंत्रः कर्ते'ति हि स्मर्यते। ने'च्छया प्रवर्तते यः स कर्तेति'। किं चास्मादेव वचनात्प्रमादकृतो दोषोऽस्ति, प्रायश्चित्तमिति, किमपरेण विकल्पितेन ॥ ४५ ॥

(२) **सर्वज्ञनारायणः** । अन्येषां तु तत्स्थाने दानाद्येव । एतच्चानिर्दिष्टप्रायश्चित्त-विशेषपापविषयम् । **मोहादज्ञानेनापि** । **कामत** इच्छया कृतं पृथग्विधैः पराकादिप्रायश्चित्तैः । एतेन कामादेव प्रायश्चित्तं वृद्धिह्रासयोः कारणं ननु ज्ञानाज्ञाने इति कथयति । यत्रापि च ज्ञानात्कृच्छ्राब्दमज्ञानादैन्दवद्वयमित्यादौ ज्ञानपदेनोल्लेखस्तत्रापि कामना हेतुज्ञानमवेष्टं तेन कामनैव लक्ष्यते कर्तृत्वं प्रति च ज्ञानात्कामनैव नेदीयसी ज्ञानमिच्छाप्रयत्न इति क्रमादतः सैवान्वयव्यतिरेकाभ्यां कर्तृत्वोत्कर्षापकर्षनिबन्धनप्रायश्चित्तवृद्धिह्रासहेतुः । न च ज्ञाने विषयविनिगमनापि शङ्क्या किं पापविशेषप्रयोजकीभूतब्राह्मणत्वाद्युपाधिज्ञान-मिष्टमुत तद्वधपापहेतुत्वज्ञानमिति ।। ४५ ।।

(३) **कुल्लूकः** । अनिच्छातः कृतं पापं वेदाभ्यासेन शुध्यति नश्यति वेदाभ्यासेनेति कामकृतविषयप्रायश्चित्तापेक्षया लघुप्रायश्चित्तोपलक्षणार्थं प्रायश्चित्तांतराणामपि विधाना-द्रागद्वेषादिव्यामूढतया पुनरनिच्छातः कृतं नानाप्रकारैः प्रायश्चित्तैर्विद्याधनतपोभिः शुध्यतीति गुरुप्रायश्चित्तपरं अतः पूर्वोक्तस्यैवायं व्याकारः यद्यप्यधिकारनिरूपणं प्रकृतप्रायश्चित्तं त्वनंतरं वक्ष्यति तथाप्यज्ञानाल्लघुप्रायश्चित्ताधिकारी ज्ञानात् गुरुप्रायश्चित्तेऽधिक्रियत इति अधिकारिनिरूपणमेवेदम् ।। ४५ ।।

(४) **राघवानन्दः** । **पापं** ब्रह्महत्यादि । **वेदाभ्यासेन** वक्ष्यमाणपावमान्याद्यभ्यासेन । **पृथग्विधैः** द्वादशवार्षिकाद्यैः ।। ४६ ।।

(५) **नन्दनः** । **मोहः** कामक्रोधाद्यभिभवः ।। ४५ ।।

(६) **रामचन्द्रः** । **मोहात्** रागादिव्यामूढता । कामतस्तु कृतं एनः पृथग्विधैः प्रायश्चित्तैः अपैति ।। ४५ ।।

(७) **मणिरामः** । उभयोर्नाशहेतुमाह ।। **अकामत इति** । ४५ ।।

(८) **गोविन्दराजः** । **अकामत इति** । अनिच्छातः कृतं पापं शुध्यति वेदाभ्यासेन रागद्वेषादिव्यामूढया पुनरिच्छातः कृतं नानाप्रकारैः प्रायश्चित्तैरिति पूर्वोक्तदार्ढ्यार्थमेत-दधिकारनिरूपणप्रकरणात् न तु विषयविभागार्थं ब्रह्महाद्विज्ञातं समाहृत्यातः प्रभृति प्रायश्चित्तानां उपक्रम्यमाणत्वादुत्तरत्र चोभयोभयत्राम्नानात् ।। ४५ ।।

(९) **भारुचिः** । तथा चोत्तरत्र प्रदर्शयिष्यामो विशेषमनयोः "कामतो ब्राह्मणवधे निष्कृ-तिर्न विधीयते" इति । एवमादौ चायं नियमार्थः श्लोकः । **अकामतो** वेदाभ्यासः, **कामतः** कृतस्यान्यद् विविधं प्रायश्चित्तमिति । यस्मादुभयमुभयोरुत्तरत्र वक्ष्यति । इयांस्त्वनयो-र्विशेषः । अकामतो व्यतिक्रमेऽल्पः प्रत्यवायः कामतो महान् । तथा चोक्तं **कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथग्विधैरिति** । अपरः पुनराह -नैव प्रायश्चित्तानुष्ठानमुपपद्यते यस्मान्न हि कर्म क्षीयतेऽन्तरेण कार्यारम्भम् । वातपित्तश्लेष्माशयवत् । यत इदमुच्यते । कर्तव्यमेवेदं स्मृतिशास्त्रोपदेशसामर्थ्यात् । तथैव हि धर्माधर्मप्राप्तिपरिहारव्यवस्थायामागम एव प्रमाणं नोपपत्तिः, एवं विनाशोऽप्यागमत एव कर्मणः किं न श्रद्धीयते । तथा च सति प्रायश्चित्तं न्यायोपदेशम् । इतरथाप्यर्धवैशसं स्यादिति । एवं च पुरूषार्थकारित्वं शास्त्रस्योप-

पद्यते; लघुप्रायश्चित्तप्रदर्शनेन महतोऽर्थलक्षणात् क्षयात् प्रायश्चित्तात्। अपि चास्यात्मसंयम-दुःखमतिमहदस्ति। यतः अत्रापि कार्यादेवास्य व्यतिक्रमाधर्मस्य दुःखलक्षणाद् विनाशं प्रतिपद्यामहे। यथा च वाताद्याशयस्योभयमत्यनीकमौषधं दुःखं च, एवमधर्मस्यापि प्रायश्चित्तं नरकादिदुःखानुभवश्च स्याद् विनाशहेतुः। एतेन वृश्चिकविषं व्याख्यातं श्रुतिरपि च प्राय-श्चित्तादकुशलकर्माणि यथा गेहदाहादीनि निमित्तानि नैमित्तिकानां कर्मणां स्वर्गफलानामिति यथा क्षामवतीष्टिः। अत्र भूमः प्रतिषेधत्सु निमित्तेषु प्रायश्चित्तानुच्यन्ते, यतस्तानि दोष-निर्हरणार्थान्येव प्रतीयते। यथा चिकित्सायां दोषवत्सु निमित्तेषु ज्वरादिषु विशोषणादीनि। स्फुटमेव च स्मृतिरुपरिष्टाद् वक्ष्यति—"चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये" इत्येवमादि। अपरे त्वधिकारार्थानि। तथा च गौतमः, "द्विजाति कर्मभ्यः हानि पतनम्" इत्याह। ब्रह्महत्यायामेवैतत्। पातकपदार्थावधारणार्थे वाक्ये श्रूयते, न त्वन्यस्मिन् व्यतिक्रमवाक्ये। दोषक्षयादेव च कर्मान्तराधिकारो विज्ञेयः, नाक्षीनदोषस्य। यथातुरस्येति। यच्च निमित्ते कर्माङ्गं प्रायश्चित्तमिति कैश्चिदुच्यते, तच्च पुरुषधर्मत्वादत्र न संभवति। प्रायश्चित्तस्य व्यतिक्रमस्य कारणमधुनोच्यते ॥ ४५ ॥

**प्रायश्चित्तीयतां प्राप्य दैवात्पूर्वकृतेन वा ॥**
**न संसर्गं व्रजेत्सद्भिः प्रायश्चित्तेऽकृते द्विजः ॥ ४६ ॥**

(१) **मेधातिथिः।** **दैवात्स्वीकृतात्प्रमादादित्यर्थः।** अन्ये तु दैवशब्दस्थाने मोहादिति पठन्ति। मोहादेवाकार्यं क्रियते। को ह्यमूर्खः शास्त्रं व्यतिक्रमिष्यति। **पूर्वकृतेन** जन्मान्तरकृते-न चोपभुक्तफलेन कर्मणा विशेषेण कौनख्यादिलिङ्गाद्यनुमितेन। एतदुक्तं भवति। इह जन्मकृते व्यतिक्रमे बुद्धिपूर्वमबुद्धिपूर्वं वा तथा जन्मान्तरकृतेऽपि लिङ्गानुमेये कर्तव्यम्। किं पुनः कुनख्यादीनां प्रायश्चित्तम्। कृच्छ्रातिकृच्छ्रौ चान्द्रायणमिति सर्वप्रायश्चित्तानि। वसिष्ठेन तु 'यस्य यल्लिङ्गं तेन तदेव प्रायश्चित्तं केनचिदंशेन कर्तव्य-मिति' पठितम्। अतश्चैव ते सर्वेऽकृतप्रायश्चित्ताः संसर्गं सद्भिर्वर्जयेयुः। अध्ययनादिक्रिय-यैकस्थानादिरूपतया। संसर्गो यद्यप्युभयाश्रयत्वादन्यतरप्रतिषेधेनोभयोरपि सिद्धः प्रति-षेधस्तथापि, 'सद्भिस्तैः संसर्गो न कर्तव्य' इति पुनः प्रतिषिध्यते उत्तरत्र, कर्तृभेदात्। एकस्य हि प्रतिषेधे स एव प्रायश्चित्ती स्यान्न द्वितीयः, सत्यपि संसर्गे। अत उभयोः प्रायश्चित्तार्थ-मुभयत्र प्रतिषेधः। सतामसतां चातः श्यावदन्तिप्रभृतिभिरकृतप्रायश्चित्तैः सह संसर्गो न कर्तव्यः ॥ ४६ ॥

(२) **सर्वज्ञनारायणः।** **प्रायश्चित्तीयतां** जपपराकादिप्रायश्चित्तार्हताम्। **दैवादनिच्छ-यापूर्वकृतेन** पूर्वं स्वेच्छया कृतेन। **अकृते** प्रायश्चित्ते न संसर्गं सद्भिर्गच्छेत् तत्करणपरस्यापि। पापोत्पादनेन पापाधिक्यापत्तेः ॥ ४६ ॥

(३) **कुल्लूकः।** **दैवात्प्रमादादन्यशरीरकृतेन पूर्वजन्मार्जितदुष्कृतेन** क्षयरोगादिभिः सूचितेन प्रायश्चित्तीयतां प्राप्याकृते प्रायश्चित्ते साधुभिः सह याजनादिना संसर्गं न गच्छेत् ॥ ४६ ॥

(४) **राघवानन्दः**। निमित्तद्वैविध्यमनुवदंस्तद्वतो नियममाह **प्राय इति**। **प्रायश्चित्तीयतां** प्रायश्चित्तनिमित्तब्रह्महत्यादिमताम्। **दैवा**दनवधानात्। **पूर्वकृतेन** ऐहिकेन जन्मान्तरकृतेन कौनख्यादिव्यङ्ग्येन। अकृते प्रायश्चित्ते **सद्भिरदुष्टैः संसर्गं** संबन्धं न व्रजेत् द्विज इत्युपलक्षणं नरमात्रस्य ॥ ४६ ॥

(५) **नन्दनः**। प्रायश्चित्तस्य कर्तव्यत्वे कारणमाह **प्रायश्चित्तीयतामिति**। प्रायश्चित्तीयतां प्रायश्चित्तार्हतां दैवात्प्रायश्चित्तीयतान् वक्ष्यमाणं रूपविपर्यययुक्तत्वमकृत इति पदं सद्भिः संसर्गं न व्रजेन्न संसर्गयोग्यः अयमभिप्रायः। केवलमामुष्मिकप्रत्यवायपरिहारार्थमेव प्रायश्चित्तं कर्तव्यम् ॥ ४६ ॥

(६) **रामचन्द्रः**। **प्रायश्चित्तीयतां** प्रायश्चित्तमिति यस्य सः प्रायश्चित्ती तस्य भावः प्रायश्चित्तीयता ताम्। द्विजः अकृते प्रायश्चित्ते सद्भिः संसर्गं न व्रजेत् ॥ ४६ ॥

**[प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते।**
**तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम् ॥ १॥]**

(७) **मणिरामः**। **दैवात्** प्रमादात्। इहजन्मकृतेन पापेन। पूर्वजन्मकृतेन वा अन्यशरीरकृतेन पूर्वजन्मार्जितदुष्कृतेन क्षयरोगादिभिः सूचितेन प्रायश्चित्तीयतां प्रायश्चित्तकरणयोग्यतां प्राप्य अकृते प्रायश्चित्ते सद्भिः सह याजनादिना संसर्गं द्विजः न गच्छेत् ॥ ४६ ॥

(८) **गोविन्दराजः**। **प्रायश्चित्तीयतामिति**। प्राग्जन्मार्जितदुष्कृतकरो नरः श्यावदंतत्वादिश्रुतेन प्रायश्चित्तार्हतां प्राप्य पूर्वकृतेन न वैतच्छरीरकृतेन प्रमादेनावाप्य प्रायश्चित्ते कृते साधुभिः सहाध्ययनक्रियादि संसर्गं न गच्छेत् ॥ ४६ ॥

(९) **भारुचिः**। **दैवशब्दः** साधारणोऽप्यधर्मविषयः सामर्थ्याद् विज्ञेयः! कस्मात्। व्यतिक्रम-कारणानुरूपत्वात् कार्यस्य। **पूर्वकृतेन** वेत्यत्र मोहः सम्बध्यते, व्यतिक्रमहेतुत्वेन। नाधर्मः, तस्योक्तत्वाद्, दृष्टश्च मूढस्य व्यतिक्रमो येन लोके। अतोऽयं कस्यचिद् भवति, अपरस्य मोहादिति ब्रुवता कुशलकर्मप्रतिपत्तिः पूर्वधर्मशेषादसम्मोहाच्च संम्यग्ज्ञानलक्षणाद् भवतीत्येतदर्थसिद्धम्। यतः असम्मुग्धेन सता धर्मानुष्ठाने प्रयतितव्यम्, नैवं धर्माधर्माख्यं पुरुषस्य प्रयोजकमिति कृत्वा निरोधेन भवितव्यम्। एवं शास्त्रोपदेशस्यार्थवत्वम्, इतरथा ह्यसति पुरुषकारे शास्त्रोपदेशो निष्फलः स्यात्, धर्माधर्मकार्यत्वादेव पुरुषप्रवृत्तेरिति। ननु च सतामेवासत्संसर्गप्रतिषेधादेतत् सिद्धं न सिद्ध्यति, क्रियाभेदात्। पापकृद्भिरिह संसर्गप्रतिषेधान्न पापकृतां सद्भिः संसर्गः प्रतिषिध्धो भवति, येन भिन्ने एते क्रिये। एवं च यस्य नियम उच्यते तस्यैव व्यतिक्रमे प्रायश्चित्तं स्यात्, नेतरनियमभावात्। अतोऽस्य प्रतिषेधो युक्तारंभः शूद्रस्य द्विजातिस्त्रीप्रतिषेधवदिति। अपरस्तु पाठः— "प्रायश्चित्तीयतां प्राप्य मोहात् पूर्वकृतेन वै" अर्थस्तु स एव। प्रायश्चित्तानुष्ठानसामर्थ्यप्रदर्शनार्थमधुनोच्यते ॥ ४६ ॥

**इह दुश्चरितैः केचित्केचित्पूर्वकृतस्तथा ॥**
**प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्ययम् ॥ ४७ ॥**

(१) **मेधातिथिः**। एतदेवाह। **इह दुश्चरितैः** केचिदस्मिन् जन्मनि प्रतिषिद्धाचरणैः। तथा **पूर्वकृतैः** कर्मभिस्तथोक्तं प्राक्। स इदानीं **रूपविपर्यय**प्रपंचो दुष्कृतशेषचिन्हरूपतोऽनुक्रम्यते ॥ ४७ ॥

(२) **सर्वज्ञनारायणः**। इहेहजन्मनि। दुश्चरितैरुत्कटैः। रूपविपर्ययं कौनख्यादि लभन्ते। केचित्पूर्वकृतैर्नरकेऽननुभूतैः ॥ ४७ ॥

(३) **कुल्लूकः**। इह जन्मनि निषिद्धाचरणैः केचित्पूर्वजन्मकृतैर्दुष्टस्वभावा मनुष्याः कौनख्यादिकं रूपविपर्ययं प्राप्नुवन्ति ॥ ४७ ॥

(४) **राघवानन्दः**। एतत्स्पष्टयति **इहेति**। अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुत इत्युक्तेरिह जन्मन्यपि फलप्रदत्वं कर्मणां पापः पापेनेति श्रुतेः। रूपपदं दुःखस्याप्युपलक्षकम् ॥ ४७ ॥

(५) **नन्दनः**। किन्तु ऐहिकसंसर्गयोग्यत्वार्थं प्रायश्चित्तं कर्तव्यमिति कारणान्तरमाह **इह दुश्चरितैरिति**। अत्राप्यकृते प्रायश्चित्त इत्यनुषक्तव्यमियतोऽस्मिँल्लोके रूपविपर्ययं प्राप्नुवन्ति तस्मादपि प्रायश्चित्तादिकं कर्तव्यमित्यभिप्रायः ॥ ४७ ॥

(६) **रामचन्द्रः। दुरात्मानः** कृतपापाः **नराः** पूर्वविपर्ययं प्राप्नुवन्ति ॥ ४७ ॥

(७) **मणिरामः। दुश्चरितैः** निषिद्धाचरणशीलैः ॥ ४७ ॥

(८) **गोविन्दराजः। इहेति**। केचिद्दुष्टात्मानो मनुष्या इह विरूद्धाचरणैः कौनख्यादिकं रूपविषयं प्राप्नुवंत्यन्ये च प्राग्जन्मार्जितैर्दुष्कृतैरिति ॥ ४७ ॥

(९) **भारुचिः**। एवं च पूर्वकृतादेव कर्मणोऽभ्युदयप्रत्यवायाविति यत् सांख्यैरूच्यते तदवसन्नम्। सोऽयमधुनाकुशलकर्मनिमित्तो रूपविपर्ययप्रपञ्चोऽनुक्रम्यते प्रायश्चित्तानुष्ठानशेषतया ॥ ४७ ॥

**सुवर्णचौरः कौनख्यं सुरापः श्यावदंतताम् ॥**
**ब्रह्महा क्षयरोगित्वं दौश्चर्म्यं गुरुतल्पगः ॥ ४८ ॥**
**पिशुनः पौतिनासिक्यं सूचकः पूतिवक्त्रताम् ॥**
**धान्यचौरोऽङ्गहीनत्वमातिरैक्यं तु मिश्रकः ॥ ४९ ॥**
**अन्नहर्तामयावित्वं मौक्यं वागपहारकः ॥**
**वस्त्रापहारकः श्वैत्र्यं पङ्गुतासश्वहारकः ॥ ५० ॥**

**एवं कर्मविशेषेण जायन्ते सद्विगर्हिताः ।।**
**जडमूकान्धबधिरा विकृताकृतयस्तथा ।। ५१ ।।**

(१) **मेधातिथिः**। क्षयो नाम रोगो राजयक्ष्मेति वैद्यानां प्रसिद्धस्तेन तद्वान्भवति ब्रह्महत्याविशेषेण। गुरुस्त्रीगामी **दुश्चर्मा**। क्वथितगन्धवाहिन्या नासिकया युक्तः **पिशुनः** एवं **सूचको** दुर्गन्धवाह्यास्यः। "ननु च सूचकः पिशुन" एव। सत्यम्। एकः कल्पयित्वा परदोषान् प्रकाशयति। अन्यस्तु सत्यानेवाविदितानिति भेदः। **आतिरैक्यम**धिकांगता। **मिश्रको** यो द्रव्याण्यद्रव्यैस्तदाभासैः संमर्दयति। यथा कुंकुमं कुसुंभेनान्यैरन्यानि। **आमयावी** यस्य भुक्तमन्नं न सम्यक् जीर्यते। **मौक्यं** वाग्वैकल्यं यत्राप्रतिपत्तिमानपस्मारी। शिष्टं प्रसिद्धम्। **विकृताकृतयः**। 'आकृतिः' संस्थानं 'विकृता'ऽमनोरमा निन्दितैषां कर्मविशेषेणेति। एषां कर्मणां कुम्भीपाकयमयातनास्थानेषु फलं तदनुभूतवत ईषच्छेषे तस्मिन् कर्मण्युद्रिक्ते च सुकृतेऽदत्तफले फलदानोन्मुखे दुष्कृतस्यासद्भावोऽतः कर्मविशेषोपपत्तिः ।। ४८–५१ ।।

(२) **सर्वज्ञनारायणः**। किं विशिष्टैरेतत्प्रपञ्चयति **सुवर्णचौर** इति। **श्यावदन्तः** कपिशदन्तः। **दौश्चर्म्यम**कोशलिङ्गत्वम् ।। ४९ ।।

(३) **कुल्लूकः**। ब्राह्मण**सुवर्णचौरः** कुत्सितनखत्वं प्राप्नोति निषिद्ध**सुरापः** श्यावदन्ततां **ब्रह्महा** क्षयरोगित्वं **गुरुभार्यागामी** विकोपमेहनत्वं **पिशुनो** विद्यमानदोषाभिधायी दुर्गंधिनासत्वं अविद्यमानदोषाभिधायको दुर्गंधिमुखत्वं **धान्यचौरो**ऽङ्गहीनत्वं धान्यादेरपद्रव्येण **मिश्रणकर्ता**ऽतिरिक्ताङ्गत्वं **अन्नचौरो** मन्दानलत्वं अननुज्ञाताध्यायी मूकत्वं **वस्त्रचौरः** श्वेतकुष्ठत्वम् **अश्वचौरः** खंजत्वं एवं बुद्धिवाक्चक्षुःश्रोत्रविकला विकृतरूपाः साधुविगर्हिताश्च प्राग्जन्मार्जितोपभुक्तदुष्कृतशेषेणोत्पद्यन्ते ।। दीपहर्ता भवेदन्धः काणो निर्वापकस्तथा। हिंसारुचिः सदा रोगी वाताङ्गः पारदारिकः ।। ४८ ।। ४९ ।। ५० ।। ५१ ।।

(४) **राघवानन्दः**। तत्र किं निमित्तं किं **वैरूप्य**मित्यत्राह **सुवर्णेति** त्रिभिः। **कौनख्यं** क्लिन्ननखता तेनैव तदपि हरणात्। **श्यावदन्तता** स्वभावतः श्यामदन्तता पानकाले सुरया तत्स्पृष्टेः। **क्षयरोगित्वं** राजयक्ष्मयुक्तता। **दौश्चर्म्यं** शश्नस्य विकारः अकोशलिङ्गत्वं शिङ्गी तत्कृतैश्च ।। ४९ ।।

(५) **नन्दनः**। रूपविपर्ययप्राप्तिमेव चतुर्भिः श्लोकैर्दर्शयति **सुवर्णचौरः कौनख्य**मिति ।। ४९ ।।

(६) **रामचन्द्रः**। तेन तेन स्वपापेन रूपविपर्ययमाह **सुवर्णेति**। **सुवर्णचौरः** विप्रसंबन्धिनः सुवर्णस्य चौरः **कौनख्यं** कुनखस्य भावम्। गुरुतल्पगः **दौश्चर्म्यं** दुश्चर्मणः भावः तम् ।। ४९ ।।

(२) **सर्वज्ञनारायणः**। अतिरिक्तमङ्गाधिक्यम् आतिरेक्यमिति क्वचित्पाठः। **मिश्रको** बुसादिना मिश्रीकृत्य धान्यविक्रेता ।। ५० ।।

(४) **राघवानन्दः**। सतो दोषस्य वक्ता **पिशुनः**। असतस्तु **सूचकः**। **आतिरैक्यम**ङ्गस्यैव। **मिश्रकः** धान्यस्येतरेण यवादिना ।। ५० ।।

(५) **नन्दनः । आतिरैक्यम**तिरिक्ताङ्गत्वं तत्तदाभासैर्धान्यादि मिश्रीकृत्य येन विक्रयादि क्रियते स मिश्रकः ।। ५० ।।

(६) **रामचन्द्रः । पिशुनः** अविद्यमानपरदोषप्रख्यापनशीलः **पूतिनासिक्यं** दुर्गन्धनासिकः सदोषं संकीर्तयित्वा मिश्रकः धान्यस्य अन्नादेर्द्रव्यस्य मेलकः **आतिरेक्यं** अङ्गाधिक्यं षडङ्गुल्यादि ।। ५० ।।

(२) **सर्वज्ञनारायणः । आमयावित्वमग्निमान्द्यम् । वागपहारकोऽ**न्यस्य पदरचनामात्मीयां ज्ञापयन् ।। ५१ ।।

(४) **राघवानन्दः । अन्नहर्ता** पक्वान्नहर्ता **आमयावित्वं** मन्दानलताम् । **मौक्यं** मूकताम् । **वागपहारकोऽ**स्मादेतन्नाधीतमिति मिथ्यावादी यस्तत्कृतं पुस्तकं स्वनाम्ना अङ्कयति सो वागपहारकः । **श्वैत्र्यं** श्वेतकुष्ठताम् । देहस्य कुत्सितार्थं तिष्ठतीति कौनख्यादि (इति द्वादश सुवर्णचौरादयः प्राप्नुवन्तीत्यनुषज्जते) दीपहर्ता भवेदन्धः काणो निर्वापको भवेत् । हिंसारतः सदा रोगी षंडश्च पारदारिक इति क्वचित् (पाठः) ।। ५१ ।।

(६) **रामचन्द्रः । अन्नहर्ता** अन्नस्य हर्ता आमरोगित्वम् । **मौक्यं** मूकस्य भावः । **वागपहारकः** पुस्तकापहारकः **श्वैत्र्यं** श्वेतमण्डलकारकम् ।। ५१ ।।

[ **रामचन्द्रः ।** दीपनिर्वापकः काणः ।। १ ।। ]

(७) **मणिरामः ।** रूपविपर्ययानाह ।। **सुवर्णेति** ।। ४८ ।।

**पौतनासिक्यं** दुर्गंधिनासत्वम् । **सूचकः** अविद्यमानदोषाऽभिधायकः **पूतिवक्त्रतां** दुर्गंधिमुखत्वम् । **मिश्रकः** उत्तमवस्तुनि । निकृष्टवस्तुमेलकः **अतिरैक्यं** अधिकांऽगत्वम् ।। ४९ ।। **आमयावित्वं** मंदाग्नित्वं **वागपहारकः** अन्यमध्यापयतो गुरोरदृष्टिस्थाने स्थित्वाऽध्ययनकर्त्ता **मौक्यं** मूकत्वं **श्वेतकुष्ठत्वम् । पंगुतां** चरणराहित्यम् ।। ५० ।। ५१ ।।

(८) **गोविन्दराजः ।** तथा च **सुवर्णचौर इति । पिशुन** इति । **धान्यचौरोऽङ्गहीनत्वं** आतिरैक्यं तु मिश्रकः ।। **अन्न हर्तेति ।**

[ **दीपहर्ता भवत्यन्धः काणो निर्वापकस्तथा ।**
**हिंसायां व्याधिभूयिष्ठं अहिंसायां तु नीरूजः ।। १ ।।** ]

**एवमिति ।** ब्राह्मणः सुवर्णस्तेयः कुत्सितनखत्वं प्राप्नोति । निषिद्धसुरापानसुरापः श्यावदंतत्वम् । ब्रह्महा क्षयव्याधियुक्तत्वम् । गुरुभार्यागो विकाशेन्द्रियत्वम् । परदोषाभिधायी दुर्गन्धिनासिकत्वम् । असदोषारोपकारो दुर्गन्धमुखत्वम् । धान्यचौरोऽङ्गहीनत्वम् । धान्यादेरपरद्रव्यमिश्रयितातिरिक्ताङ्गत्वमन्नचौरो जरान्नत्वम् । अननुज्ञातोऽध्यायी वाग्विकलत्वम् । वस्त्रचौरश्चित्रत्वम् । अश्वचौरः पादवैकल्यं प्राप्नोतीत्येवं बुद्धिवाक्चक्षुःश्रोत्रविकलाकृतरूपाश्च साधुविगर्हिताः । प्राग्जन्मार्जितमापगृहोपभुक्त दुष्कृतकर्मशेषेणोत्पद्यन्ते ।। ४८ ।। ४९ ।। ५० ।। ५१ ।।

(९) भारुचिः। यतश्चैतदेवमकृतप्रायश्चित्तानां नानारूपवैकृत्यमनुभूतयातनास्थान-दुःखानामपि सतां **कर्मविशेषेण** भवति ॥ ५१ ॥

**[ दीपहर्ता भवेदन्धः काणो निर्वापको भवेत्।**
**हिंसया व्याधिभूयस्त्वमरोगित्वमहिंसया ॥ १ ॥ ]**

(२) **सर्वज्ञनारायणः**। कर्मविशेषेण पूर्वमरणान्तरतः कर्मविशेषेणात्र **जायन्ते** भवन्ति। तथा पूर्वजन्माभुक्तावशेषेण **जायन्ते** उत्पद्यन्त इति व्याख्येयम्। जडोऽनाय-त्ताङ्गः ॥ ५२ ॥

(४) **राघवानन्दः**। उपसंहरति **एवमिति**। **विकृताकृतयः** जडादिविकृतरूपाः ॥ ५२ ॥

(५) **नन्दनः**। येयमुक्ता रूपविपर्ययप्राप्तिर्न तत्पापस्य प्रधानफलं रौरवादिषु भुक्त-शेषस्येत्याह **एवं कर्मविशेषेति**। **सद्विगर्हिताः** सत्संसर्गानर्हाः ॥ ५२ ॥

(६) **रामचन्द्रः**। **सद्भिर्विगर्हिताः** निन्द्याः ॥ ५२ ॥

**चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये ॥**
**निन्द्यैर्हि लक्षणैर्युक्ता जायन्तेऽनिष्कृतैनसः ॥ ५२ ॥**

(१) **मेधातिथिः**। **निन्द्यैर्हि लक्षणैः** कुनखश्यावदन्तादिभिरनिष्कृतैनसः ॥ ५२ ॥

(२) **सर्वज्ञनारायणः**। **अनिष्कृतैनसोऽ**कृतप्रायश्चित्ताः ॥ ५३ ॥

(३) **कुल्लूकः**। यस्मादनिष्कृतमनाशितमेनो यैस्ते**ऽनिष्कृतैनसः** अकृतप्रायश्चित्ताः परलोकोपभुक्तदुष्कृतशेषेण निन्द्यैर्लक्षणैः कुनखित्वादिभिर्युक्ता जायन्ते तस्माद्विशुद्धये पाप-निर्हरणार्थं प्रायश्चित्तं सदा कर्तव्यं एवं भिन्ने जुहोतीतिवन्न नैमित्तिकमात्रं प्रायश्चित्तं किंत्व-निष्कृतैनस इत्युपादानात् तथा विशुद्धये चरितव्यमित्युपदेशात्पापक्षयार्थिन एवाधिकारः। तथाहि प्रायश्चित्तं हि चरितव्यमिति विधावधिकारापेक्षायां फलमात्रनिर्देशाद्रात्रिसत्रन्यायेन श्रूयमाणमेव विशुद्धय इति फलमधिकारि विशेषणं युक्तम्। इममेवार्थं स्फुटयति याज्ञ-वल्क्यः॥ विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति। तस्मात्तेनेह कर्तव्यं प्रायश्चित्तं विशुद्धये। पतनमृच्छति पापं प्राप्नोतीत्यर्थः। **विशुद्धये** पापविनाशाय बहून्वर्षगणान्घोरान्नरकान्प्राप्य तत्क्षयात्संसारान्प्रतिपद्यन्ते महापातकिनस्त्विमानित्यादिना महापातक्यादीनां नरकादिप्राप्तिं वक्ष्यति न तन्नैमित्तिक-मात्रत्वं प्रायश्चित्तानां संगच्छते। तस्माद्ब्रह्मवधादिजनितपापक्षयार्थिन एव प्रायश्चित्त-विधावधिकार इति ज्ञेयम् ॥ ५३ ॥

(४) **राघवानन्दः**। फलितमाह **चरितव्यमिति**। **अनिष्कृतैनसः** अकृतप्रायश्चित्ताः निन्दितैः कौनख्यादिलक्षणैः चिन्हैः युक्ता दृश्यन्ते। यतो महापातकिनो**ऽतस्तैर्विशुद्धये प्रायश्चित्तं चरितव्यं** कार्यमित्यन्वयः ॥ ५३ ॥

(५) **नन्दनः**। अकृतप्रायश्चित्तपापास्तैर्लक्षणैः कौनख्यादिभिर्युक्ता जायन्ते तस्मा-दपि प्रायश्चित्तं चरितव्यमिति ॥ ५३ ॥

(६) **रामचन्द्रः । अनिष्कृतैनसः** अकृतप्रायश्चित्ताः ।। ५२ ।।

(७) **मणिरामः ।** यस्मात् **अनिष्कृतैनसः** अनिष्कृतं अनाशितं एनो यैस्ते अनिष्कृतैनसः अकृतप्रायश्चित्ता **निन्द्यैर्लक्षणैः** पूर्वोक्तैः कुनखत्वादिभिः युक्ता जायंते अतः विशुद्धये प्रायश्चित्तं नित्यं चरितव्यं कर्तव्यम् ।। ५२ ।।

(८) **गोविन्दराजः । यत एवं चरितव्यमिति ।** यस्मादनकृतपापा अमुत्र विचित्रं नरकदुःखमनभूयाधमशेषेण कुनखादिकुत्सितचिन्हयुक्ता उत्पद्यन्ते तस्मात्पापनिर्हरणार्थानि प्रायश्चित्तानि ननु नैमित्तिकमात्रपर्यवसायीनि भेदेन भौमान्तराधिकारोत्पादनार्थानि च नहि कर्म क्षीयते । फलदानं विनेति दर्शनान्न कर्तव्यानि शास्त्रैकगोचरत्वात्पापोत्पत्तिरेव निर्हरणस्यापि ।। ५२ ।।

(९) **भारुचिः ।** एवं च सतीयं पापकृद्–वर्णना सद्भिः श्लोकैः प्रायश्चित्तानुष्ठानप्रशंसार्थं विज्ञेयेति । अधुना त्वभिहितकारणानि प्रायश्चित्तान्युच्यते ।। ५२ ।।

**ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।।**
**महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ।। ५३ ।।**

(१) **मेधातिथिः । गुर्वङ्गनागमः स्तेयं** पतितसंप्रयोगः सर्ववर्णानां **महापातकानि । सुरापानं** ब्राह्मणस्यैव । **स्तेयं** ब्राह्मणसुवर्णहरणं–स्मृत्यन्तरात् 'ब्राह्मणसुवर्णापहरणे महापातकम्' इति । पातकशब्दः पातयतीति व्युत्पत्त्या सर्वव्यतिक्रमेषु वर्तते, महापातकेषूपपातकेषु च । महच्छब्दो गुरुत्वप्रदर्शनार्थः । **तैश्च** संयोगमेकैकेनापि । स च वक्ष्यति 'संवत्सरेण पतति' इत्यादिना ।। ५३ ।।

(२) **सर्वज्ञनारायणः । सुरापानं** द्विजानाम् । **स्तेयं** ब्राह्मणस्वर्णस्य ब्राह्मणसुवर्णापहरणं महापातकमित्यापस्तम्बस्मृतेः । **गुर्वङ्गना** गुरुपत्नी अत्रोच्यते । संयोगमेकशय्यामन्नादि संसर्गश्च तैश्चतुर्भिर्नतु सह संसर्गिभिरिति । एतच्च संज्ञाकरणं शास्त्रे व्यवहारलाघवाय । एवमग्रेऽपि ।। ५४ ।।

(३) **कुल्लूकः ।** ब्राह्मणप्राणवियोगफलको व्यापारो **ब्रह्महत्या ।** स च साक्षादन्यं वा नियुज्य तथा गोहिरण्यग्रहणादि निमित्तकार्यकस्यापि तदुद्देशेन ब्राह्मणमरणे ब्रह्महत्या नन्वेवमिषुकारस्यापीषूत्पादनद्वारेण तथा वध्यस्यापि हन्तृगतमन्युत्पादनद्वारा ब्रह्महत्या स्यात् । उच्यते शास्त्रतो यस्य ब्राह्मणहन्तृत्वं प्रतीयते स एव ब्रह्महन्ता । अत एव शातातपः । गोभूहिरण्यग्रहणे स्त्रीसंबन्धकृतेऽपि वा । यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् । एवं चान्यान्यपि शास्त्रीयाण्येव ब्रह्मवधनिमित्तानि ज्ञेयानि । तथा । रागोद्वेषात्प्रमादाद्वा स्वतः परत एव वा । ब्राह्मणं घातयेद्यस्तु तमाहुर्ब्रह्मघातकमिति । प्रयोजकस्यापि हन्तृत्वं शास्त्रीयम् । तथा निषिद्धसुरापानं ब्राह्मणसुवर्णहरणं गुरुभार्यागमनं गुरुरत्र पिता निषेकादीनि कर्माणीत्यादिना तस्य गुरुत्वेन विधानात् । एतैश्च सह संसर्गः संवत्सरेण पततीत्येतानि महापातकान्याहुः । महापातकसंज्ञा चेयं वक्ष्यमाणस्योपपातकादि संज्ञालाघवार्थम् ।। ५३ ।।

(४) **राघवानन्दः**। नवमाध्यायोक्तमहापातकान्यनुवदन्नुपपातकान्याह **ब्रह्महेति** पञ्चभिः। **ब्रह्महत्या** ब्राह्मणप्राणवियोगफलको व्यापारः। आक्रुष्टस्ताडितो वापि धनैर्वा विप्रयोजितः। यमुद्दिश्य त्यजेत्प्राणं तमाहुर्ब्रह्मघातकम्। एवं वृद्धशातातपोऽपि। गोहिरण्यादिग्रहणे स्त्रीसंबन्धकृतोऽपि चेति निमित्तोपादभाग्भवेदित्युद्देश्ये संकोचः। तैः महापातकिभिः संसर्गो नियादिति संबन्धोऽपि महापातकं प्राहुरित्यन्वयः।। ५३ ।।

(५) **नन्दनः**। अथ निन्दिताचरणलक्षणान्युत्पथगामिन उक्त्वाथ महान्ति पातकानि प्रायश्चित्तविशेषोपदेशार्थमुपदिशति **ब्रह्महत्या सुरापानमिति**। अत्र **सुरापानं** ब्राह्मणस्य महापातकं नान्यस्य। **स्तेयं** ब्राह्मणसुवर्णस्तेयं कुत एतत्स्मृत्यन्तरानुरोधात्। तैर्ब्राह्मणादिभिः संयोगयज्ञाध्यापनयोर्न संबन्धलक्षणव्यवहारः संयोगिनो ब्रह्महत्यादिभिस्तुल्यदोषास्तान्मन्तव्याः संयुक्तसंयोगिनामपि पातित्यवचनात्।। ५३ ।।

(६) **रामचन्द्रः**। **तैः सह** ब्रह्महन्त्रादिचतुर्भिः कर्तृभिः संयोगी संसर्गं यः कुरुते सः पञ्चमः।। ५३ ।।

(७) **मणिरामः**। प्रायश्चित्तार्थं महापातकिनोऽनुवदति। **ब्रह्महत्येति**।। ५३ ।।

(८) **गोविन्दराजः**। **ब्रह्महत्येति**। महान्ति पातकान्याहुः संयोगं चैव तैः सह। ब्राह्मणवधो निषिद्धसुरापानं ब्राह्मणसुवर्णस्तेयं गुरुभार्यागमनं एतैश्च सह संवत्सरेण पततीति वक्ष्यमाणप्रकारेण संसर्ग इत्येते महापातकान्याहुरिति संज्ञानिर्देशाल्लाघवार्थं उपपातकादिष्वपि विज्ञेयम्।। ५३ ।।

(९) **भारुचिः**। महापातकनिर्देशः संव्यवहारार्थः। महत्त्वशब्दश्च गुरुत्वसंविज्ञानार्थः सर्वपापेभ्य एतानि गुरूणि। एवं च सति व्यतिक्रममात्रं पातकम्। पातयतीति पातकमित्यस्मात्। एतानि पुनः **महान्ति पातकानि** महान्ति सन्त्येतस्मात् परिहारे लग्नवान् भविष्यन्तीति पतितसंप्रयोगे च वक्ष्यति "संवत्सरेण पतति" इति। **सुरापानं** च (ब्राह्मणस्य)। यस्य यत् प्रतिषिद्धं तस्य तत् पातकम्। अन्यत्तु ब्रह्महत्यादि सर्ववर्णानां विज्ञेयं, तत्प्रतिषेधात्। **स्तेयं** ब्राह्मणसुवर्णापहरणाख्यं पातकं नान्यत्। तथा च स्मृत्यन्तरं "ब्राह्मणसुवर्णापहरणे महापातकं" इति आपस्तम्बः।। ५३ ।।

**अनृतं च समुत्कर्षे राजगामि च पैशुनम्।।**
**गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ।। ५४ ।।**

(१) **मेधातिथिः**। **समुत्कर्ष** इति निमित्तसप्तमी, 'चर्मणि द्वीपिनं हंति' इतिवत्। समुत्कर्षं प्राप्स्यामीति **यदनृतमभिधीयते** तद्ब्रह्महत्यया समम्। यत्र पूजातिशयो धनातिशयो ब्राह्मणत्वेन श्रोत्रियत्वेन महाकुलीनतया वा प्राप्यते तत्रातद्रूपमात्मानमावेदयति। यो वा पात्रातिशयेन पुण्यस्कन्धोत्कर्षं प्राप्तुमिच्छति तस्यापात्रं पात्रमित्युच्यते। एवंविधे समुत्कर्षेऽनृतम्। न पुनः स्वल्पवस्तुनि अपेक्षायां, सत्यपि समुत्कर्षव्यपदेशे। पिशुनमलीकवदिति परच्छिद्रप्रकाशनम्। **गुरोश्चालीकनिर्बन्धो**ऽसत्याभिधानेन चित्तसंक्षोभः, 'कन्या ते

गर्भिणी' इत्येवमादिना निष्प्रयोजनो द्वेषः। राजकुलात्तेन सह विवादो निर्बन्धोऽनृताभिशंसनं वा। तथा च गौतमो 'गुरावनृताभिशंसनम्' (२१–१०) इति पातक**समानि**॥ ५४॥

(२) **सर्वज्ञनारायणः।** **समुत्कर्षे** अयं महापातकीत्युत्कर्षविषयेऽनृतम्। समुत्कर्षे इत्युपलक्षणमपकर्षस्यापि। यथाऽयं महापातकीत्यपकर्षेऽअनृतम्। तेन पापविषयसंदेहेऽन्यथा निर्णय उक्तः। **राजगामिपैशुनं** राज्ञि गत्वाऽपकारकरणम्। **अलीकनिर्बन्धो**ऽप्रियनिर्बन्धः॥ ५४॥

(३) **कुल्लूकः।** जात्युत्कर्षनिमित्तमुत्कर्षभाषणं यथा ब्राह्मणोऽहमिति अब्राह्मणो ब्रवीति। राजनि वा स्तेनादीनां परेषां मरणफलकं दोषाभिधानं गुरोश्चानृताभिशंसनम्। तथा च **गौतमः** गुरोरनृताभिशंसनमिति महापातकसमानीति। एतानि ब्रह्महत्यासमानीति॥ ५४॥

(४) **राघवानन्दः।** अनुपातकं लक्षयति **अनृतमिति। समुत्कर्षे** ब्राह्मणोऽहमित्यस्य ब्राह्मणस्य भाषणादौ। **अलीकनिर्बन्धः** कन्या ते गर्भिणीत्यादि सत्याभिधानेन गुरोश्चित्तक्षोभ इति मेधातिथिः। अनृताभिशंसनं वा॥ ५४॥

(५) **नन्दनः।** जात्या कर्मणा गुणेन वा स्वस्माद्वैशिष्टमुत्कर्षः अलीकनिबन्धोऽनिष्टस्य पुनः करणं ब्रह्महत्यया समानीति दोषातिशयख्यापनमेतत न तु समत्वख्यापनम्॥ ५५॥

(६) **रामचन्द्रः।** समुत्कर्षे समुत्कर्षो यस्यामिति यदनृतमभिधीयते निमित्ते सप्तमी **निर्बन्धः** असत्याभिधानेन चित्तसंक्षोभः **राजगामि पैशुनं** पैशुनेन राज्ञि गत्वापकरणम्। गुरोः **अलीकनिर्बन्धः** अप्रियकरनिर्बन्धः॥ ५५॥

(७) **मणिरामः।** अनृतं च समुत्कर्षे स्वजात्युत्कर्षार्थं मिथ्योत्कर्षभाषणम्। यथा अब्राह्मणो ब्राह्मणोऽहमिति वदेत्। **राजगामि च पैशुनं** राजनिकटे अचौराणां चौरोऽयमिति मरणाफलकं दोषाभिधानम्। **गुरोश्चालीकसंबंधः** अनृताऽभिशंसनम्॥ ५४॥

(८) **गोविन्दराजः। अनृतमिति।** जातिसमुत्कर्षे अनृतं अब्राह्मणः सन् ब्राह्मणोऽहमिति। राजविषये च सूचकत्वं परमाणफलप्रायं राज्ञश्चित्तसंक्षोभजननं गुरोश्च मिथ्याभिशापोत्पादनं यथा **गौतमः** गुरोरनृताभिशंसनमिति पातकसमानीत्येतानि ब्रह्महत्यासमानानि॥ ५४॥

(९) **भारुचिः।** प्रत्येकं, न समस्तानि एवमुत्तरत्रापीति। **अनृतं जातिसमुत्कर्षे**, यदब्राह्मणः सन् "ब्राह्मणोऽस्मि" इति ब्रवीति ब्राह्मणप्रयोजनेषु। एवं क्षत्रियवैश्यजातावपि योज्यम्। कर्मोत्कर्षे वा यदनृतं "अनेन क्रतुनेष्टं मया" इति। एवमध्ययनतपःप्रभृतिष्वपीति। समुत्कर्षकारणे कन्यालाभादौ यदनृतं तद्दूषणार्थं दातृसन्निधौ कौटसाक्ष्यं, येन तदुत्तरश्लोके वक्ष्यति। सुरापानसमं **राजगामिपैशुनं**

हेळकत्वं प्रसिद्धम्। **गुरोरलीकनिर्बन्धः**। अलीकश्चित्तसंक्षोभः। अलीकार्थो निर्बन्धः स गुरोरभ्युपेत्य द्वेषादिभिः पौनः पुन्येन क्रियमाणोऽ**ळीकनिर्बन्धः**। ब्रह्महत्यासमः। गुरोरनृताभिशंसनं वाळीकनिर्बन्धः। तथा च गौतमः, "गुरोरनृताभिशंसनम्" इति। पातकसमानीति ॥ ५४ ॥

**ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः ॥**
**गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट् ॥ ५५ ॥**

(१) **मेधातिथिः**। अधीतस्ववेदस्यानाभ्यासेन विस्मरणं **ब्रह्मोज्झता**। नित्य-स्वाध्यायविधेः त्यागो वा। **कूटसाक्षं** समुत्कर्षादन्यत्रापि। **सुहृद्वधो** मित्रमारणम्। **गर्हितानाद्ययोः**। **गर्हितं** शास्त्रप्रतिषिद्धं लशुनाद्यनाद्यमभनस्तुष्टिकरं, न भोक्ष्य इति कल्प्य यद्भुज्यते ॥ ५५ ॥

(२) **सर्वज्ञनारायणः**। **ब्रह्मोज्झता** वेदस्यात्यन्तत्यागोऽनध्ययनम्। **सुहृदो** मित्रस्य वधः। **गर्हितानाद्ययोरि**ति **गर्हितं** संसर्गदुष्टचाण्डालान्नादि। **अनाद्यं** जात्यैवाभक्ष्यं लशुनादि। **जग्धिर्भ**क्षणम्। एतत्पृथगेव द्वयं ग्राह्यम् ॥ ५५ ॥

(३) **कुल्लूकः**। ब्रह्मणोऽधीतवेदस्यानभ्यासेन विस्मरणमसच्छास्त्राश्रयणेन वेद-कुत्सनं साक्ष्ये मृषाभिधानं मित्रस्याब्राह्मणस्य वधः निषिद्धस्य लशुनादेर्भक्षणं **अनाद्यस्य** पुरीषादेरदनम्। मेधातिथिस्तु न भोक्ष्यत इति संकल्प्य यद्भुज्यते तदनाद्यमित्याचष्टे। एतानि सुरापानसमानि ॥ ५५ ॥

(४) **राघवानन्दः**। **ब्रह्मोज्झता** अधीतवेदत्यागः। गर्हितान्नाद्ययोर्जग्धिः **गर्हितस्य** निषिद्धस्य लशुनादेः **अनाद्यस्य** पुरीषादेः अनापदि भक्षणम्। समानि स्युः प्रायश्चित्तार्थं ततः किंचिन्न्यूनानि प्रायश्चित्तानि ॥ ५५ ॥

(५) **नन्दनः**। **ब्रह्मोज्झितं** वेदत्यागः। **गर्हितान्नं** निषिद्धान्नमुच्छिष्टादि गर्हिता-न्नलशुनादि **जग्धिः** भक्षणम् ॥ ५५ ॥

(६) **रामचन्द्रः**। **ब्रह्मोज्झता** असच्छास्त्राद्यभ्यासेन वेदत्यागः। **कौटसाक्ष्यं** कपटेन यत्साक्ष्यं कृतम्। **गर्हितानाद्ययोर्जग्धिः** संसर्गदोषः चाण्डालान्नादि संसर्गदोषः। लशुनादि अभिशस्ताद्यन्नलशुनादिभक्षणम् ॥ ५५ ॥

(७) **मणिरामः**। अधीतवेदस्याऽनभ्यासेन विस्मरणं **ब्रह्मोज्झता**। **गर्हितं** निषिद्धं **अनाद्यं** पुरीषादि तयोः गर्हिताः अनाद्ययोः **जग्धिः** भक्षणम् ॥ ५५ ॥

(८) **गोविन्दराजः**। **ब्रह्मोज्झतेति**। ब्रह्मोज्झता अधीतस्य वेदस्यासच्छास्त्रा-श्रयेणापेक्षणम्। यत्तु गुरुमातृपरित्यागः स्वाध्यायाग्न्योः सुतस्य चेत्युपपातकत्वं न त्वैहिक एवान्यस्मिन्कर्मण्यभियुक्ततया वेदत्यागे सति वेदितव्यं **वेदनिन्दा** नास्तिक्याभिनिवेशेन वेदकुत्सनम्। कूटसाक्षित्वं यत्र व्यवहारेऽर्थिप्रत्यर्थिनोर्वधार्हतोपैति मित्रस्य चाब्राह्मणस्यापि वधो गर्हितस्य पलाण्ड्वादेरनदनीयस्य चामेध्यादेर्भक्षणमित्येतानि षट् सुरापान-तुल्यानि ॥ ५५ ॥

**निक्षेपस्यापहरणं नराश्वरजतस्य च ॥**
**भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतम् ॥ ५६ ॥**

(१) **मेधातिथिः।** **निक्षेपस्या**सारवत्स्यापि। **नराश्व**शब्दो जातिशब्दो, नारीहरणेऽप्येतदेव। यो हि दुहितरं दत्वाऽसति नरदोषेऽन्यस्मै पुनर्ददाति, तस्याप्येतदेव। तदुक्तं 'प्राप्नोति पुरुषोऽनृतम्' इति ॥ ५६ ॥

(२) **सर्वज्ञनारायणः।** **निक्षेपस्य** निक्षिप्तं नराश्वादि द्रव्यमपि तस्य तेन हरणं बलादपि ॥ ५६ ॥

(३) **कुल्लूकः।** ब्राह्मणसुवर्णव्यतिरिक्तनिःक्षेपस्य हरणं तथा मनुष्यतुरगरूप्यभूमिहीरकमणीनां हरणं सुवर्णस्तेयतुल्यम् ॥ ५६ ॥

(४) **राघवानन्दः।** **निःक्षेपस्य** सुवर्णातिरिक्तस्य निक्षेपादि सप्तकस्य प्रत्येकं हरणे रुक्मं सुवर्णं तदपहरणसममेवमुत्तरत्र ॥ ५६ ॥

(६) **रामचन्द्रः।** निक्षेपस्य अपहरणं अब्राह्मणसंबन्धिनः ॥ ५६ ॥

(८) **गोविन्दराजः।** **निक्षेपस्येति।** **निःक्षेपस्य** ब्राह्मणसुवर्णादन्यस्य ब्राह्मणसंबन्धिनश्च सुवर्णस्यापहरणं तथा मनुष्याश्वरूप्यभूमिहीरकमणीनां हरणं सुवर्णस्तेयतुल्यम् ॥ ५६ ॥

**रेतःसेकः स्वयोनीषु कुमारीष्वन्त्यजासु च ॥**
**सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ॥ ५७ ॥**

(१) **मेधातिथिः।** **स्वयोनयो** भगिन्य एकोदरसंभूताः। **कुमार्यो**ऽनूढाः। **अन्त्यजा** वर्बरचंडालस्त्रियः। **सख्युः।** सखा मित्रं तस्य स्त्रियः। स्त्रीग्रहणं न जायायामेव प्रतिषधार्थम्। एवं **पुत्रस्या**न्यापि या अवरुद्धा मैथुनधर्मेण। वयं तु ब्रूमः। सत्यपि स्त्रीग्रहणे नोढानूढयोर्विषमसमीकरणस्यान्याय्यत्वात्समत्ववचनम्। एतन्न प्रायश्चित्तनिर्देशार्थं, किं तर्हि? गुरुत्वख्यापनपरम्। अतश्च गुरुतरं प्रायश्चित्तं भवति। तथा चोक्तं 'एनसि गुरुणि गुरूणि लघुनि लघूनि'। यदि ह्येतत्प्रायश्चित्तनिर्देशार्थमभविष्यत्प्रायश्चित्तनिर्देशप्रकरण एव वाऽवक्ष्यत्। कौटसाक्ष्यसुहृद्वधयोश्चेह सुरापानसमीकृतयोर्ब्रह्महत्याप्रायश्चित्तातिदेशमुपरिष्टान्न कुर्यात्। 'गुरोश्चालीकनिर्बन्ध' इत्येतस्य चेह ब्रह्महत्यासमीकृतस्य पुनरूपरिष्टात् ब्रह्महत्याप्रायश्चित्ताभिधानात्। तथा कुमार्यामिति रेतःसेकस्य गुरुतल्पसमीकृतस्येह पुनस्तत्र गुरुतल्पप्रायश्चित्तविधानाद्गम्यते नेदं प्रायश्चित्तार्थं समीकरणमिति। अन्ये तु मन्यन्ते। भेदेन समीकरणं गुरुत्वभावेऽपि विवक्षिते नान्याय्यम्। अतः प्रायश्चित्तार्थमेव सुरापानस्य समीकृतयोश्च कौटसाक्ष्यसुहृद्वधयोर्ब्रह्महत्याप्रायश्चित्तनिर्देशो विकल्पार्थं सुरापानप्रायश्चित्तेन। अस्य चातिदेश एव श्रूयते। समीकरणे तु विकल्पो नास्ति। यथा 'हत्वा गर्भमविज्ञातम्' इति ॥ ५७ ॥

(२) **सर्वज्ञनारायणः। स्वयोनीसु** भगिनीषु। **कुमारीष्व**परिणीतासु ब्राह्मणस्य कन्यासु। **अन्त्यजासु** चण्डाल्यादिषु। **सख्युर्मित्र**स्य स्त्रियाम्। तथा **पुत्रस्य** स्त्रियां स्नुषायाम् ।। ५७ ।।

(३) **कुल्लूकः।** सोदर्यभगिनीकुमारीचण्डालीसखिपुत्रभार्यासु यो रेतःसेकस्तं गुरुभार्यागमनसमानमाहुः। एतेषां भेदेन समीकरणं यद्येन समीकृतं तस्य तेन प्रायश्चित्तार्थं यत्कौटसाक्ष्यसुहृद्वधयोः सुरापानसमीकृतयोर्ब्रह्महत्याप्रायश्चित्तं वक्ष्यति तद्विकल्पार्थम्। यत्पुनर्गुरोरलीकनिर्बन्धस्य ब्रह्महत्यासमीकृतस्य पुनरुपरिष्टाद्ब्रह्महत्याप्रायश्चित्तनिर्देशः। समीकृतानां न्यूनप्रायश्चित्तं भवतीति ज्ञापनार्थं तथा च लोके राजसमः सचिव इत्युक्ते सचिवस्य न्यूनतैव गम्यते, अत्रौपदेशिकप्रायश्चित्तेभ्य आतिदेशिकप्रायश्चित्तानां न्यूनं प्रायश्चित्तं समीकृतानां च ।। ५७ ।।

(४) **राघवानन्दः। किं च रेत इति।** एवमुत्तरोत्तरं ज्ञेयम्। अत एवाह 'अनुपातकिनस्त्वेते महापातकिनो यथा। अश्वमेधेन शुध्यन्ति तीर्थाभिगमनेन चेति'। तीर्थाभिगमनमनुपातकिप्रायश्चित्तम्। **स्वयोनीषु** स्वस्य गन्तुर्योनीषूत्पादकत्वेन या अर्हन्तीति ताः स्वोदर्यासु। **कुमारीषु** ब्राह्मणकन्यासु। **पुत्रस्यौ**रसातिरिक्तस्य तत्रातिपातकमित्येके। आसु प्रत्येकं योनिषु यो रेतःसेकस्तं गुरुतल्पसमं विदुरित्यन्वयः। यत्तु मातृगमनदुहितृगमनस्नुषागमनमित्यतिपातकानीत्याह विदुरिति तद्यत्र गौरवार्थं यतो ब्रह्महत्याश्वमेधाभ्यां न परं पुण्यपापयोरित्यवधिकरणं स्मृतम् ।। ५७ ।।

(५) **नन्दनः। स्वयोन्यादिषु** दुहित्रादिषु ।। ५७ ।।

(६) **रामचन्द्रः। स्वयोनीषु** भगिन्यादिषु **रेतःसेको** रेतसः पातः। **कुमारीषु** अविवाहितासु **सख्युः स्त्रीषु** गुरुतल्पसमं विदुः ।। ५७ ।।

(७) **मणिरामः। स्वयोन्यासु** भगिनीषु **अंत्यजासु** चांडालीषु च ।। ५७ ।।

(८) **गोविन्दराजः। रेतःसेकः स्वयोन्यास्विति।** भगिनीकुमारीमित्रभार्यास्नुषासु चाण्डालादिस्त्रीषु च गमनं गुरुभार्यागमनसमानमाहुः। एषां च भेदेन समीकरणं यद्येन समीकृतं तस्य तदीयप्रायश्चित्तार्थम्। यत्तु कौटसाक्ष्यं सुहृद्वधः ब्रह्महत्याप्रायश्चित्तातिदेशं वक्ष्यति तद्विकल्पार्थम्। यः पुनः गुरोरलीकनिर्बन्धस्य ब्रह्महत्यासमीकृतस्य गुरुतल्पगप्रायश्चित्तनिर्देशः समीकृतानां न्यूनं प्रायश्चित्तं भवतीति ज्ञापनार्थं तथा च लोकेऽपि 'राजसमः सचिव' इत्युक्ते सचिवस्य न्यूनतैव प्रतीयते। अत्र चोपदिशिकेभ्य आदेशिकेभ्य आदेशिकानां न्यूनत्वमतिदेशविधानं तेभ्योऽपि समीकृतानाम् ।। ५७ ।।

(९) **भारुचिः।** महापातकसमानां चतुर्भिः श्लोकैर्निर्देशो गुरुत्वज्ञापनार्थः। सामान्यविहितस्यात्र गुरोः प्रायश्चित्तस्य कारणं यथा स्यादिति। स्मृत्यन्तरे चोक्तम्, "एनसु गुरुषु गुरूणि लघुषु लघूनि" इति। ननु यत् येन समानमुच्यते तदीयं तस्य प्रायश्चित्तं युक्तम्। अत्रोच्यते, न युक्तं यदि ह्येतत् प्रायश्चित्तविधानार्थमभविष्यत् यथाह भगवान्, ततः प्रायश्चित्तातिदेषप्रकरण एवावक्ष्यत्। कौटसाक्ष्यसुहृद्वधयोश्चेह

सुरापानसमीकृतयोः ब्रह्महत्याप्रायश्चित्तातिदेशमुपरिष्टात्र कुर्यात्। गुरोश्चालीक-निर्बन्ध इत्येतस्य चेह ब्रह्महत्यासमीकृतस्य पुनरुपरिष्टाद्ब्रह्महत्याप्रायश्चित्तविधानात्। तथा कुमार्यादिरेतस्सेकस्य गुरुतल्पसमीकृतस्येह पुनस्तत्र गुरुतल्पप्रायश्चित्तविधानाद् गम्यते नेदं प्रायश्चित्तार्थं समीकरणमिति। अपरे तु मन्यन्ते— भेदेन समीकरणाद् यद् येन समीक्रियते तदीयं तस्य प्रायश्चित्तमनुमीयते। गुरुत्वे हि केवले निदिदिक्षिते, महापातकसमत्वमेव प्रतिनिर्दिशेत् सामान्येन। सुरापानसमीकृतयोश्च कौटसाक्ष्य-सुहृद्वधयोर्ब्रह्महत्यातिदेशो विकल्पार्थः। गुरोश्च प्रतिरंभोऽलीकादर्थान्तरमेव। प्राय-श्चित्तकरणे चास्यानध्ययनात् सामान्यविहितमप्येषु प्रायश्चित्तमनुमीयते। यस्य तु प्रायश्चित्तातिदेश एव श्रूयते न समीकरणम्; तत्र विकल्पो नास्ति। यथा "हत्वा गर्भमविज्ञातमिति"। तस्मान्महापातकसमेषु तदीयं प्रायश्चित्तं सामान्यविहितं वेति मन्यामहे। महापातकानि तत्समानि चोक्त्वोपपातकार्थमधुनेदमाह ॥ ५७ ॥

## गोवधोऽयाज्यसंयाज्यं पारदार्यात्मविक्रयाः ॥
## गुरुमातृपितृत्यागः स्वाध्यायाग्न्योः सुतस्य च ॥ ५८ ॥

(१) **मेधातिथिः।** **अयाज्या** अविरुद्धापातकिशूद्रादयस्तेषां **संयाज्यं** संयाजनम्। भावे ण्यच्छांदसः। **आत्मविक्रयं** गवादिद्रव्यवदात्मनः परविधेयकरणं दास्येन। अन्ये तु **पारदार्य-मविक्रयमिति** पठन्ति। अनुत्साहो निराहारः स्वल्प एवोपघातेऽवसादाश्रयणम्। **गुरोस्त्यागो** यथावदननुवृत्तिः। अध्यापनसमर्थेऽध्यापयितर्युपाध्यापकान्तराश्रयः। एवं **मातापित्रोः।** अपतितानां चैतेषां त्यागो दोषाय। पतितानां त्विष्ट एव। **स्वाध्यायाग्न्योस्त्याग** इति संबध्यते। स्वाध्यायस्य त्यागश्च 'अहरहः स्वाध्यायमधीयीत' इत्यस्य विधेरननुष्ठानम्। 'किमैकाहिके माससांवत्सरिके वा त्यागे व्यतिक्रमोऽयम्"। अविशेषादैकाहिके प्राप्नोति। तदयुक्तम्। एतस्य विधेर्नित्यत्वात्। नित्यानां च व्यक्तिक्रमे प्रायश्चित्तांतरं वक्ष्यति। तस्माद्विस्मरणपर्यन्तस्त्यागोऽभिप्रेतः। स ब्रह्मोज्झतापदेन सुरापानेन समीकृतः। तत्र विक-ल्पनार्थमेतत्। अस्य च लघुत्वात्तस्य गुरुत्वाद्व्यवस्थायां विकल्पो योज्यः। तत्र यो वैदिक एवान्यस्मिन् कर्मणि युक्ततया स्वाध्यायं जहाति तस्योपपातकत्वम्, यस्तु भोगसेवयाऽर्थपरतया कलहशीलतया जहाति तस्य सुरापानसमत्वम्। अग्नेस्त्वेकत्वविशिष्टस्येहोपादानाद्गृह्यस्येति द्रष्टव्यम्। 'प्रागग्नीनिति' बहुवचनाच्छ्रौतानां ग्रहणम्। "ननु च तत्रापि चान्द्रायणमुक्त-मिहाप्युपपातकत्वात्तदेवात्र वाच्यम्"। नैष दोषः? उपपातकेष्वप्यन्यान्यपि प्रायश्चित्तानि सन्ति। शक्त्यपेक्षया गुरुलघुभावो न्यूनाधिकभावः। अतो नियमार्थं तत्र चन्द्रायणग्रहणम्। **सुतस्य त्यागो**ऽभरणं गृहान्निष्कासनमशिशोः प्राप्तस्य च गुणवतः, पातकिनस्तु न दोषः ॥ ५८ ॥

(२) **सर्वज्ञनारायणः।** **पारदार्यं** परदारगमनम्। आत्मनो मूल्येन विक्रयः शूद्रादन्ये-षाम्। पारदार्यात्मविक्रय इत्येकवचनं छान्दसम्। गुर्वादीनामवृत्तीनां शक्तौ सत्यामपोषणं त्यागः। अत्र गुरुराचार्योऽभिप्रेतः पृथक्पितृग्रहणात्। **स्वाध्याय**स्याधीतस्याभ्यासस्य त्यागो-ऽधीतविस्मरणम्। **अग्नयस्त्रेताग्नयः** ॥ ५८ ॥

(३) **कुल्लूकः ।** इदानीमुपपातकान्याह गोहननं जातिकर्मदुष्टानां याजनं परपत्नीगमनं आत्मविक्रयः मातापितृगुरूणां च शुश्रूषाद्यकरणं सर्वदा ब्रह्मयज्ञत्यागः न वेदविस्मरणं ब्रह्मोज्झतेत्यनेनोक्तत्वात् अग्नेश्च स्मार्तस्य त्यागः श्रौतानामग्निहोत्र्यपविध्याग्नीनित्युक्तत्वात्सुतस्य च संस्कारभरणाद्यकरणम् ।। ५८ ।।

(४) **राघवानन्दः ।** उपपातकमाह **गोवध** इत्यष्टभिः । तत्र गोवध उपपातकम् । अयाज्ये संयाज्येत्युपपातकमित्येवान्ययोर्मलावहपर्यन्तम् । पारदार्यमनियुक्ते सति परस्त्रीगमनम् । **आत्मविक्रयः** अपत्यपत्योर्विक्रयः । **त्यागो**ऽनिमित्तः । संन्यासादौ तु षण्णाम् । त्यागो यदहरेव विरजेदिति श्रुतिसिद्धः ।। ५८ ।।

(५) **नन्दनः ।** अथोपपातकान्यष्टभिः श्लोकैराह **गोवधो याज्यसंयाज्य**मिति । याजनानर्हस्य याजनमयाज्यसंयाज्यं **पारदार्यं** परदारगमनं स्वाध्यायाग्न्योः सुतस्य च त्याग इत्यनुकर्षः **स्वाध्यायो** नित्याध्ययनम् ।। ५८ ।।

(६) **रामचन्द्रः ।** गोवधेत्यारभ्य त्रयोदशेन संबन्धः त्रयोदशभिराह गुरुमातृपितृत्यागः शुश्रूषाऽकरणम् ।। ५८ ।।

(७) **मणिरामः । अयाज्यसंयाज्यं** जातिकर्मदुष्टानां याजना; गुर्वादीनां त्यागः शुश्रूषाद्यकरणम् । **स्वाध्यायत्यागः** ब्रह्मयज्ञत्यागः । **अग्नित्यागः** स्मार्ताऽग्नित्यागः। श्रौतस्योक्तत्वात् । **सुतस्य त्यागः** संस्कारपोषणाद्यकरणरूपः ।। ५८ ।।

(८) **गोविन्दराजः । गोवध इति । परिवित्तितेति । कन्याया इति । व्रात्यतेति । सर्वाकरेष्विति । इन्धनार्थमिति । अनाहिताग्नितेति ।** असच्छास्त्राधिगमनं कौशीलव्यसनक्रिया ।। धान्यकुप्यपशुस्तेयं मद्यपस्त्रीनिषेवणमिति । गोहननं जातिकर्मदुष्टानां याजनम् । परदारगमनमात्मविक्रयो मातृपितृगुरूणां च शुश्रूषाद्यकरणं स्वाध्यायत्यागो व्याख्याताग्नेश्च स्मार्तस्य त्यागः । श्रौतानामग्निहोत्र्यपविध्याग्नी नित्युक्तत्वात्सुतस्य संस्कारभरणाद्युपकरणम् ।। कनीयसादौ विवाहे त्यागात् ज्येष्ठस्य यत्परिवित्तित्वं यथा दाराग्निहोत्रसंयोगमित्याद्युक्तं यत्र ज्येष्ठेऽकृतविवाहे कनीयसो विवाहकरणं तथा विधाय कन्यादानं तयोरेव च विवाहादि होमोपदेशनं कन्याया मैथुनवर्जं लिङ्गविदारणं रेतःसेकोऽधिकारो रेतःसेकाद्ययोनिषु कुमारीष्वित्युक्तम् । प्रतिषिद्धवृद्धिजीवनम् । ब्रह्मचारिणो मैथुनम् । तडागोद्यानदारापत्यविक्रयः । यथाकालमनुपनयनम् । यथोक्तमत उर्ध्वं त्रयोऽप्येते यथाकालं असंस्कृता इति । **बान्धवानां** पितृव्यादीनाम् । अनुवृत्तिपणपूर्वकमध्यापनं पणपूर्वाध्यापकाध्ययनम् । अविक्रेय (विक्रयः) सुवर्णाद्युत्पत्तिस्थानेषु राजाज्ञाधिकारत्वमदृष्टप्रयोजनं विना महतामुदकप्रवाहप्रतिबन्धहेतूनां सेतुबन्धनादीनां प्रवर्तनम् । ओषधीनां अशुष्कानां हिंसैव तच्च स प्रत्ययाभ्यासहिंसायां प्रायश्चित्तगौरवाकृष्टजानमोषधीनामित्यादि । पुनर्वक्ष्यमाणं सकृद**बुद्धी**पूर्वं हिंसायां प्रायश्चित्तलाघवोद्देशेन स्त्र्युपजीवनम् । श्येनादिनानभिचरणीयस्याभिचरणं मन्त्रौषधादिना वशीकरणम् । पाकादिदृष्टप्रयोजनार्थमार्द्रवृक्षच्छेदो नत्वशास्त्रिताग्न्यर्थआत्मार्थं च क्रियारंभ इत्याद्यं स केवलं भुङ्क्त इति प्रतिषेधात्पाकविषयक्रियामात्रविषयत्वेन

प्रतिषेधकल्पनयाङ्गैरेवमापद्येत। निन्दितान्नस्य पलाण्डवादेः सकृदनिच्छयाऽशनं बुद्धिपूर्वा-भ्यासे पुनर्गर्हिता नाद्ययोर्नेमिधिरित्येतज्जातपुत्रादौ सत्यधिकारे नाहिताग्नित्वम्। स्तेयं ब्राह्मण-सुवर्णादन्यत्। ऋणानां चानपकरणं त्रिभिर्ऋणैरिति यथोक्तं श्रुतिस्मृतिविरुद्धशिक्षणम्, नटगायनत्वादिकरणम्। धान्यस्द ताम्रलोहितादेश्च पशूनां च चौर्यं ब्राह्मणस्य पीतमद्यायाः स्त्रिय उपभोगः स्त्रीशूद्रवैश्यक्षत्रियहननमदृष्टार्थकर्माभावबुद्धिरित्येतत्प्रत्येकमुपपातकं बान्ध-वत्याग इत्यनेनैव मात्रादीनां ग्रहणसिद्धे पृथग्वचनमित्यार्थमेवं च पितृव्यादित्यागेनावश्यमेतदेव प्रायश्चित्तं भवत्यपि तु न्यूनमाप्यते न स्तेयग्रहणेनैव धान्यादिस्तेयेग्रहणसिध्धे पृथगभिधानं व्याख्यातम्। इह यस्य सामान्यरूपतयोभयत्राभिधानं यथा हिंस्त्रौषधीनां इति तत्र प्रायश्चित्त-द्वयमपि तु भवति विकल्पश्च स प्रत्ययाप्रत्ययाभ्यासापेक्ष्ये वर्णानां यो यस्यापि च विशेषरूपोत योभयत्राभिधानम्। यथा खराश्वोष्ट्रमृगेभानां खरं हत्वैकहायनमिति। तत्राप्ययमेव न्यायो यत्र त्वेकस्मिन् एकस्यैकत्र सामान्यतोऽभिधानमपरत्र विशेषतो यथा याज्यसंयाज्यं व्रात्यानां याजनं कृत्वेति तद्विशेषव्यतिरिक्ति विशेषान्तराणि सामान्यविशेषयोर्यस्य पुनर्भिन्नकर्तृकवाक्ये-ष्वेकनामाभिधानामपरत्र विशेषस्तत्र तत्सामान्यं तद्विशेषनिष्टमेव व्याकरणीयम्। यथा ब्रह्महत्या सुरापानं स्तेयं ब्राह्मणसुवर्णादिहरणं महापातकमित्येवमेकमूलकल्पनया लाघवं स्यादन्यथा सामान्यविशेषमूलद्रव्यकल्पनेन गौरवमापद्यते ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥

**परिवित्तिताऽनुजेऽनूढे परिवेदनमेव च ॥**
**तयोर्दानं च कन्यायास्तयोरेव च याजनम् ॥ ५९ ॥**

(१) **मेधातिथिः।** **अनुजः** कनीयान् भ्राता। **तयोर्याजनं** विवाहे दर्शपूर्णमासादौ वाऽऽर्त्विज्यम् ॥ ५९ ॥

(२) **सर्वज्ञनारायणः।** **परिवित्तिता** स्वस्मिन्नकृतदाराग्निपरिग्रहे कनिष्ठभ्रातुर्दार-परिग्रहो ज्येष्ठस्य दोषाय। तथा अनुजेन परिवेदनं भ्रातरि ज्येष्ठेऽनूढे अनग्नौ वाग्निपरिग्रहः कनिष्ठस्य पापहेतुः। तयोस्ताभ्यां कन्यादातुः। एवं चाकृतप्रायश्चित्ताय परिवित्तयेऽपि दानं निषिद्धं लक्ष्यते। तयोर्याजनं अग्निहोत्रादावृत्विक्त्वेन ॥ ५९ ॥

(३) **कुल्लूकः।** कनीयसाऽऽदौ विवाहे कृते ज्येष्ठस्य परिवित्तित्वं भवति दाराग्निहोत्र-संयोग इत्यादिना प्रागुक्तं कनिष्ठस्य परिवेत्तृत्वं तयोश्च कन्याया दानं तयोरेव विवाहहोमा-दियोगेष्वार्त्विज्यम् ॥ ५९ ॥

(४) **राघवानन्दः।** परिज्येष्ठं विहायानुजेनोढे न कृतविवाहे परिपश्चाद्यदि ज्येष्ठस्य वेदनं विवाहस्तदा तस्य ज्येष्ठस्य परिवित्तिता अतः कनिष्ठस्यापि परिवेत्तृत्वं दाराग्निहोत्र-मित्यनेनोक्तम्। **तयोस्तादृशज्येष्ठकनिष्ठयोः** ॥ ५९ ॥

(५) **नन्दनः।** अनुजेन ज्येष्ठस्य पिरिवित्तता तदनुजस्य च परिवेदनं **तयोः** परिवित्तिपरिवेत्रोः ॥ ५९ ॥

(६) **रामचन्द्रः।** तयोः परिवित्तिपरिवेत्रोः ॥ ५९ ॥

(७) **मणिरामः।** कनिष्ठस्याऽऽदौ विवाहे कृते ज्येष्ठस्य परिवित्तता भवति कनिष्ठस्य परिवेतृत्वं च। तयोः कन्यादानं याजनं च ॥ ५९ ॥

**कन्याया दूषणं चैव वार्धुष्यं व्रतलोपनम् ॥**
**तडागारामदाराणामपत्यस्य च विक्रयः ॥ ६० ॥**

(१) मेधातिथिः। **कन्याया दूषणं** नेयं कन्या पुरुषेणोपभुक्तेत्यध्यवसायेन प्रतिपादनम्। अङ्गुष्ठादिना वा प्रजननं धर्मभेदो मैथुनधर्मवर्जम्। तत्र हि गुरुतल्पसाम्यमुक्तम्। **वार्धुषित्वं** अनापदि धनप्रयोगेन वृत्तिग्रहणम्। वासिष्ठे तु 'वृद्धेस्तु प्रयोक्ता धान्यानां वार्धुषित्वं तदुच्यते'। सा च शास्त्रपरिभाषा। न लौकिके वा पदार्थे। **व्रतच्युतिः** शिष्टप्रतिषिद्धेऽमुष्यगृहे न भोक्तव्यमुपवस्तव्यमेवंरूपः संकल्पो 'व्रतम्'। ततो यः संकल्पाच्चलति सा तस्य व्रतच्युतिः। "ननु च व्रतमिति इच्छाकृतो नियम उच्यते। यदि चेच्छाकृतः संकल्पस्ततो निवृत्तौ कः शास्त्रातिक्रमो 'विहितमकुर्वन् प्रायश्चित्तीयत' इत्युक्तम्। न चैतद्विहितम्।" उच्यते। सत्यमिच्छालक्षण आरंभः। समाप्तिस्तु शास्त्रीया। यथा सौर्यादीनां काम्यानां कर्मणां लिप्सातः प्रवृत्तिः, समाप्तिस्तु शास्त्रीया। अतीतायां फलेच्छायामवाप्ते वा फले यथोक्तं तदर्थ एवावशिष्टं वर्जयेयुः। प्राक्रमिकोऽयं कापुरुष इति वदन्तः। स्नातकव्रतानां त्वत्यन्तलघीयः प्रायश्चित्तं प्रवक्ष्यते। तेनेदं विकल्पितुमर्हति। **आराम** उद्यानोपवनादि। स्मृत्यन्तरे सर्वभूमिरविक्रेया ॥ ६० ॥

(२) **सर्वज्ञनारायणः। कन्यादूषणम**ङ्गुल्यादिप्रवेशेन कन्याया अकन्यात्वकरणम्। **वार्धुष्यं** वृद्ध्याजीवनं विप्रक्षत्रिययोः। **व्रतलोपनं** परिगृहीतव्रतनियमभङ्गः। तडागादेरप्रतिष्ठितस्य स्वयं कृतस्य विक्रयः उत्सृष्टेष्वन्याभावात् ॥ ६० ॥

(३) **कुल्लूकः।** कन्याया मैथुनवर्जमङ्गुलीप्रक्षेपादिना दूषणम्। रेतःसेकपर्यन्तमैथुनेषु तु रेतःसेकः स्वयोनीषु कुमारीष्वन्त्यजासु च इत्युक्तत्वात्प्रतिषिद्धं **वृद्धिजीवनं** ब्रह्मचारिणो मैथुनं तडागोद्यानभार्यापत्यानां विक्रयः ॥ ६० ॥

(४) **राघवानन्दः। कन्याया दूषणं** ब्राह्मणातिरिक्तकन्यायाः तत्र समत्वस्योक्तत्वात्। उपभोगातिरिक्तप्रकारान्तरेण वा। प्रतिषिद्धवृद्धिजीवनं **वार्धुष्यम्।** व्रताच्च्युतिर्ब्रह्मचारिणो मैथुनम्। व्रतलोपनमिति क्वचित्पाठः ॥ ६० ॥

(६) **रामचन्द्रः। कन्याया दूषणं** अङ्गुल्यादिना योनिविदारणम्। **व्रतलोपनं** प्रतिगृहीतनियमभङ्गः ॥ ६० ॥

(७) **मणिरामः। कन्याया दूषणं** अंगुलिप्रक्षेपेण रेतःसेकस्य गुरुतल्पमध्ये उक्तत्वात् वार्धुष्यं वृद्धिजीवम्। **व्रतलोपनं** ब्रह्मचारिणां मैथुनरूपम् ॥ ६० ॥

**व्रात्यता बान्धवत्यागो भृत्याध्यापनमेव च ॥**
**भृताच्चाध्ययनादानमपण्यानां च विक्रयः ॥ ६१ ॥**

(१) **मेधातिथिः। बान्धवा** ज्ञातयः सोदरादिभ्योऽन्येऽपि मातुलमातृष्वस्रेयादयः। सति विभवे तेऽप्यजीवन्तो भर्तव्याः। तदुक्तं 'स्वजने दुःखजीविनि' इति। "यद्येवं सुतस्येत्याद्यनर्थकम्"। न, अनन्यार्थं वचनम्। जालगादप्रतिषेधे हंसप्रतिषेधवत्। तेन मातादित्याग उपपातकमेव। इह तु लघीय इति। **भृत्याध्यापनम्**। भृतकस्य सतोऽध्यापकत्वात् यश्च भृतकादधीते। **अपण्यानि** दशमे उक्तानि॥ ६१॥

(२) **सर्वज्ञनारायणः। व्रात्यता** काले सावित्र्यग्रहणं पितृपितामहयोः सोमपानाबान्धवानां पितृव्यादीनां शक्तौ त्यागोऽपोषणम्। भृतेन नियममूल्यक्रीतेनाध्यापनमध्यापकस्य दोषः। **अपण्यानाम**न्नादीनाम्॥ ६१॥

(३) **कुल्लूकः**। यथाकालमनुपनयनं **व्रात्यता**। तथा चोक्तम्॥ अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः **इति** बान्धवानां पितृव्यादीनामननुवृत्तिः। प्रतिनियतवेतनग्रहणपूर्वकमध्यापनं प्रतिनियतवेतनप्रदानपूर्वकमध्ययनं **च** अविक्रय्यादीनां तिलादीनां विक्रयः॥ ६१॥

(४) **राघवानन्दः। व्रात्यता** षोडशवर्षादावप्यनुपनयनम्। **बान्धवत्यागः** पितृव्यादेस्त्यागः। भृत्यैव जीवतीति भृतको गुरुः तादृशस्याध्यापनं तस्यैवोपपातकहेतुः भृतात् भृतं वेतनं तेन पुष्टादध्ययनादानं वेदपाठः शिष्यस्योपातकम्। भृतेर्नियमपूर्वकत्वे दोषोऽन्यथा गुरुदक्षिणा न स्यात् (**अपण्यानां** रसादीनाम्॥ ६१॥)

(५) **नन्दनः। भृताध्यापनं** परेण भृतस्य भिक्षावृत्तेरध्यापनं भृत्याध्यापनं **भृताच्चा**ध्ययनादानमध्यापनपरिसमाप्तेः प्रागध्यापनमध्येऽन्येन धार्मिकेण शिष्येण वा भृताद्वेदस्य स्वीकारः। **अपण्यानां** विक्रयानर्हाणां द्रव्याणाम्॥ ६६॥

(७) **मणिरामः। व्रात्यता** उक्तकाले अनुपनयनम्। **बांधवत्यागः** पितृव्यादीनामपोषणम्। भृत्याध्यापनं वेतनं निर्णीयाऽध्यापनम्। तथैवाध्ययनं भृताध्ययनम्। **अपण्यानां** तिलगुडादीनाम्॥ ६१॥

**सर्वाकरेष्वधीकारो महायन्त्रप्रवर्तनम्॥**
**हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म च॥ ६२॥**

(१) **मेधातिथिः। आकराः** सुवर्णादिभूमयस्तत्राधिकारो राजनियोगेनाधिपतित्वम् **सर्व**ग्रहणादन्यदप्यर्थोत्पत्तिस्थानं गृह्यते। तेन ग्रामनागरनियोगो व्यवहारदर्शनदण्डग्रहणादियोगः। एवमेव **यन्त्राणि** सेतुबन्धादीनि जलप्रवाहनियमार्थानि तेषां महतां **प्रवर्त्तनम्। औषधीनाम**शुष्काणां **हिंसा**च्छेदः **स्त्रीणामाजीवः**। स्त्रिय उपजीव्यते। स्त्रीधनेन शरीरकुटुंबधारणं क्रियते। भार्यापण्यभावो वेशस्त्रीप्रयोजनं वा। **अभिचारो** वैदिकेन शापादिना मन्त्रप्रयोगेण श्येनादियागेन वा शत्रुमारणम्। **मूलकर्म** वशीकरणं मन्त्रादिक्रिययैव॥ ६२॥

(२) **सर्वज्ञनारायणः। आकरेषु** सुवर्णाद्युत्पत्तिस्थानेषु **अधिकारो** व्यापारत्वम्। **महायन्त्रं** वराहादिमहाप्राणिहिंसार्थयन्त्रं तन्निर्माणम्। **स्त्रिया** भार्यया परगृहादिप्रेषितया **जीवो** वर्तनम्। **अभिचारो** हिंसार्थः श्येनादिः। **मूलकर्म** मन्त्रादिना वशीक्रिया॥ ६२॥

(३) **कुल्लूकः**। सुवर्णाद्युत्पत्तिस्थानेषु राजाज्ञयाऽधिकारः महतां प्रवाहप्रतिबन्धहेतूनां सेतुबन्धादीनां प्रवर्तनम्। औषधीनां जातिमात्रार्दानां हिंसनम्। एतच्च ज्ञानपूर्वकाभ्यास-क्रियायां प्रायश्चित्तगौरवात् यत्तत्क्रष्टजानामौषधीनामित्यादिना वक्ष्यति तत्सकृद्धिंसायां प्रायश्चित्तलाघवात् भार्यादिस्त्रीणां वेश्यात्वं कृत्वा तदुपजीवनं श्येनादियज्ञेनापराद्धस्य मारणं मन्त्रौषधिना वशीकरणम्॥ ६२॥

(४) **राघवानन्दः**। **सर्वाकरेषु** लवणाद्युत्पत्तिस्थलेषु। **महायन्त्रप्रवर्तनं** उदकप्रति-बन्धकसेतूनां स्वभूम्याद्यर्थकरणं तत्रानेकजन्तुवधस्य संभवात् तिलादीनां पेषणी वा। औषधीनां मारणम्। **स्त्र्याजीवः** परगृहसेवाद्यर्थं विक्रीतभार्यस्तथाऽवाप्तधनेन जीवो जीवनं वा यस्य। **अभिचारो** विप्रातिरिक्तस्य रोगाद्युत्पादनम्। **मूलकर्म** वशीकरणम्॥ ६२॥

(५) **नन्दनः**। **महायन्त्रमिक्षुयन्त्रादिकं** हिंस्त्रौषधिस्त्र्युपाजीवः हिंस्त्रौषधीनां स्त्रीणां चोपजीवनं स्त्रियार्जितद्रव्यजीवनं चेत्यर्थः **मूलकर्म** वशीकरणम्॥ ६२॥

(६) **रामचन्द्रः**। **महायन्त्रप्रवर्तनं** महावारादिसंबन्धनम्। **हिंस्त्रौषधीनां** आर्द्राणां हिंसा। **स्त्र्याजीवः** स्त्र्युपार्जितधनजीवनम्। **मूलकर्म** अभिनयो वशीकरणम्॥ ६२॥

(७) **मणिरामः**। **सर्वाकरेषु** सुवर्णाद्युत्पत्तिस्थानेषु **महायंत्रप्रवर्तनं** महतां प्रवाहप्रति-बंधहेतूनां सेतुबंधादीनां प्रवर्तनम्। औषधीनां **हिंसा** हिंसनम्। **स्त्र्याजीवः** भार्या (दिस्त्रियां) वेश्यात्वं कृत्वा जीवनम्। आत्मार्थं च क्रियारंभः देवपित्राद्युद्देशमंतरेण पाकाद्यनुष्ठानम्॥ ६२॥

**इन्धनार्थमशुष्काणां द्रुमाणामवपातनम्॥**
**आत्मार्थं च क्रियारम्भो निन्दितान्नादनं तथा॥ ६३॥**

(१) **मेधातिथिः**। इन्धनाद्यर्थं तु न दोषः अग्निशुद्धत्वाच्छुष्कसर्वसंभवे। **क्रियारंभः** पाकारंभः। 'आतुरत्वादेवात्मार्थं न भवेदिति' प्रतिषेधात्। क्रियारंभ एवं व्याख्यायते। क्रियारंभे हि प्रायश्चित्तोपदेशादेव प्रतिषेधः कल्प्येत। न ह्यप्रतिषिद्धप्रायश्चित्तं युक्तं 'निन्दितं च समाचरन्' इति वचनात्। अद्य पुनर्यत्प्रभाषितं तथासिद्धे प्रतिषेधे प्रायश्चित्तं विधीयते। न कल्पनागौरवं भवति तेन। **निन्दितान्नादनम्**। "ननु गर्हितान्नाद्ययोरिति कुत एतत्"। विकल्पार्थम्। अभ्यासे तत्प्रायश्चित्तमिदं तु सकृदेव। प्रत्ययभेदो वा॥ ६३॥

(२) **सर्वज्ञनारायणः**। **क्रियारम्भः** पिष्टकादिपाकारम्भः। **निन्दितान्नं** राजान्नादि॥६३॥

(३) **कुल्लूकः**। पाकादिदृष्टप्रयोजनार्थमात्रमेव वृक्षच्छेदनम्। अनातुरस्य देवपित्राद्युद्दे-शमन्तरेण पाकाद्यनुष्ठानं निन्दितान्नस्य लशुनादेः सकृदनिच्छया भक्षणं इच्छापूर्वकाभ्यासभक्षणे पुनर्गर्हितानाद्ययोर्जग्धिरित्युक्तत्वात्॥ ६३॥

(४) **राघवानन्दः**। **अवपातनं** छेदः बहुत्वमत्राविवक्षितम्। **क्रियारम्भो** वैश्वदेवाद्यर्थं विना पाकारम्भः। **निन्दितान्नादनं** कितवराजादिर्निन्दितः॥ ६३॥

(५) **नन्दनः**। आत्मार्थक्रियारम्भो देवतादिबहिष्कारेण स्वार्थं पाकाद्यारम्भः निन्दित-स्यान्नादनं निन्दितान्नादनम् ॥ ६३ ॥

(६) **रामचन्द्रः**। **क्रियारम्भः** पाकक्रियारम्भः आत्मार्थम्। निन्दितस्यान्नस्य **अदनं** भक्षणम् ॥ ६३ ॥

**अनाहिताग्निता स्तेयमृणानामनपक्रिया ॥**
**असच्छास्त्राधिगमनं कौशीलव्यस्य च क्रिया ॥ ६४ ॥**

(१) **मेधातिथिः**। कृतविवाहस्य विदुषो द्रव्यसंपत्तौ जातपुत्रस्य वाऽनाहिताग्निता। साऽधिकाराविशेषान्नित्यश्रुतयो नित्याधानस्य प्रयोजिका इति स्मृतिकारो मन्यते। "कथं पुनः श्रुतिप्रयुक्तमाधानं विहितम्। कस्यचित्प्रकरणे कथ्यते येनागमोऽप्युच्छिद्येत। स्वतश्च प्रतीयमानाधिकारत्वादग्निनिष्पत्त्यर्थतया कुतोऽधिकारान्तरप्रयुक्तिः"। अग्नयस्तावद्विनियुक्ता 'यदाहवनीये जुहोति' इत्यादिना। न चाधानेन विना तेषां निष्पत्तिरित्यतोऽग्निषु प्रयुक्तेषु तदपि प्रयुक्तमित्युच्यते। "यद्येवमग्निनिष्पत्त्यर्थं तदाहिताग्निष्वधिकारोऽसत्स्वग्निषु नाधि-क्रियते। न चाधानं नित्यं यावज्जीवादिविधिवदतः कथमनाहिताग्नितादोषः"। 'अकुर्वन् विहितं कर्मेति' विहिताकरणे प्रायश्चित्तं विहितम् 'अग्नीनादधीतेति'। "सत्यं विहितम्। न स्वर्गाय नाधिकारान्तरसंपत्तये। किं तर्हि' अग्निनिष्पत्तये। अग्नेश्च ज्ञातप्रयोजना यस्य तैः प्रयोजनं स तेनोपायेनार्जयति, अन्यस्तु नेति। का तत्र विहिताकरणाशङ्का येन प्रायश्चित्ती स्यात्। यो हि सुवर्णं नार्जयति कथमसौ दुष्येत"। उच्यते। अस्मादेव वचनात्सत्यधिकारे-ऽग्नयोऽवश्यमर्जनीया इति गम्यते। **स्तेयमुक्तेभ्यो** द्रव्येभ्योऽन्यस्य। **ऋणानां** "चतुर्भिर्ऋणैः" इत्येतच्छ्रुतेरननुष्ठानम्। **असच्छास्त्राणि** चार्वाकनिर्ग्रन्थाः, यत्र न प्रमाणं न वेदकर्म फल-संबद्धमापद्यते। **कौशीलवत्वं** चारणत्वं नर्तनत्वं गायनत्वम् ॥ ६४ ॥

(२) **सर्वज्ञनारायणः**। **अनाहिताग्निता** धनसंभवे। **स्तेयं** वस्त्रादेः। **ऋणानां** धार्यमाणधनानाम्। **असच्छास्त्रं** पाषण्डशास्त्रम्। **कौशीलव्यस्य** भावस्य ॥ ६४ ॥

(३) **कुल्लूकः**। सत्यधिकारेऽग्न्यनाधानं सुवर्णादन्यस्य सारद्रव्यस्यापहरणम्। **ऋणानां** च ऋणैस्त्रिभिर्ऋणवान्नरो जायते तदनपकरणम्। श्रुतिस्मृतिविरुद्धशास्त्रशिक्षणं नृत्यगीत-वादित्रोपसेवनम् ॥ ६४ ॥

(४) **राघवानन्दः**। **अनाहिताग्निता** आवसथ्याख्याग्निशून्यता। **स्तेयं** सुवर्णातिरिक्त-धातोः। **अनपक्रिया** ऋणापरिशोधनम्। **असच्छास्त्राधिगमनं** श्रुतिस्मृतिविरुद्धार्थप्रति-पादकशास्त्राभ्यासः। **कौशीलव्यस्य** गीतनृत्यवाद्यादेः क्रियाऽनुष्ठानम् ॥ ६४ ॥

(५) **नन्दनः**। **ऋणानां** शास्त्रसिद्धानां लोकप्रसिद्धानां **वाऽनपक्रिया** शक्तौ सत्या-मनपाकरणं कौसल्यं कुत्सितशीलत्वं व्यसनक्रिया स्त्र्यक्षादिप्रसङ्गः ॥ ६४ ॥

(६) **रामचन्द्रः**। सत्यधिकारे **अनाहिताग्निता**। असच्छास्त्राधिगमनं अभिचार-प्रयोगः। कौशीलव्यसनाद्यस्य क्रियाकरणम् ॥ ६४ ॥

(७) **मणिरामः।** **अनाहिताग्निता** सत्यधिकारे आधानस्याऽकरणम्। **स्तेयं** सुवर्णा-ऽतिरिक्तस्य। **असच्छास्त्राधिगमनं** श्रुतिस्मृतिविरुद्धशास्त्रशिक्षणम्। कौशीलव्यस्य **च** क्रिया-नृत्यगीतवादित्रसेवनम्॥ ६४॥

**धान्यकुप्यपशुस्तेयमद्यपस्त्रीनिषेवणम्॥**
**स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यं चोपपातकम्॥ ६५॥**

(१) **मेधातिथिः।** शणसप्तदशानि **धान्यानि।** **कुप्यं** लोहताम्रादिमयं कुण्डकटा-हादि। "ननु चाविशेषेण पूर्वश्लोके स्तेयमुक्तम्"। परिहृतमेतत् 'हंसप्रतिषेधवदिति'। अथवा स्तेयं यदन्यस्मादुद्धृते गृहीते संभवेनाशोध्यते न हि जातु स्तेयमिति लोकप्रसिद्धं यथा धैर्यादिना अपकरणम्। **मद्यपेति।** ब्राह्मणस्य क्षत्रियादि**स्त्रीनिषेवणं** सह शयनं संप्रयोगं वा। **स्त्रिया वधो,** ब्राह्मण्या अपि। **नास्तिक्यं** नास्ति परलोको नास्ति दत्तमित्याद्यभि-निवेशः॥ ६५॥

(२) **सर्वज्ञनारायणः।** **कुप्यं** ताम्रादि। **पशुः** गोव्यतिरिक्तचतुष्पदः। **निषेवणं** मैथुनम्। **स्त्रीति** ब्राह्मणस्त्रीसाधारण्येन अन्यथा शूद्रादिपदेनैव तत्प्राप्ते स्त्रीपदं व्यर्थं स्यात्। **नास्तिक्यं** परलोकाभावनिश्चयः। **उपपातकं** पातकाद्धीनम्। अत्र च यस्यान्य-त्राणि गुरुषु लघुवा पापेषु गणनं कृतं तत्र ज्ञानाज्ञानविशिष्टाविशिष्टपुरुषसंबन्धसकृद-भ्यासापेक्षया स्वयं व्यवस्थोह्या॥ ६५॥

(३) **कुल्लूकः।** धान्यताम्रलोहादेः पशूनां च चौर्यं द्विजातीनां पीतमद्यायाः स्त्रिया-गमनं स्त्रीशूद्रवैश्यक्षत्रियहननं अदृष्टार्थकर्माभावबुद्धिः एतत्प्रत्येकमुपपातकं बान्धवत्याग इत्यनेनैव मात्रादीनां त्यागप्राप्तौ। पृथग्वचननिन्दार्थं पितृव्यादि बान्धवत्यागेनावश्यमेव प्रायश्चित्तं भवति, किंतु मात्रादित्यागप्रायश्चित्तान्न्यूनमपि भवति॥ ६५॥

(४) **राघवानन्दः।** **मद्यपस्त्रीनिषेवणं** निपीतमद्यायाः स्त्रियाः ब्राह्मण्यादेः सेवनं अन्त्यजस्त्रीनिषेधस्योक्तत्वात्। **नास्तिक्यं** नास्ति परलोक इति बुद्धिः॥ ६५॥

(७) **मणिरामः।** **कुप्यस्य** ताम्रलोहादेः अदृष्टार्थकर्माभावबुद्धिः। एतत्सर्व-मुपपातकं ज्ञेयम्॥ ६५॥

(९) **भारुचिः।** उपपातकनिर्देशोऽयमष्टाभिः श्लोकैः। अस्मिंश्च गोवधादौ कानिचित् स्नातकव्रतोपदिष्टानि परदाराभिगमनादीनि, कानिचिन् मासश्राद्धप्रकरणो-क्तानि परिवेदनादीनि, कानिचिदिहैवोक्तानि तटाकारामदारापत्यविक्रयादीनि तद्वि-परीतानां त्रिविधानामपि कर्मणामुपपातकार्थोऽत्र निर्देशः। अस्य प्रयोजनमुपपातक-प्रायश्चित्तं, यथा तेषु सामान्यं स्याद्, विशिष्टं च यथोपदेशं वक्ष्यति, "उपपातकसंयुक्तो गोघ्नो मासं यवान् पिबेत्" इत्येवमादि। स्नातकव्रतलोपे चाभोजनं प्रायश्चित्तमा-म्नातं, तथा मासिकार्थप्रकरणोक्तानामपाङ्क्त्यानां विशोधनमिति। यानि त्वस्मिन्नेव गोवधादौ गृहीतानि पुनः प्रायश्चित्तार्थं गृह्यन्ते, तेषामुभयत्राम्नानसामर्थ्याद्, विकल्पे-नोभे अपि प्रायश्चित्ते स्याताम्। एतेन सर्वत्र पुनराम्नानं व्याख्यातम्। यानि चेह

ताकदिक्रयादीनि प्रायश्चित्तविधानकार्याणि विज्ञायन्तेऽनुमानतः। तेषां नियमोपदेशाभावाद् वर्जनेऽभ्युदयो नास्ति, अतिक्रमे तु प्रायश्चित्तमस्ति। येषां तु वर्णनोपदेशे प्रायश्चित्तविधानञ्च, यथा "न नग्नः स्नानमाचरेत्" इति प्रतिषेधः, "स्नात्वा च विप्रो दिग्वासा" इत्येवमादि प्रायश्चित्तम्। तेषां वर्जनेऽभ्युदयोऽतिक्रमे च प्रायश्चित्तम्। अथ तु प्रायश्चित्तविधानादेव प्रतिषेधोऽनुमीयते। एवं च सत्युभयोरविशेषः ॥ ६५ ॥

**ब्राह्मणस्य रुजःकृत्यं घ्रातिरघ्रेयमद्ययोः ॥**
**जैह्म्यं च मैथुनं पुंसि जातिभ्रंशकरं स्मृतम् ॥ ६६ ॥**

(१) **मेधातिथिः।** दण्डहस्तादिना शरीरपीडाजननं **रुजःकृत्यम्।** "किं पुनरघ्रेयम्। न हि भक्षणप्रतिषेधवत् घ्राणप्रतिषेधः क्वचिदस्ति। न तु शक्यं विज्ञातुं यदभक्ष्यं तदघ्रेयमिति। घृतादेयोगार्थमुपात्तस्याभक्ष्यत्वन्नचाघ्रेयत्वम्"। उच्यते। पूतिदुर्गन्धतया घ्राणं विकरति लशुनपलाण्डुपुरुषपुरीषादि तद्गृह्यते। मद्यसाहचर्याच्च यदभक्ष्यं तदेव विज्ञायते। न पूतिदार्वादि। **जैह्म्यं** कुटिलताऽप्रसन्नहृदयत्वम्, अन्यदुच्यतेऽन्यत्क्रियते हृदये चान्यत् ॥ ६६ ॥

(२) **सर्वज्ञनारायणः।** **रुजःकृत्या** व्रणादि पीडाकरणम्। **अघ्रेयं** लशुनादि मद्यं सुरामद्ये तयोरघ्राणं कामतः। **जैह्म्यमनार्जवमृजुषु** **पुंसि** पुरुषमुखादौ **मैथुनं** शिश्नप्रक्षेपः। **जातिभ्रंशकरं** सजातीयेभ्योऽपचयकारीति योगो रूढिश्च ॥ ६६ ॥

(३) **कुल्लूकः।** ब्राह्मणस्य दण्डहस्तादिना पीडा क्रिया यदतिशयदुर्गन्धितयाऽघ्रेयं लशुनपुरीषादि तस्य मद्यस्य चाघ्राणं कुटिलत्वं वक्रता पुंसि च मुखादौ मैथुनमित्येतत्प्रत्येकं जातिभ्रंशकरं स्मृतम् ॥ ६६ ॥

(४) **राघवानन्दः।** जातिभ्रंशकरादि चतुष्टयस्य प्रायश्चित्तार्थं संग्राहे **ब्राह्मणस्येति** चतुर्भिः। रुजः पीडाघ्रातिर्गन्धग्रहणम्। अघ्रेयमद्ययोरघ्रेयं पुरीषलशुनादि कामतः। **जैह्म्यं** कुटिलता। **मैथुनं** गुदादौ। अत्रापि प्रत्येकं जातिभ्रंशकरं स्मृतं मन्वादिभिरेवमुत्तरत्र ॥ ६६ ॥

(५) **नन्दनः।** उपपातकत्वेऽपि नैतानि तुल्यकक्ष्याणि मंतव्यानि प्रायश्चित्तवैषम्यस्य वक्ष्यमाणत्वात्। **ब्राह्मणस्य रुजः कृत्यमिति।** **कृत्यं** कृतिः यो यस्यां जातौ जातः तस्य तस्याः प्रच्युतिर्जातिभ्रंशः ॥ ६६ ॥

(६) **रामचन्द्रः।** **रुजःकृत्या** हस्तदण्डादिना रोगोत्पादनम्। रुजः रोगोत्पादकहस्तदण्डादिना शरीरपीडाकरम्। **जैह्म्यं** कुटिलता अप्रसन्नहृदयत्वम् ॥ ६६ ॥

(७) **मणिरामः।** **रुजः कृत्या** दंडहस्तादिना पीडाक्रिया अघ्रेयस्य लशुनादेः **मद्यस्य च** घ्रातिः अघ्राणं **जैह्म्यं** कपटता ब्राह्मणस्य तत्सर्वं प्रत्येकं जातिभ्रंशकारित्वं स्मृतम् ॥ ६६ ॥

(८) **गोविन्दराजः।** **ब्राह्मस्येति।** ब्राह्मणस्य पीडोत्पादनं पलाण्ड्वादेः **मद्यस्य च** घ्राणं कुटिलत्वं पुंसि च मुखादौ मैथुनमित्येवं प्रत्येकं जातिभ्रंशकरं स्मृतम् ॥ ६६ ॥

**खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा ।।**
**सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च ।। ६७ ।।**

(१) **मेधातिथिः । मृगा** रुरुपृषतादय आरण्याः । **इभो** हस्ती । सत्यपि मृगत्वे बाहुल्येन ग्रामवासित्वाद्ग्रहणम् । **मीनो** मत्स्यः । **अहिः** सर्पः ।। ६७ ।।

(२) **सर्वज्ञनारायणः ।** खरेभो मृगा हरिणाद्याः । षष्ठ्याः साकांक्षत्वाद्वधपदेनान्वयः । **संकरीकरणं** संकरजातीयतुल्यत्वरूपहीनताकरमत्यन्ताभ्यासादिति योगो रूढिश्च ।। ६७ ।।

(३) **कुल्लूकः ।** गर्दभतुरगोष्ट्रमृगहस्तिच्छागमेषमत्स्यसर्पमहिषाणां प्रत्येकं वधः सङ्करीकरणं ज्ञेयम् ।। ६७ ।।

(४) **राघवानन्दः ।** एवं खरादि दशानां प्रत्येकं वधः संकरीकरणम् **इभो** हस्ति ।। ६७ ।।

(५) **नन्दनः ।** संकीर्णयोनिजन्मकरं तत् ।। ६७ ।।

(६) **रामचन्द्रः ।** संकरस्तुल्यजातीयतुल्यत्वहीनता ।। ६७ ।।

(७) **मणिरामः ।** खरादीनामेकैकस्य वधः ब्राह्मणस्य संकरीकरणं ज्ञेयं; **खरो** गर्दभः । **इभः** हस्ती; अजः छागः; आविको मेषः **अहिः** सर्पः; **मीनो** मत्स्यः ।। ६७ ।।

(८) **गोविन्दराजः । खराश्वोष्ट्रमृगेभानामिति ।** खरोश्वोष्ट्रमृगहस्तिच्छागैडकमत्स्यसर्पमहिषाणां प्रत्येकं वधः संकरीकरणं बोद्धव्यम् ।। ६७ ।।

**निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् ।।**
**अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ।। ६८ ।।**

(१) **मेधातिथिः । निन्दिता** अप्रतिग्राह्याः **शूद्रा** ये पापकर्माणस्तेभ्यो **धनादानं** प्रतिग्रहेण पुनः पुनः, प्रत्यादिष्टप्रतिग्रहस्य प्रतिषिद्धत्वात् ।। ६८ ।।

(२) **सर्वज्ञनारायणः । निन्दितेभ्यः** पतितादिभ्यः धनादानं विना विप्रतिग्रहम् । **वाणिज्यं** शूद्रसेवा च विप्रक्षत्रयोः । असत्यभाषणं साक्ष्यादिव्यतिरेकेणापि । **अपात्रीकरणं** दानानर्हताहेतुरिति योगो रूढिश्च ।। ६८ ।।

(३) **कुल्लूकः ।** अप्रतिग्राह्यधनेभ्यः प्रतिग्रहो **वाणिज्यं** शूद्रस्य परिचर्याऽनृताभिधानमित्येतत्प्रत्येकमपात्रीकरणं ज्ञेयम् ।। ६८ ।।

(४) **राघवानन्दः ।** अप्रतिग्राह्यधनेभ्यः प्रतिग्रहः **वाणिज्यं** शूद्रस्य परिचर्या अनृताभिधानमित्येतत्प्रत्येकमपात्रीकरणं ज्ञेयम् ।। ६८ ।।

(५) **नन्दनः ।** अपात्रीकरणमपात्रीकरणत्वम् ।। ६८ ।।

(६) **रामचन्द्रः । अपात्रीकरणं** अपात्रहस्ते यद्दत्तम् ।। ६८ ।।

(८) **गोविन्दराजः। निन्दितेभ्य इति।** अप्रतिग्राह्येभ्यः प्रतिग्रहो **वाणिज्यं** शूद्रस्य परिचर्या अव्रताभिधानमित्येतत्प्रत्येकमपात्रीकरणं विज्ञेयम् ॥ ६८ ॥

**कृमिकीटवयोहत्या मद्यानुगतभोजनम् ॥**
**फलैधःकुसुमस्तेयमधैर्यं च मलावहम् ॥ ६९ ॥**

(१) **मेधातिथिः। कृमयो** भूमिशरणाः क्षुद्रजन्तवः। **कीटास्तथाविधा एव** किञ्चिदुपचितमूर्तयोऽपक्षाः सपक्षाश्च मक्षिकाशलभादयः। **वयांसि** पक्षिणः शुकसारिकादयः। **मद्यानुगतं** मद्येन संस्पृष्टं तद्गन्धाचितं च। **अधैर्यं** चेतसोऽस्थिरत्वं स्वल्पेऽप्युपघातेऽपध्वंसः ॥ ६९ ॥

(२) **सर्वज्ञनारायणः। कृमयो** मांसादिगता यूकाद्याः **कीटाः** भूम्यादिगताः पिपीलिकाद्याः **वयांसि** पक्षिणः। **मद्यानुगतं** मद्यसन्निकर्षागतं घृतादि तस्य भोजनम्। **फलैधःकुसुमस्तेयं** स्वार्थं न देवताद्यर्थम्। **अधैर्यं** चापलम्। **मलावहं** पापावहमिति योगो रूढिश्च ॥ ६९ ॥

(३) **कुल्लूकः। कृमयः** क्षुद्रजन्तवस्तेभ्य ईषत्स्थूलाः **कीटास्तेषां** वधः पक्षिणां च मद्यानुगतं यद्भोज्यमपि शाकाद्येकत्रपिटकादौ कृत्वा मद्येन सहानीतं तस्य भोजनम्। मेधातिथिस्तु मद्यानुगतं मद्यसंस्पृष्टमाह तन्न तत्र प्रायश्चित्तगौरवात्। फलकाष्ठपुष्पाणां च चौर्यं अल्पेऽपचयेऽप्यत्यन्तवैक्लव्यं एतत्सर्वं प्रत्येकं **मलिनीकरणम्** ॥ ६९ ॥

(४) **राघवानन्दः। मद्यानुगतभोजनं** मद्यमनुगच्छति मद्यपात्रस्थितं मद्यैः सह गतं मद्यमनुगतं संयुक्तं यस्मिन्निति वा तस्य भोजनं एधःकुसुमयोर्भोगार्थं स्तेयं **अधैर्यं** अत्यन्तक्लीबता एतत्सर्वं मलावहमित्यन्वयः ॥ ६९ ॥

(५) **नन्दनः। अधैर्यं** चपलता **मलापहं** मलकरम् ॥ ६९ ॥

(६) **रामचन्द्रः। वयः** पक्षी। **मद्यानुगतभोजनं** मद्यसंनिकर्षघृतादि भोजनम् ॥ ६९ ॥

(७) **मणिरामः।** क्षुद्रजंतुः **कृमिः।** तस्मादीषत्स्थूलः **कीटः** तेषां वधः **मद्याऽनुगतभोजनं** मद्येन सहानीतं **एधः** काष्ठम्। फलकाष्ठपुष्पाणां स्तेयम्। **मलावहं** मलीकरणम् ॥ ६९ ॥

(८) **गोविन्दराजः। कृमिकीटवयो हत्येति। कृमयः** शूद्रजन्तवो भूमिशरणास्तेभ्य ईषदुपचिताः सपक्षाः अपक्षाश्च **कीटास्तेषां** पक्षिणां च हननं **मद्येन च सह** यत्कुतश्चितावंदसार्थतयागतस्य भाजनं न तु मद्यसंस्पृष्टस्य अपः सुराभाजनस्थानमद्यभाण्डस्थिता इत्यसंस्पृष्टेऽपि मद्यभाण्डसंसर्गमात्रेण स्थूलप्रायश्चित्तदर्शनात्। फलकाष्ठपुष्पाणां वा चौर्यं स्वल्पेऽप्यपचयेऽत्यन्तवक्तव्यमित्येतत् प्रत्येकं मलिनीकरणीयम् ॥ ६९ ॥

(९) **भारुचिः।** जातिभ्रंशकरसंकरीकरणापात्रीकरणमलिनीकरणानां वर्गशः

संज्ञानिर्देशश्चतुर्भिः श्लोकैः। अस्य प्रयोजनम्। वर्गश एव प्रायश्चित्तोपदेशो यथा स्यात्। वक्ष्यति हि "जातिभ्रंशकरं कर्म कृत्वा" इत्येवमादि ।। ६९ ।।

**एतान्येनांसि सर्वाणि यथोक्तानि पृथक्पृथक् ।।**
**यैर्यैर्व्रतैरपोह्यन्ते तानि सम्यङ्निबोधत ।। ७० ।।**

(१) **मेधातिथिः।** प्रायश्चित्तनिमित्तान्युक्तानि। संज्ञाभेदश्च प्रायश्चित्तभेदार्थः। वक्ष्यमाणस्य संक्षेपवचनम् ।। ७० ।।

(२) **सर्वज्ञनारायणः।** यथोक्तानि येन तानि तेन क्रमेण निबोधत। अत्र च क्वचित्क्वचिद्व्यवस्थापि वक्ष्यते यत्र तु व्यवस्था नोक्ता तत्र सा कामधेनुदीपिकायामस्माभिः सम्यगुक्तेति ।। ७० ।।

(३) **कुल्लूकः। एतानि** ब्रह्महत्यादीनि **सर्वाणि** पापानि भेदेन यथोक्तानि **यैर्यैर्व्रतैः** प्रायश्चित्तरूपैर्नाश्यन्ते तानि यथावच्छृणुत ।। ७० ।।

(४) **राघवानन्दः।** निमित्तान्यनुवदन्नैमित्तिकं बाधं प्रतिजानीते **एतानीति।** ब्रह्महत्यादीनि पापानि येन भेदेनोक्तानि **यैर्यैः** प्रायश्चित्तै**रपोह्यन्ते** नाश्यन्ते तानि श्रृणुतेत्यन्वयः ।। ७० ।।

(५) **नन्दनः। यथोक्तानि** महापातकत्वेन जातिभ्रंशकरत्वेन संकीर्णकरणत्वेनापरिणत्वेन मलाघवत्वेन चोक्तानि ।। ७० ।।

(६) **रामचन्द्रः। एनांसि** पापानि। यैर्यैर्व्रतैरपोह्यन्ते तानि व्रतानि सम्यङ्निबोधत ।। ७० ।।

(७) **मणिरामः। एतानि** ब्रह्महत्यादीनि **एनानि** पापानि। **व्रतैः** प्रायश्चित्तरूपैः ।। ७० ।।

(८) **गोविन्दराजः। एतानीति। एतानि** ब्रह्महत्यादीनि पापानि सर्वाणि यथोक्तानि **यैर्यैः** प्रायश्चित्तैर्निर्हीयन्ते तानि व्रतानि यथातथ्यं श्रृणुत ।। ७० ।।

**ब्रह्महा द्वादशसमाः कुटीं कृत्वा वने वसेत् ।।**
**भैक्षाश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम् ।। ७१ ।।**

(१) **मेधातिथिः।** तृणपर्णादिकृतो निकेतो वर्षातपशीतत्राणादिहेतुर्गृहं **कुटीति** कथ्यते। **समा** वर्षाणि। **भैक्षाशीति** स्मृत्यन्तरे सप्तागारमनभिसंहितं च भैक्ष्यमुक्तम्। **शवशिरो** हतस्यान्यस्य वा **ध्वजे** काष्ठादिमयीं शिरःप्रतिकृतिमुद्यतां धारयेदिति मन्यते। नैवं शब्दार्थविदः। न हि तच्छवशिर इत्युच्यते। अन्योऽप्यत्र विधिर्भविष्यति 'कृतवापनो निवसेत्' इत्यादि ।। ७१ ।।

(२) **सर्वज्ञनारायणः। कुटी** तृणपर्णादिकृतं गृहम्। **भैक्षाशी** ग्राममागत्य भिक्षां गृहीत्वा वने भुञ्जानः। **शवस्य** तस्यैवान्यस्य वा **शिरः** कपालं **ध्वजं** ब्रह्मचिह्नमग्रतः कृत्वा। अत्र सर्वत्र स्मृत्यन्तरोक्तमङ्गजातमुपहर्तव्यम्। एतदकामतो घाते ।। ७१ ।।

(३) **कुल्लूकः**। यो ब्राह्मणं हतवान्स वने कुटीं कृत्वा हतस्य शिरः कपालं तदभावेऽन्यस्यापि चिह्नं कृत्वाऽरण्ये भैक्षभुगात्मनः पापनिर्हरणाय द्वादश वर्षाणि वसेद्व्रतं कुर्यात् अत्रापि कृतवपनो निवसेदिति वक्ष्यति मुन्यन्तरोक्ता अपि विशेषा ग्राह्याः। तथा च यमः सप्तागाराण्यपूर्वाणि यान्यसंकल्पितानि च। संविशेत्तानि शनकैर्विधूमे भुक्तवज्जने। भ्रूणघ्ने देहि मे भिक्षामेनो विख्याप्य संचरेत्। एककालं चरेद्भैक्ष्यं तदलब्ध्वोदकं पिबेत्। अयं च द्वादश वार्षिकविधिः। ब्राह्मणस्याज्ञानकृतब्राह्मणवधे इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजमिति वक्ष्यमाणत्वात्। क्षत्रियवैश्यशूद्राणान्तु क्रमेणैतद्द्वादशवार्षिकं द्विगुणं त्रिगुणं चतुर्गुणं च द्रष्टव्यम्। यथोक्त भविष्यपुराणे। द्विगुणाः क्षत्रियाणान्तु वैश्यानां त्रिगुणाः स्मृताः। चतुर्गुणास्तु शूद्राणां पर्षदुक्ता महात्मनाम्,। पर्षदुच्यव्रतं प्रोक्तं शुद्धये पापकर्मणाम्। यावद्भिर्ब्राह्मणैर्ब्राह्मणानां सभा ततो द्विगुणैः क्षत्रियाणां द्रष्टव्यव्यवहारदर्शनाद्व्यर्था सभा भवेत्त्रिगुणैर्वैश्यैर्वैश्यानां चतुर्भिः शूद्रैः शूद्राणामिति सभावच्च क्षत्रियादीनां त्रयाणां व्रतमपि द्विगुणत्रिगुणचतुर्गुणमित्यर्थः। एतानि च मनूक्तब्रह्मवधप्रायश्चित्तवचनानि गुणवत्कृतनिर्गुणब्राह्मणहननविषयत्वेन भविष्यपुराणे व्याख्यातानि। हन्ता चेद्गुणवान्वीरः अकामान्निर्गुणो हतः। कर्तव्यानि मनूक्तानि कृत्वा वै आश्वमेधिकम्। ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्। गच्छेदवभृथं वापि अकामान्निर्गुणे हते। जातिशक्तिगुणापेक्षं सकृद्बुद्धिकृतं तथा। अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेत्। इति विश्वामित्रवचनात्प्रायश्चित्ताधिक्यमूहनीयम्। कामकृते तु ब्राह्मणवधे द्विगुणं ब्रह्मवधप्रायश्चित्तं चतुर्विंशति वर्षं तदाहाङ्गिराः। अकामतः कृते पापे प्रायश्चित्तं न कामतः। स्यात्त्वकामकृते यत्तु द्विगुणं बुद्धिपूर्वके ॥ ७१ ॥

(४) **राघवानन्दः**। तत्रादौ ब्रह्महत्यानिवर्तकमाह **ब्रह्महेति** सप्तदशभिः। **कुटीं** तृणपर्णादि निर्मिताम्। **शवशिरोध्वजं** तस्यैवान्यस्य वा शवस्य शिरः खट्वाङ्गादि युक्तं पाणौ विभ्रद्भिक्षाशी स्याद्द्वादशाब्दान्व्याप्य। एतत्किमर्थं आत्मशुद्ध्यर्थमित्यर्थः। तथा च यमः। सप्तागाराण्यपूर्वाणि यान्यसंकल्पितानि च। संविशेत्तानि शनकैर्विधूमे भुक्तवज्जने। भ्रूणघ्नो देहि मे भिक्षामेनो विख्याप्य संचरेत्। एककालं चरेद्भैक्ष्यं तदलब्धौ जलं पिबेदिति। अत्र वक्ष्यमाणकेशवापनादिकं ज्ञेयम्। इदं त्वकामतोऽगुणवद्ब्राह्मणे। इयं च शुद्धिरुदिता प्रमाप्याकामतो द्विजमिति वक्ष्यमाणत्वात्। गुणवद्ब्राह्मणकृतवधे तु भविष्योक्तम्। निहन्ता गुणवान्वीरः अकामान्निर्गुणो हतः। कर्तव्यानि मनूक्तानि त्यक्त्वा वै आश्वमेधिकमिति। क्षत्रियवैश्यशूद्राणां तु द्विगुणत्रिगुणचतुर्गुणानि। द्विगुणा क्षत्रियाणां तु वैश्यानां त्रिगुणा च सा। चतुर्गुणा तु शूद्राणां पर्षदुक्ता महात्मनामिति। परिषद्रूपं विश्वामित्रोऽप्याह। जातिशक्तिगुणापेक्षं सकृद्बुद्धिकृतं तथा। अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेदिति। कामकृतं तु विप्रस्यापि द्विगुणम्। अकामतः कृते पापे प्रायश्चित्तं न कामतः। स्यात्त्वकामकृते यद्धि द्विगुणं बुद्धिपूर्वकं इत्यङ्गिरसोक्तेरिति सार्वत्रिकम् ॥ ७१ ॥

(५) **नन्दनः**। आत्मविशुद्ध्यर्थं न लोकसंव्यवहार्यमात्रार्थं कृत्वा **शवशिरोध्वजं** शवशिरोध्वजं स्वरूपं लक्षणं कृत्वा शवाहरणं जीवच्छिरस्वरूपतानिवृत्त्यर्थम् ॥ ७१ ॥

(६) **रामचन्द्रः।** **शवः** मृतः शवशिरः ध्वजं कृत्वा ।। ७१ ।।

(७) **मणिरामः।** यं ब्राह्मणं हतवान् तस्यैव शवस्य शिरः कपालं तदभावेऽन्यस्यापि कपालं ध्वजं चिह्नं कृत्वा बलं भिक्षाशी भूत्वा आजनविशुद्धार्थं पापनिर्हरणार्थं द्वादश **समाः** वर्षाणि वसेत्। प्रायश्चित्तांतरमाह। **लक्ष्यमिति। शस्त्रभृतां** धनुः शराद्यायुधधारिणां विदुषां ब्रह्मवधप्रायश्चित्तार्थमयं लक्षीभूत इत्येवंजानतां स्वेच्छया लक्ष्यं बाणलक्षभूतो वा तिष्ठेत् यावन्मृतकल्पो भवति इति द्वितीयं प्रायश्चित्तम्। प्रायश्चित्तांतरमाह। **प्रास्येदिति।** अथवा समिद्धे ग्नौवाक्शिराः आत्मानं **त्रिः** त्रिवारं प्रास्येत्। इदं तृतीयं प्रायश्चित्तम् ।। ७१ ।।

(८) **गोविन्दराजः। ब्रह्महेति।** यो ब्राह्मणं हतवान् स वने तृणपर्णादिमठिकां कृत्वा शवसम्बन्धि च शिरश्चिन्हं कृत्वा। सप्तागारण्यपूर्वाणि नान्यसंकल्पितानि च। संविशेत्तानि शनकैर्विधूमे भुक्तवज्जने। एककालं चरेद्भैक्ष्यं पिबेदिति यमस्य विधिना भैक्ष्यमुतात्मनः पापनिर्हरणार्थं द्वादशवर्षाणि वसेत् ।। ७१ ।।

(९) **भारुचिः।** अस्योपरिष्टादत्रैव प्रकरणे गुणविधिं वक्ष्यति, "कृत्वापनो निवसेद् ग्रामान्ते गोव्रजेऽपि वा" इत्येवमादि। **कृत्वा शवशिरोध्वजमित्यत्र** मुख्यं गृह्यते, गुणवृत्तेः कारणाभावात्। अवकीर्णप्रायश्चित्तगर्दभाजीनवत् शवशिरो मुख्यमेव स्यात्। सुरापान-प्रायश्चित्तवद् विचित्रा शास्त्रगतिः। न च वचनस्यातिभारोऽस्ति। न चात्र न्यायगति-रसाध्वी शास्त्रलक्षणवद् धर्माधर्मयोः ।। ७१ ।।

**लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः ।।**
**प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ।। ७२ ।।**

(१) **मेधातिथिः।** धानुष्का यत्र युद्धं कर्तुं लक्षं विध्यन्ति तत्र तद्भूतेन भवितव्यम्। अथवा संग्रामेऽन्यत्र युध्यमानानां शस्त्रप्रहाराः प्रतीप्सितव्याः। **आत्मन इच्छायेति** प्रमादात्तदन्तरंगतस्य सत्यपि स्ववधे न शुद्धिः। **विदुषामित्येव** जानते प्रायश्चित्तोपदेशो-ऽयमिति। अथवा धनुर्वेदज्ञानाम्। **अग्नौ वाऽऽत्मानं** क्षिपेत्**समिद्धे त्रि**रुत्थाय पुनः पतेत् ।। ७२ ।।

(२) **सर्वज्ञनारायणः।** कामतस्त्वाह **लक्ष्यमिति।** शस्त्रभृतां लक्ष्यं स्यात् मां शस्त्रेण घातयतेति। विदुषामयं ब्रह्महेति जानताम्। **इच्छयात्मनो** न तु दैवात्तथात्वे पापमोक्षः-लक्ष्यं स्यादित्यनेन च तेनोपायेन मरणं विहितम्। **प्रास्येत्।** क्षिपेत्। त्रिरित्येकद्विवारेणा-मरणे त्रिरिति च संभवन्मरणहेतुवारोपलक्षणम्। यदात्वे तन्नकर्तुमुत्सहते तदा आपस्त-म्बवचनानुसारेण यावज्जीवं ब्रह्महत्याव्रतं प्रागुक्तं चरेत् ।। ७२ ।।

(३) **कुल्लूकः।** धनुःशराद्यायुधधारिणां ब्रह्मवधपापक्षयार्थमयं लक्षीभूत इत्येवं जानतां स्वेच्छया बाणलक्ष्यभूतो वावतिष्ठेद्यावन्मृतो मृतकल्पो वा विशुध्येत्तदाह **याज्ञवल्क्यः** संग्रामे वा हतो लक्ष्यभूतः शुद्धिमवाप्नुयात्। **मृतकल्पः** प्रहारार्त्तो जीवन्नपि विशुध्यति। **अग्नौ प्रदीप्ते** वाऽधोमुखस्त्रीन्वारान् शरीरं प्रक्षिपेत् तथा प्रास्येत यथा म्रियेतेत्यापस्तंब-

वचनात् एवं प्रक्षिपेदेतत्प्रायश्चित्तद्वयमनन्तरे वक्ष्यमाणं च यजेत वाश्वमेधेनेत्येवं प्रायश्चित्तत्रयमिदं कामतः क्षत्रियस्य ब्राह्मणवधविषयं मनुश्लोकमेव लिखित्वा यथाव्याख्यानं **भविष्यपुराणे**। लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः। प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः। यजेत वाश्वमेधेन क्षत्रियो विप्रघातकः। प्रायश्चित्तत्रयं ह्येतत्क्षत्रियस्य प्रकीर्तितम्। क्षत्रियो निर्गुणो धीरं ब्राह्मणं वेदपारगम्। निहत्य कामतो वीरल्लक्ष्यः शस्त्रभृतो भवेत्। चतुर्वेदविदं धीरं ब्राह्मणं चाग्निहोत्रिणम्। निहत्य कामादात्मानं क्षिपेदग्नावावाक्शिराः। निर्गुणं ब्राह्मणं हत्वा कामतो गुणवान्गुह। यष्ट्वा वा अश्वमेधेन क्षत्रियो यो महीपतिः ॥ ७२ ॥

(४) **राघवानन्दः**। कामतो वेदाविद्ब्राह्मणवधे राजन्यस्याह **लक्ष्यमिति**। विदुषां ब्रह्महत्या पापक्षयार्थं स्वयं क्षत्रियो लक्षीभूत इत्येवम्। एभ्यो जीवन्नपि शुध्येत्। संग्रामे वा हतो लक्ष्यभूतः शुद्धिं प्राप्नुयात्। **मृतकल्पः** प्रहारार्तो जीवन्नपि विशुध्यतीति याज्ञवल्क्योक्तेः **भविष्योक्त**मपि। प्रायश्चित्तत्रयं ह्येतत्क्षत्रियस्य प्रकीर्तितम्। व्यवस्थितं **च** तत्रैव। क्षत्रियो निर्गुणोऽधितं ब्राह्मणं वेदपारगम्। निहत्य कामतो वीरः लक्ष्यं शस्त्रभृतां भवेत्। चतुर्वेदविदं वीरः ब्राह्मणं चाग्निहोत्रिणम्। निहत्य कामतोऽऽत्मानं क्षिपेदग्नाववाक्शिराः। निर्गुणं ब्राह्मणं हत्वा कामतो गुणवानह। यजेत चाश्वमेधेन क्षत्रियो यो महीपतिः ॥ ७२ ॥

(५) **नन्दनः**। द्वादशाब्दव्रताशक्तौ कर्तव्यमाह **लक्ष्यं शस्त्रभृतां वा स्यादिति**। आत्मन इच्छया स्वया स्वमिच्छति चेत् **विदुषां** धनुर्वेदभृताम् ॥ ७२ ॥

(६) **रामचन्द्रः**। विदुषां अयं ब्रह्महेति जानतां शस्त्रभृतां इच्छया लक्ष्यं वेध्यं स्यात् **प्रास्येत्** क्षिपेत् **त्रिः** त्रीन् वारान् क्षत्रियः **अवाक्शिराः**। ॥ ७२ ॥

(८) **गोविन्दराजः**। **लक्ष्यमिति**। धनुः शराद्यायुधधारिणां युध्यमानानां प्रायश्चित्य गममित्येवं विजानतः स्वेच्छया लक्ष्यभूतो वा तिष्ठेद्यावत्मृतो मृतकल्पो वा स संग्रामे च हतो लक्ष्यभूतः शुद्धिमाप्नुयात्। प्रहारार्त्तो जीवन्नपि विशुध्यतीति याज्ञवल्क्यदर्शनात्। अग्नौ वा प्रदीप्तोऽधोमुखस्त्रीन् वारान् शरीरं प्रक्षिपेत्तथा प्रास्येद्यथा म्रियेतेत्यापस्तम्बस्मरणादेवं क्षिपेत् ॥ ७२ ॥

**यजेत वाऽश्वमेधेन स्वर्जिता गोसवेन वा ॥**
**अभिजिद्विश्वजिद्भ्यां वा त्रिवृताग्निष्टुताऽपि वा ॥ ७३ ॥**

(१) **मेधातिथिः**। जनपदेश्वरस्याश्वमेधेऽधिकारः। तत्र हिरण्यादि प्राच्यादिदिग्भ्यः आहृतं द्रव्यं दक्षिणा विहिता। ये चानाहिताग्नयस्ते न यागेष्वधिक्रियन्ते। न पुनस्तदर्थमेवाधानं कर्तव्यम्। कर्माणि हि प्रायश्चित्तार्थानि सांगानि। न चांगभाधानम् ॥ ७३ ॥

(२) **सर्वज्ञनारायणः**। क्षत्रियस्य राज्ञो बुद्धिपूर्वकं अनपकृष्टवृत्तेः ब्राह्मणहननेऽश्वमेधः। ब्राह्मण (ब्रुव) हनने तु **स्वर्जिदा**न्यतरयज्ञानुष्ठानम्। तत्रैव विषये चतुर्णामपि वर्णानाम्। स्वर्जिन्नाम यागविशेषः। अभिजिद्विश्वजिद्भ्यामभिजिता विश्वजिता

वेत्यर्थः। **त्रिवृता** त्रिवत्स्तोमेन। **अग्निष्टोमेना**ग्निष्टुन्नाम्ना। अत्रापि व्यापारतारत-म्याद्यपेक्षया बहुप्रयोगाल्पप्रयोगयज्ञविकल्पो द्रष्टव्यः ॥ ७३ ॥

**(३) कुल्लूकः।** यजेत वाश्वमेधेनेत्यनन्तरं व्याख्यातं **स्वर्जिता** यागविशेषेण **गोसवेन** वाऽभिजिता विश्वजिता वा त्रिवृताऽग्निष्टुता वा याजयेत् एतानि चाज्ञानतो ब्रह्मवधे प्राय-श्चित्तानि त्रैवर्णिकस्य विकल्पतानि। तदुक्तं भविष्य**पुराणे**। स्वर्जितादेश्च यद्वीरकर्मणां पृतनापते। अनुष्ठानं द्विजातीनां वधे ह्यमतिपूर्वके ॥ ७३ ॥

**(४) राघवानन्दः।** त्रैवर्णिकस्याज्ञानतः ब्राह्मणवधे साधारणमाह स्वर्जितेति पाद-न्यूनेन। **स्वर्जिता** बलवता गोसवेन। स्वर्जितादेश्च षट्वीरकर्मणः पृतनायते। अनुष्ठानं द्विजातीनां वधे त्वमतिपूर्वकः' इति भविष्योक्तेः। त्रिवताग्निष्टुतेति अग्निष्टोमस्य विकृति-रेकाहोऽग्निष्टुत् स च। पृष्ठस्तोत्र त्रिवृद्युक्तत्वात्त्रिवृदिति कथ्यते। एतानि विकल्पितानि शक्त्यपेक्षया व्यवस्थितानि वा ॥ ७३ ॥

**(५) नन्दनः।** षडेते क्रतवः पापगौरवलाघवानुसारेण व्यवस्थापनीयाः एवमुत्तरे-ष्वपि विकल्पेषु कल्पनीयम् ॥ ७३ ॥

**(७) मणिरामः।** अन्यान्यपि प्रायश्चित्तान्याह **यजेतेति। स्वर्जिता यागविशेषेण। अभियोजिता** विश्वजिता **त्रिवृता** अग्निष्टुता वा यागेन यजेत्। एतानि **चाऽज्ञानतो** ब्रह्मवधे प्रायश्चित्तानि त्रैवर्णिकस्य विकल्पितानि। तदुक्तं **भविष्यपुराणे** स्वर्जितादेश्च यद्वीरकर्मणां पृतनापतेः। अनुष्ठानं द्विजातीनां वधे ह्यमतिपूर्वके' इति। असति पूर्वके वधे अज्ञातवधे कृते ॥ ७३ ॥

**(८) गोविन्दराजः। यजेतेति।** अश्वमेधाख्यं वा क्रतुं कुर्यादत्र च सार्वभौमस्य-राज्ञ आहिताग्नेरधिकारो न तु प्रायश्चित्तार्थमाधानं कार्यमभिजिद्विश्वजितौ प्रायश्चित्त-द्वयं **त्रिवृता** त्रिवृत्स्तोमेनाग्निष्टुता त्रिवृदिति न चोच्यन्ते स्तोमः स्तोत्रसमूहः ॥ ७३ ॥

**जपन्वान्यतमं वेदं योजनानां शतं व्रजेत् ॥**
**ब्रह्महत्यापनोदाय मितभुङ्नियतेन्द्रियः ॥ ७४ ॥**

**(१) मेधातिथिः। मितभुग्**यावता न तृप्यति। **नियतेन्द्रियो** ब्रह्मचारी विषये-ष्वगृध्नुः ॥ ७४ ॥

**(२) सर्वज्ञनारायणः।** ब्राह्मणस्य ब्राह्मणब्रुवहननेऽकामकृते ॥ ७४ ॥

**(३) कुल्लूकः।** वेदानां मध्यादेकं वेदं जपन्स्वल्पाहारः संयतेन्द्रियो ब्रह्महत्यापाप-निर्हरणाय योजनानां शतं गच्छेदेतदप्यज्ञानकृते जातिमात्रब्राह्मणवधे त्रैवर्णिकस्य प्रायश्चित्तम्। तथा च भविष्यपुराणेऽयमेव श्लोकः पठितो व्याख्यातश्च। जातिमात्रं यदा विप्रं हन्याद-मतिपूर्वकम्। वेदविच्चाग्निहोत्री च तदा तस्य भवेदिदम् ॥ ७४ ॥

**(४) राघवानन्दः।** जातिमात्रब्राह्मणवधेप्याह **जपन्निति**। तथा च **यमः**। जाति मात्रं यदा विप्रं हन्यादमतिपूर्वकम्। वेदविदग्निहोत्री च तदा तस्य भवेदिदम्। जपन्वा-न्यतमं वेदं योजनानां शतं व्रजेत्। ब्रह्महत्यावनोदाय मितभुङ्नियतेन्द्रिय' इति ॥ ७४ ॥

(७) **मणिरामः । अन्यतमं वेदं** वेदानां मध्यादेकं वेदं एतदप्यज्ञानतोऽतिमात्र ब्राह्मण-वधे त्रैवर्णिकानां ज्ञेयम् । तथा चोक्तं भविष्यपुराणे । जातिमात्रं यदा विप्रं हन्यादमति-पूर्वकम् । वेदविच्चाग्निहोत्री च तदा तस्य भवेदिदमिति ।। ७४ ।।

(८) **गोविन्दराजः । जपन्निति ।** वेदानां मध्याद्द्वावेकं वेदं जप्यं अल्पहारः संयते-न्द्रियः ब्रह्महत्यानिर्हरणाय योजनशतं गच्छेत् ।। ७४ ।।

**सर्वस्वं वेदविदुषे ब्राह्मणयोपपादयेत् ।।**
**धनं हि जीवनायालं गृहं दासःपरिच्छदम् ।। ७५ ।।**

(१) **मेधातिथिः ।** यावत्किंचिद्गोहिरण्यादिकं तत्सर्वं दातव्यम् । अत्रार्थवादो **धनं हि जीवनायालमिति ।** तावता धनेन दत्तेनान्यस्मै जीवितं दत्तं भवतीत्येव साम्यम् । **गृहं वासःपरिच्छदम् ।** परिच्छदशब्देन यावत्किंचिद्गृहोपकरणं सर्पिस्तैलधान्यादि कुण्डकटाहादि कुप्यशयनासनादि तत्सर्वं गृह्यते ।। ७५ ।।

(२) **सर्वज्ञनारायणः । सर्वस्वं** सहस्राद्दूर्ध्वम् । धनं वा जीवनायालमिति निमित्त-मात्रेण जीवनाय सत्कुटुम्बस्य द्विजस्य । गृहं वेत्यत्यल्पवित्ततायाम् । सपरिच्छदं **परिच्छदः** उल्लेखनादिः ।। ७५ ।।

(३) **कुल्लूकः ।** सर्वस्वं वा वेदविदे ब्राह्मणाय दद्यात् यावद्धनं जीवनाय समर्थं गृहं वा गृहोपयोगि धनधान्यादि युतमतः सर्वस्वं वा गृहवासःपरिच्छदं दद्यात् । **जीवनायालमिति** वचनाज्जीवनपर्याप्तं सर्वस्वं गृहं वा दद्यान्न ततोऽल्पं एतच्चाज्ञानतो जातिमात्रब्राह्मणवधे ब्राह्मणस्य प्रायश्चित्तम् । तथा च भविष्यपुराणम् । जातिमात्रं यदा हन्याद्ब्राह्मणं ब्राह्मणो गुह वेदाभ्यासविहीनो वै धनवानग्निवर्जितः । प्रायश्चित्तं तदा कुर्यादिदं पापविशुद्धये । धनं वा जीवनायालं गृहं वासःपरिच्छदम् ।। ७५ ।।

(४) **राघवानन्दः ।** ब्राह्मणस्यैव जातिमात्रस्याज्ञानतः तद्वधेऽप्याह **सर्वस्वमिति ।** अलं जीवनपर्यन्तस्थायि । तथोक्तं भविष्ये । जातिमात्रं यदा हन्यात् ब्राह्मणो ब्राह्मणं गुह । वेदाभ्यासविहीनो वै धनवानग्निवर्जितः । प्रायश्चित्तं तदा कुर्यादिदं पापविशुद्धये । धनं वा जीवनायालं गृहं वासःपरिच्छदे सर्वस्वं वा वेदविदे ब्राह्मणायोपपायेदिति ।। ७५ ।।

(५) **नन्दनः । उपपादयेत्** दद्यात् ।। ७५ ।।

(६) **रामचन्द्रः । जीवनायालं** धनं जीवनपर्याप्तम् ।। ७५ ।।

(७) **मणिरामः । जीवनायालं** यावज्जीवनाय समर्थं सपरिच्छदं गृहोपयोगिधन-धान्यादि युतम् ।। ७५ ।।

(८) **गोविन्दराजः । सर्वस्वमिति ।** सर्वस्वं वा वेदज्ञाय ब्राह्मणाय दद्यायस्माद्धनं जीवनाय समर्थं गृहे वा गृहोपयोगि । धनधान्यादियुक्तं यतः सर्वस्वं वा गृहं परिच्छदं दद्यात् । **जीवनायालमिति** वचनाज्जीवनपर्याप्तं सर्वस्वं दद्यात् **नातोऽर्वाक्** ।। ७५ ।।

**हविष्यभुग्वाऽनुसरेत् प्रतिस्रोतः सरस्वतीम् ।।**
**जपेद्वा नियताहारस्त्रिर्वै वेदस्य संहिताम् ।। ७६ ।।**

(१) **मेधातिथिः ।** **हविष्यं** मुन्यन्नं नीवारादि ग्राम्यमपि पयोघृतादि । **प्रतिस्रोतः** स्रोतः स्रोतः प्रति यानन्ति सरस्वत्याः स्रोतांसि तावन्त्यनुसरेत् । **नियताहार** आहारनिवृत्ति कृत्वा । **वेदसंहितां** समन्त्रब्राह्मणकाम् । त्रिरावर्तेत । एतेषा प्रायश्चित्तानामियमत्र व्यवस्था । बुद्धिपूर्वेण ब्राह्मणमात्रवधे द्वादशवार्षिकं 'लक्ष्यं शस्त्रभृता'मनेन विकल्प्यते यद्यपि द्वादशवार्षिके न मरणान्तं तथापि दैवोपपत्तिपतितेऽन्तरामरणे सामिकृते प्रायश्चित्ते शुद्ध्यभावात् प्रत्यवायो न निवर्तते । द्वितीये तु तदानीमेव निर्मुक्तपापः । शस्त्रहतो वा कदाचिन्न म्रियेत । अत एव आद्योपात्तप्रायश्चित्तमिच्छया विकल्पेन दातव्यम् । अग्नौ प्रवेशस्तु श्रोत्रियत्वादिगुणयुक्ते । तत्रापि सवनगुणेऽग्नौ । सन्ति ब्रह्मघ्नस्त्रिरवस्था-स्तस्यावसानं शस्त्रेण गात्राणां खण्डशो विदारणं सवनगत इति पठन्ति । न च प्राणान्तिकेषु द्वैगुण्यसंभवः । न ह्येकस्मिन् जन्मनि द्विर्मरणोपपत्तिः । तत्तुल्यपीडानुभवात्तस्य द्वैगुण्यम् । न च द्वादशवार्षिकं द्विगुणं युक्तम् । को हि देवसमश्चतुर्विंशतिवर्षाणि प्रायश्चित्तं चरेत् । संवत्सरशेषे हि मृतस्य सर्वं निष्फलं स्यात् । अश्वमेधयागस्तु त्रैवर्णिकानां सति संभवे पुर्वोक्तैर्विकल्प्यते । गोसवादयस्त्वबुद्धिपूर्वं महागुणवति हन्तरि स्युः । योजनशतं बुद्ध्या च ब्राह्मणजातीयमात्रवधे । एवमुत्तराण्यपि । त्रिवृताग्निष्टुतेति समानाधिकरणे । एवं स्वर्जिता गोसवेनेति अभिजिद्विश्वजितौ द्वे प्रायश्चित्ते ।। ७६ ।।

(२) **सर्वज्ञनारायणः ।** **हविष्यभुग्वेति** सर्वस्वदानेन विकल्पितम् । **प्रतिस्रोतः** प्रभासमारभ्य प्लक्षस्रवणान्तं यत्रयत्र सरस्वती तत्रतत्र स्रोतो लक्षीकृत्य तीरेण गमनम् । **जपेद्वेति** ब्राह्मणहत्यायाम् । **संहितां** मन्त्रभागमेकस्य वेदस्य ।। ७६ ।।

(३) **कुल्लूकः ।** नीवारादिहविष्यान्नभोजी विख्यातप्रसरणादारभ्यापश्चिमोदधेः स्रोतः प्रतिसरस्वतीं यायात् । एतच्च जातिमात्रब्राह्मणवधे ज्ञानपूर्वके । तथा भविष्य-पुराणे । जातिमात्रे विप्रे देवेन्द्रमतिपूर्वकम् । हन्ता यदा वेदहीनो धनेन च भवेद्धृतः । तदैतत्कल्पयेत्तस्य प्रायश्चित्तं निबोध मे । हविष्यभुग्चरेद्वापि प्रतिस्रोतः सरस्वतीम् । अथवा परिमिताहारस्त्रीन्वारान्वेदसंहिताम् । संहिताग्रहणात्पदक्रमव्युदासोऽत्रापि भविष्य-पुराणीयो विशेषः । जातिमात्रन्तु यो हन्याद्विप्रं त्वमतिपूर्वकम् । ब्राह्मणोऽत्यन्तगुणवान् तेनेदं परिकल्पयेत् । जपेद्वा नियताहारस्त्रिर्वै वेदस्य संहिताम् । ऋचो यजूंषि सामानि त्रैविद्याख्यं सुरोत्तम ।। ७६ ।।

(४) **राघवानन्दः ।** ज्ञानतो जातिमात्रतद्वधे सगुणस्य निर्गुणस्य वा ब्राह्मणस्याह **हविष्येति** । तथा च भविष्ये । जातिमात्रे हते विप्रे दैवादमतिपूर्वकम् । हन्ता यदा वेदहीनो धनेन च भवेद्गुह । तदा तत्कल्पयेत्तस्य प्रायश्चित्तं निबोध मे । हविष्यभुक् चरेत्तीरे प्रतिस्रोतः सरस्वतीम् । प्रतिस्रोतः समुद्रादि संगममारभ्य प्रतिकूलतया निः-सरणदेशपर्यन्तं गच्छेदिति । जातिमात्रं तु यो हन्यात् विप्रं तु मतिपूर्वकम् । ब्राह्मणोऽ-

त्यन्तगुणवान् तदेतत्परिकल्पयेत्। जपेद्वा नियताहारस्त्रिःकृत्वो वेदसंहिताम्। ऋचो यजूंषि सामानि त्रैविद्याख्यां सुरोत्तमेति ।। ७६ ।।

(५) **नन्दनः। प्रतिस्रोतः** प्रतिस्रोतसम् ।। ७६ ।।

(६) **रामचन्द्रः। प्रतिस्रोतः** सरस्वतीं **अनुसरेत्** गच्छेत् ।। ७६ ।।

(७) **मणिरामः। प्रतिस्रोतः** स्रोतः सरस्वतीं विख्यातप्रसरनादारभ्य पश्चिमादविस्रोतः प्रति सरस्वतीं अनुसरेत्। एतच्च जातिमात्रब्राह्मणवधे ज्ञानपूर्वके। तथा च भविष्ये जातिमात्रे हते विप्रे दैवेद्वं मतिपूर्वकम्। हंता यदा वेदहीनो धनेन च भवेद्युतः। तदैतत्वाल्पयेत्तस्य प्रायश्चित्तं निबोध मे। हविष्यभुक् चरेद्वापि प्रतिस्रोतः सरस्वतीं अथवा परिमिताहारस्त्रीन् वारान् वेदसंहितामिति ।। ७६ ।।

(८) **गोविन्दराजः। हविष्यभुगिति।** नीवारादि हविष्यान्नभोजी विख्यातप्रस्रवणादारभ्य पश्चिमोदधेः स्रोतः स्रोतः प्रति सरस्वतीं आर्यः दिवा परिमितभुक् त्रीन्वारान्वेदसंहितां जपेदेवमेतानि त्रयोदशप्रायश्चित्तानि। जातिशक्तिगुणोपेक्षं सकृद्बुद्धिकृतं तथा। अनुबन्धादि विज्ञानं प्रायश्चित्तं विनिर्दिशेत्। इति देवलस्मरणात् कर्तृजातिशक्तिगुणानुबन्धाद्यपेक्षया हन्यमानगुणापेक्षया वा व्यवस्थितविषयाणि कल्पनीयानि न तु विकल्पानि गुरुणामानर्थक्यप्रसङ्गात्। सर्वेषां सर्वत्रानधिकारा इह समानजातीय एकनिमित्तोपनिपातमेकमेव मन्त्रेण प्रायश्चित्तमिच्छन्ति तदसत्। एनसि च लघूनि गुरूणि चेति गौतमस्मरणात्। शूद्रहत्याव्रतं चरेदिति वेददर्शनात्। विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं प्रोक्तं चतुर्थे नास्ति मंत्रेण निष्कृतिः ।। ७६ ।।

(९) **भारुचिः।** त्रयोदश ब्राह्मणहत्याप्रायश्चित्तानि सामर्थ्याद् यथाधिकारं चतुर्णामपि वर्णानां विकल्पतो विज्ञेयानि। येन साक्षादत्र विकल्पः श्रूयते "वा"–शब्दाश्रयः। असामर्थ्यादप्ययं समुच्चयासंभवे विकल्पः। स्वकाभिप्रायणस्य श्रुतिप्रतिषिद्धस्यापि प्रायश्चित्तादन्यत्र सामर्थ्यम्। इदानीं द्वादशवार्षिकप्रायश्चित्तस्य गुणविध्यार्थमारभते ।। ७६ ।।

**कृतवापनो निवसेद्ग्रामांते गोव्रजेऽपि वा ।।**
**आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः ।। ७७ ।।**

(१) **मेधातिथिः।** द्वादशवार्षिकस्यायं विशेषः कश्चिद्वैकल्पिकधर्म उपदिश्यते। वपनं अपूर्वम्। आश्रमवृक्षमूले वैकल्पिकमेव वा कुटी स्यात्। "किमर्थं पुनस्तत्रैव नोक्तम्।" प्रक्रान्तद्वादशवार्षिकस्य वक्ष्यमाणं यथा स्यात् पृथक् प्रायश्चित्तं मा भूदिति पूर्वैर्व्याख्यातम्। स्वतन्त्रं ह्यन्यस्मिन् प्रक्रान्तेऽन्यत्र प्राप्नोति, प्रक्रान्तासमाप्तौ दोषश्रवणात्। पृथगधिकारात्पृथक्प्रयोगता। अन्यस्यान्यतरप्रयोगः ।। ७७ ।।

(२) **सर्वज्ञनारायणः।** प्रायश्चित्तव्रतेषु साधारणं धर्ममाह **कृतवापनो निवसेदिति। ग्रामान्ते** ग्रामाद्बहिः ।। ७७ ।।

(३) **कुल्लूकः।** इदानीं समाप्ते द्वादशवर्षे इत्युपदेशाद्द्वादशवार्षिकस्य विशेषमाह।

लूनकेशनखश्मश्रुर्गोब्राह्मणहिते रतः। गोब्राह्मणोपकारान्कुर्वन्ग्रामसमीपे गोष्ठपुण्य-देशवृक्षमूलान्यतमे निवसेत् वने कुटीं कृत्वेत्यस्य विकल्पार्थमिदम् ।। ७७ ।।

(४) **राघवानन्दः**। द्वादशवार्षिकस्य विशेषानाह **कृतवापन** इति चतुर्भिः। **कृतवापनो** लूनकेशश्मश्रुरित्यपूर्वविधिः। कृतवापस्थितिरिति कुत्रचिदर्थः। स एव स्वाश्रमे **पुण्ये** कुटीं कृत्वा वने वसेदित्यस्योपलक्षणार्थत्वात् ।। ७७ ।।

(५) **नन्दनः**। मतान्तरमाह **कृतवापनो निवसेदिति**। **कृतवापनो** व्युप्तकेशश्मश्रुः **ग्रामान्ते** ग्रामसमीपे ।। ७७ ।।

(६) **रामचन्द्रः**। **कृतवापनः** मुण्डः ।। ७७ ।।

(७) **मणिरामः**। द्वादशवार्षिकस्य विशेषमाह **कृतवाप** इति। **कृतवापनः** लून-केशनखश्मश्रुः। **ग्रामांते** ग्रामसमीपे **गोव्रजे** गोष्ठे कुटीं कृत्वेत्यस्य विकल्पार्थमिदं **ज्ञेयम्**। मुच्यते जीवन्नपि ।। ७७ ।।

(८) **गोविन्दराजः**। इदानीं समाप्ते द्वादशे वर्ष इत्युपसंहाराद्द्वादशवर्षस्येमं गुण-विधिमाह **कृतवापन इति**। लूनकेशश्मश्रुरोमाङ्गो ब्राह्मण उपकारान् कुर्वन् ग्रामसमीपे गोष्ठपुण्यदेशे वृक्षमूलानामन्यतमस्मिन् पूर्वोक्तवनकुटीं वैकल्पिको निवसेत् ।। ७७ ।।

(९) **भारुचिः**। "ब्रह्महा द्वादशाब्दानि कुटिं कृत्वा वने वसेदि"त्येवमादिना यदुक्तं तस्य वैकल्पिकाः केचिदत्रोपदिश्यन्ते धर्माः केचिदपूर्वा एव। **गोब्राह्मणहिते रत** अस्य चानन्तरोक्तस्य गुणविधिरर्थवादः ।। ७७ ।।

**ब्राह्मणार्थे गवार्थे वा सम्यक् प्राणान्परित्यजेत् ।।**
**मुच्यते ब्रह्महत्याया गोप्ता गोर्ब्राह्मणस्य च ।। ७८ ।।**

(१) **मेधातिथिः**। अपरित्रायापि **सम्यक् प्राण**परित्यागेन मुच्यते। परित्राणाया-प्राणत्यागेनापि ।। ७८ ।।

(२) **सर्वज्ञनारायणः**। अत्र प्रारब्धव्रतस्यासमाप्तेऽपि व्रते येन कर्मणा पापक्षयस्तदाह **ब्राह्मणार्थं** इति **ब्राह्मणार्थे** ब्राह्मणस्य प्राणरक्षार्थम्। एवं **गवार्थे**। सद्यो मुच्यत इत्यन्वयः। एतच्च तत्प्राणरक्षोद्देशेन मरणे प्राणरक्षायामसिद्धायामपि तथा तत्प्राणरक्षणेनामृतस्यापि शुद्धिरित्याह गोप्तेति ।। ७८ ।।

(३) **कुल्लूकः**। प्रक्रान्ते द्वादशवार्षिकेऽन्तराग्न्युदकहिंसकाद्याक्रान्तब्राह्मणस्य गोर्वा परित्राणार्थं प्राणान्परित्यजन्ब्रह्महत्याया मुच्यते गो ब्राह्मणं वा ततः परित्रायामृतोऽ-प्यसमाप्तद्वादशवर्षोपि मुच्यते ।। ७८ ।।

(४) **राघवानन्दः**। आरब्धद्वादशवार्षिकस्य विकल्पमाह **ब्राह्मणार्थ** इति द्वाभ्याम्। ब्राह्मणार्थं इति अग्न्युदकहिंसाद्याक्रान्तयोर्गोब्राह्मणयोः कृते मरणेन तयोरक्षणेन वा व्यापृतो विमुच्यते ।। ७८ ।।

(५) **नन्दनः।** परित्यक्तप्राणो रिक्तप्राणोऽपि वा गोब्राह्मणगोप्ता ब्रह्महत्याया मुच्यते ॥ ७८ ॥

(७) **मणिरामः।** द्वादशवर्षमध्येऽपि अग्न्यादिना नाशोपस्थितस्य ब्राह्मणस्य गोर्वा गोप्ता रक्षको भूत्वा ब्राह्मणार्थे गवार्थे वा प्राणान् परित्यजन् अपूर्णेऽपि द्वादशे वर्षे ब्रह्महत्यायाः पापात् मुच्यते ॥ ७८ ॥

(८) **गोविन्दराजः। गवार्थ इति।** प्रकान्ते द्वादशे वर्षे राजचौराग्न्युदकाद्याक्रान्त-ब्राह्मणपरित्राणार्थं गोर्वोद्धरणार्थं निर्विकल्पं प्राणान् परित्यजन् ब्रह्महत्याया मुच्यते। ब्राह्मणं वा ततः परित्राय मृतोऽपि मुच्यते ॥ ७८ ॥

(९) **भारुचिः।** विनाशवत् स्थितयर्थः। एतच्च प्रकान्तद्वादशवार्षिकप्रायश्चित्तस्योप-दिश्यते। तथा च गोब्राह्मणपरित्राण्यासमाप्तकालोऽपि मरणाच्छुध्यति। एवं परित्राण्यामृतोऽपि शुद्ध्यतीत्यर्थः। एवं च नेदं प्रायश्चित्तान्तरं, किं तर्ह्यस्यैव गुणविधिः। यदि ह्येतत् प्राय-श्चित्तान्तरं स्यात्, तेन वैकल्पिकत्वादेतेषां प्रक्रान्तद्वादशवार्षिकप्रायश्चित्तोऽनेन नाधि-क्रियते। येन वैकल्पिकेष्वेकस्मिन् प्रायश्चित्तेऽधिकृतो न प्रायश्चित्तान्तरेणाधिक्रियते, वैकल्पिकत्वादेव। इतरथा हि समुच्चयः स्यात्। एवं च विकल्पेऽस्य साक्षाच्छ्रवणमुपरुध्यते। न चायं न्याय्यः। श्रुतार्थहानिरश्रुतकल्पना च। तस्माद् यथोक्त एवार्थः ॥ ७८ ॥

**त्र्यवरं प्रतिरोद्धा वा सर्वस्वमवजित्य वा ॥**
**विप्रस्य तन्निमित्ते वा प्राणालाभेऽपि मुच्यते ॥ ७९ ॥**

(१) **मेधातिथिः। प्रतिरोद्धा** प्रवृत्तः शस्त्रेण क्षतो वा युद्धकरणे। **त्र्यवरम्।** यदि न्यूनं तदा तिस्र आवृत्तयः। कृते युद्धेऽसौ मुच्यते, अपरित्राय मृतोऽपि। **सर्वस्वमवजित्येति** ब्राह्मणादीनां चौरापहृतं यदि प्रत्यानयति, तदा मुच्यते। ब्राह्मणस्य वा **तन्निमित्ते** प्राणदाने। "ननु चोक्तं 'गोप्ता गोब्राह्मणस्ये'ति"। सत्यम्। युद्धेनान्येन वा शरीर-व्यापारेण गां पङ्कलग्नां दस्युभिर्वोह्यमानां ब्राह्मणं शत्रुभिश्चौरैर्नद्या वाऽपह्रियमाणं यदि मोक्षयति ततः शुध्यतीत्युक्तम्। इह तु तन्निमित्तग्रहणाद्यदि धनेऽपह्रियमाणे ब्राह्मणो व्यामूढतयाऽऽत्मानं हन्ति। निरपेक्षं वा चोरैर्युध्यते तत्र तत्समधनदानेन 'मा मृथा अहं त इयद्धनं ददामी'ति तमाश्वास्य दत्वा मुच्यते ॥ ७९ ॥

(२) **सर्वज्ञनारायणः।** प्रकारान्तरमाह **त्र्यवरमिति।** त्रयोऽवरा यत्र **तत्त्र्यवरं** बहून्वारानित्यर्थः। **प्रतिरोद्धा** गोब्राह्मणरक्षार्थं कृतवैशसोऽशक्ततयाऽकृतरक्षो जीवन्नपि मुच्यते। **सर्वस्वमिति।** तथा ब्राह्मणसर्वस्वं चौरैर्ह्रियमाणमवजित्यानीय ब्राह्मणाय दत्वा। विप्रस्य सर्वस्वमित्यन्वयः। **तन्निमित्ते** विप्रसर्वस्वनिमित्ते **प्राणालाभे** मरणे वित्ताप्राप्तावपि मुच्यते असमाप्तव्रतोऽपि निष्पापो भवतीत्यर्थः ॥ ७९ ॥

(३) **कुल्लूकः।** स्तेनादिभिर्ब्राह्मणसर्वस्वेऽपह्रियमाणे तदानयनार्थं निर्व्याजं यथा-शक्तिः प्रयत्नं कुर्वन् तत्र त्रिवारान्युद्धे प्रवर्त्तमानो नानीतेऽपि सर्वस्वे ब्रह्महत्यापापात्प्रमुच्यते अथवा प्रथमवार एव विप्रसर्वस्वमपहृतं जित्वाऽर्पयति तथापि मुच्यते यद्वा धनापहारकत्वेन

स्वेनैव ब्राह्मणो युद्धेन मरणे प्रवर्तते तदा यद्यप्यपहृतसमधनदानेन तं जीवयति तदापि तन्निमित्ते तस्य प्राणलाभे ब्रह्महत्यापापान्मुच्यते एतदितरप्रकारान्तरेण तु रक्षणे गोप्ता गोब्राह्मणस्य चैत्यपुनरुक्तिः ।। ७९ ।।

(४) **राघवानन्दः । त्र्यवरमिति ।** विप्रस्य तं त्रयोऽवरा निकृष्टा यस्मात्समुदायात्तं ब्राह्मणान् चतुरःपञ्च वा। सर्वमक्षीणं स्वं यस्य तं **अवजित्य** दस्युभ्यः **प्रतियोद्धा** रक्षिता **च** । पुनस्तेभ्यः तन्निमित्ते तादृशनिमित्तेऽपि प्राणलाभे जीवति सति मुच्यते ब्रह्महत्यात इति । **तन्निमित्ते** धननिमित्ते मरणोद्यतस्य धनदानेन रक्षणान्मुच्यत इति मेधातिथिः । पूर्वत्र जीवरक्षणमत्र तु धनरक्षणमिति भेदः । तथा **च** याज्ञवल्क्यः । ब्राह्मणस्य परित्राणाद्गवां द्वादशकस्य वा । दीर्घतीव्रामयग्रस्तं ब्राह्मणं गामथापि वा । दृष्ट्वा पथि निरातङ्कं कृत्वा वा ब्राह्महा शुचिः । आनीय तस्य सर्वस्वं हृतं घातित एव वा । तन्निमित्तं क्षतः शस्त्रैर्जीवन्नपि विशुध्यति ।। ७९ ।।

(५) **नन्दनः ।** विप्रस्य परं प्रतिरोधः विप्रस्यापहृतं धनं त्रिःप्रत्याहृत्य वा सर्वस्वमपि जित्य विप्रस्यापहृतं सर्वस्वं सकृदप्यपहर्तॄन् जित्वा प्रत्याहृत्य विप्रस्य **तन्निमित्ते** प्रायश्चित्तनिमित्ते **प्राणलाभे** विप्रस्य व्याघ्रचोरादिभ्यः प्राप्तं वधं परिहृत्येत्यर्थः मुच्यते ब्रह्महत्याया इत्येव ।। ७९ ।।

(६) **रामचन्द्रः । त्र्यवरं** बहुवारम् । प्रतिरोधो वा मरणे गोब्राह्मणरक्षणम् । **सर्वस्वं अवजित्य** आनीय ब्राह्मणाय दत्वा वा । तन्निमित्ते प्राणलाभे कृतवैशसः सर्वस्वनिमित्ते प्राणालाभे मरणे धनाप्राप्तावपि मुच्यते ।। ७९ ।।

(८) **गोविन्दराजः । त्र्यवरमिति ।** स्तेनादिभिर्ब्राह्मणसर्वस्वेऽपह्रियमाणे तदुपजिगीषार्थे यद्यत्यन्तान्यूनस्तदा त्रीन्वारान्निरूद्धयुद्धे प्रवर्तमानेनाहृत सर्वोऽपि मुच्यते । सर्वस्वं वा विजित्य अर्वागपि त्रिः प्रवृत्ते मुच्यते । ब्राह्मणस्य वा प्राणपरित्यागात् प्रकारान्तरेणापि यदि तद्धेतुकः प्राणलाभो भवति तदपि मुच्यते ।। ७९ ।।

(९) **भारुचिः ।** ब्राह्मणद्रव्यापहरणे तत्प्रतिमोचनाय। अमोचने न मुच्यते इत्यर्थः । निरुपवधं प्रवर्तमानः । अप्रतिरोधापि **त्र्यवरं** प्रथम एव ब्राह्मणस्वापहरणप्रतिमोचनार्थे प्रयोगे । इत्येतदुक्तार्थः ।। ७९ ।।

**एवं दृढव्रतो नित्यं ब्रह्मचारी समाहितः ।।**
**समाप्ते द्वादशे वर्षे ब्रह्महत्यां व्यपोहति ।। ८० ।।**

(१) **मेधातिथिः ।** अस्माद्वचनादाद्यशेषमुत्क्रान्तं विज्ञायते । **दृढव्रत इति समाहित** इति च पादपूरणे पदे । उपसंहारोऽयं पूर्वस्य ।। ८० ।।

(२) **सर्वज्ञनारायणः ।** यदा तु व्रतनिमित्तहेतुः ब्राह्मणरक्षादि न कृतं तदाह **एवमिति । दृढव्रतः** स्मृत्यन्तरसिद्धसर्वनियमकारी । **समाहित** इष्टदेवतादि स्मरणवान् ।। ८० ।।

(३) **कुल्लूकः । एवमुक्तप्रकारेण** सर्वदा नियमोपहितः स्त्रीसंयोगादिशून्यः संयतमनाः समाप्ते द्वादशे वर्षे ब्रह्महत्यापापं नाशयति एवं ब्राह्मणार्थे इत्यादि सर्वप्रक्रान्तद्वादशवार्षिकस्य बोद्धव्यम् ।। ८० ।।

(४) **राघवानन्दः।** उपसंहरति **एवमिति।** हृढव्रतः आस्तिक्यबुद्ध्या अचाल्यव्रतः। द्वादशवार्षिकस्योपसंहारदर्शनान्मध्येष्वपि पठ्यमानाः पक्षा एतस्यैव विकल्परूपाः षोडशी-ग्रहणवदिति तथा च जैमिनिसूत्रम्। प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मा-त्सर्वेषु निर्घात्यः। प्रायश्चित्तेषु मध्ये एकैकशस्तस्य निष्पन्नेन पापेन निवर्तकतया संबन्धः। कुतः ऐकार्थ्यात् एकार्थास्तु विकल्पेरन्निति न्यायादेकेन प्रायश्चित्तेनैकस्य पापस्य निरस्यतया अपराकांक्षाविरहात् अन्यथाऽप्रवृत्तेरिति सूत्रार्थः। अत एव। व्रतमध्ये मृगैर्वापि रोगैर्वा विनिषूदितः। गोनिमित्त द्विजार्थं वा प्राणान्वापि परित्यजेत्। यद्वा दद्यात् द्विजेन्द्राय गवामयुतमुत्तमम्। एतेष्वन्यतमं कृत्वा ब्रह्महा शुद्धिमाप्नुयादिति नारदोक्तमपि संगतमिति। अतोऽन्यतममास्थायेति वक्ष्यति। प्राणान्तिकपक्षे तत्पुत्राद्यैस्तदन्त्येष्टिकरणादिकं फलमिति श्लोकतात्पर्यम्॥ ८०॥

(५) **नन्दनः।** कृतवापनो निवसेदित्यारभ्योक्तानां नियमानामन्यतमं निमित्ता-भावादकुर्वतः कियता कालेन ब्रह्महत्याया मोक्ष इत्यपेक्षायामाह **एवं दृढव्रतो नित्यमिति।** एवमिति कृतवापन इत्याद्यारभ्योक्तानां नियमानां परामर्शः **समाहितः** गोब्राह्मणरक्षण एकाग्रचित्तः॥ ८०॥

(८) **गोविन्दराजः। एवमिति।** एवमुक्तनीत्या सर्वदाऽविचलनियमोऽस्त्रीसंप्रयोगः संयतमनाः द्वादशवर्षे समाप्ते ब्रह्महत्यायाः पापमपनुदतीत्येवं च ब्राह्मणार्थे गवार्थे इत्यादि सर्वं प्रकान्तद्वादशवार्षिकस्य वेदितव्यम्॥ ८०॥

**शिष्ट्वा वा भूमिदेवानां नरदेवसमागमे॥**
**स्वमेनोऽवभृथस्नातो हयमेधे विमुच्यते॥ ८१॥**

(१) **मेधातिथिः।** चरमपक्ष उच्यते। **शिष्ट्वा स्वमेन** आत्मीयं दोषम्। **भूमिदेवतानां** ब्राह्मणानां **नरदेवैः** क्षत्रियैः **समागमे।** ऋत्विजो ब्राह्मणाः क्षत्रियो यजमान एवं कृताऽश्वमेधेऽ-**वभृथस्नातो विमुच्यते।** द्वादशवार्षिकस्योपसंहृतत्वात्स्वतन्त्रमिदं वैकल्पिकमिच्छन्ति। अन्य तु वैकल्पिकानां मध्य उपदेशात्प्रकान्तद्वादशवार्षिकस्यैव गोब्राह्मणपरित्राणवत्समाप्त्यवधि-माहुः। यथा सारस्वतेन पक्षं वा प्रस्रवणं प्राप्योत्थानमिति। वयं तु ब्रूमः। उपसंहृतत्वादा-द्यस्य वैकल्पिकमध्ये वा पाठादुभयरूपताऽस्य प्रक्रान्तेऽप्रक्रान्ते च सति संभवे॥ ८१॥

(२) **सर्वज्ञनारायणः। शिष्ट्वा** कथयित्वात्मनः पापम्। **नरदेवैः** राजभिः **भूमिदेवानां** ब्राह्मणानां **समागमे**ऽश्वमेधावभृथे स्नातो मुच्यते ब्रह्महत्यया॥ ८१॥

(३) **कुल्लूकः।** अश्वमेधे ब्राह्मणानामृत्विजां क्षत्रियस्य यजमानस्य समागमेषु ब्रह्म-हत्यापापं शिष्ट्वा निवेद्यावभृथस्नातो ब्रह्महत्यापापान्मुच्यते द्वादशवार्षिकस्योपसंहृतत्वात् स्वतन्त्रमेवेदं प्रायश्चित्तम्। तथा च भविष्यपुराणे॥ यदा तु गुणवान्विप्रो हत्वा विप्रं तु निर्गुणम्॥ अकामतस्तदा गच्छेत्स्नानं चैवाश्वमेधिकम्। गोविंदराजस्तु अश्वमेधविवर्जितसकल-प्रायश्चित्तशेषत अस्य प्रक्रांतद्वादशवार्षिकप्रायश्चित्तस्यांतरावभृथस्नाने तेनैव शुद्धिरित्याह तदयुक्तं भविष्यपुराणवचनविरोधात्॥ ८१॥

**(४) राघवानन्दः।** गुणवतोऽनुमन्तुरनारब्धव्रतस्य वा निर्गुणब्राह्मणवधे स्वतन्त्रं प्रायश्चित्तमाह **शिष्ट्वेति। शिष्ट्वा** निवेद्य स्वमेनः इति शेषः। **भूमिदेवानां** विप्राणां **हयमेधे**ऽश्वमेधयागे तत्रत्यानां नरदेवानां नृपाणां **समागमे** मेलने॥ तथा च भविष्ये॥ यदा च गुणवान्विप्रो हन्याद्विप्रं तु निर्गुणम्॥ अकामतस्तदा गच्छेत्स्नानं चैवाश्वमेधिकमिति॥ ८१॥

**(५) नन्दनः।** स्वमेनः **शिष्ट्वा** विख्याप्य॥ ८१॥

**(६) रामचन्द्रः। शिष्ट्वा** निवेद्य अस्य एनः अवभृथस्नातो हयमेधे विमुच्यते॥ ८१॥

**(८) गोविन्दराजः। शिष्ट्वेति।** अश्वमेधिब्राह्मणानां ऋत्विजां राजसमागमे सत्यात्मीयं ब्रह्महत्यापापं निवेद्यावभृथाख्यकर्माङ्गभूतवरे स्नातो ब्रह्महत्यापापाद्विमुच्यते। इतीदं वैकल्पिकप्रायश्चित्तमध्यानाम्नातस्य तत्रापि द्वादशवार्षिकशेषभूतं तदुपसंहारोत्तरकालमभिधानात्। किं तर्ह्यश्वमेधवर्जितसकलप्रायश्चित्तशेषतास्य न्याय्या। एवं चोपक्रान्तद्वादशवार्षिकादि प्रायश्चित्तस्यान्तरावभृथस्नानापनतौ तेनैव शुद्धिः॥ ८१॥

**(९) भारुचिः।** अश्वमेधावभृथस्य पृथङ्निर्देशोनारब्धान्यप्रायश्चित्तज्ञापनार्थः। इतरथा ह्यश्वमेधावभृथस्याम्नातत्वादारब्धे द्वादशवार्षिके प्रायश्चित्ते तन्मध्येऽवभृथस्नातः शुध्येत। एतस्मात्तु पृथङ्निर्देशादारब्धान्यप्रायश्चित्तस्यैवेदमश्वमेध्यावभृथप्रायश्चित्तं स्वतन्त्रं युक्तम्। न चैतद् वैकल्पिकानामेतस्मात् स्वरूपत इतरेषां तत्कर्तारं प्रत्युपदेशः, येनाङ्गीकृतमन्यद् वैकल्पिकम्। कश्चिदेवमाह—तदयुक्तं, येन नाश्वमेधावभृथस्नानं स्वतन्त्रं, अनुपदेशाद् वैकल्पिकप्रायश्चित्तमध्ये। यतः प्रकरणात् कृतेऽप्युपसंहारे प्रक्रान्तद्वादशवार्षिकप्रायश्चित्तस्यायं गुणविधिः। अथेदं द्वादशवार्षिकं कृतोपसंहारमिति व्यपेक्षा। तथापि सर्वेषां वैकल्पिकानां यथासंभवमिदमश्वमेधावभृथस्नानं गुणतः शुद्धिहेतुत्वान्निवृत्तये। अस्यार्थवादोऽनुष्ठानस्तुत्यर्थः॥ ८१॥

**धर्मस्य ब्राह्मणो मूलमग्रं राजन्य उच्यते॥**
**तस्मात्समागमे तेषामेनो विख्याप्य शुध्यति॥ ८२॥**

**(१) मेधातिथिः।** यजमानर्त्विजां ब्राह्मणक्षत्रियाणामश्वमेधसमागम एनो विख्यापनीयमित्यत्रार्थवादः॥ ८२॥

**(२) सर्वज्ञनारायणः।** अत्रोपपत्तिमाह **धर्मस्येति। मूलं** तदुपदेशेन धर्मप्रवृत्तेः। **अग्रं** राजन्यस्तेनार्तरक्षणेन विस्तार्यते। मूलाग्राभ्यां वृक्षावरोधात्मधर्मविरोधात्कृत्स्नधर्मसंबन्धिजनसंसर्गादधर्मक्षय इत्यर्थः॥ ८२॥

**(३) कुल्लूकः।** यस्माद्ब्राह्मणो धर्मस्य कारणं ब्राह्मणेन धर्मोपदेशे कृते धर्मानुष्ठानाद्राजा तस्याग्रं प्रान्तं मन्वादिभिरुच्यते ताभ्यां ब्राह्मणक्षत्रियाभ्यां समूलाग्रधर्मतरुनिष्पत्तेः तस्मात्तेषां समागमेऽश्वमेधे पापं निवेद्यावभृथस्नातः शुद्ध्यतीत्यस्यैव विशेषः॥ ८२॥

**(४) राघवानन्दः।** एतदेव सोपपत्तिकं द्रढयति **धर्मस्येति। अग्रं** आदिः विप्रो हि धर्ममुपदिशंस्तमुत्पादयति राजा तमनुपालयत्यतस्ताभ्यां धर्मवृक्षस्य समग्रोत्पत्तिः। **एनः** पापं **विख्याप्य** शुध्यति ख्यापनेनानुतापनेनेत्यत्र ख्यापनस्यापि विशुद्धहेतुतोक्तेः॥ ८२॥

(५) **नन्दनः**। विख्यापनस्य प्राधान्यमुपपादयति **धर्मस्य ब्राह्मणो मूलमिति**। **मूलमु**पदेशकत्वात्। अग्रमनुष्ठापकत्वात्॥ ८२॥

(६) **रामचन्द्रः। तेषां** ब्राह्मणक्षत्रियाणां समागमे **एनः** पापं **विख्याप्य** कथयित्वा विशुध्यति॥ ८२॥

(८) **गोविन्दराजः। धर्मस्येति**। यस्माद्धर्मस्य ब्राह्मणः कारणं तदुपदेशे सति तस्यानुष्ठानाद्राजा च तस्य प्रान्तं मन्वादिभिरुच्यते। तस्मिन्सति यस्मात्तत्समाप्तेस्तस्मात् ब्राह्मणराज्ञां समागतेऽश्वमेधे पापं निवेद्यावभृथस्नातः शुध्यति॥ ८२॥

**ब्राह्मणः संभवेनैव देवानामपि दैवतम्॥**
**प्रमाणं चैव लोकस्य ब्रह्मात्रैव हि कारणम्॥ ८३॥**

(१) **मेधातिथिः**। प्रायश्चित्तिना परिषद्गमनं कर्तव्यम्। परिषत्पूज्यस्तु विधिरनुष्ठेयः। सा चैवंरूपा परिषदेवमर्थश्लोकोऽयमुत्तरश्च। उत्पत्त्यैव **ब्राह्मणो देवानामपि** देवो **लोकस्य प्रमाणं** प्रत्ययितः, प्रत्यक्षदर्शनवत्। न तदीयं वचनमपि शङ्कते कश्चित्। **अत्र कारणं ब्रह्म** वेदस्तदर्थज्ञो ह्यदृष्टमुपदर्शयन् प्रमाणीक्रियते॥ ८३॥

(२) **सर्वज्ञनारायणः**। अत्र प्रायश्चित्तज्ञानोपायमाह **ब्राह्मण इति। संभवेनै**वोत्पत्त्यैव संस्कारेष्वनुत्पन्नेष्वपि देवानामपि दैवतमाराध्यः। प्रमाणं चैव लोकस्य धर्मनिश्चये। अत्र हेतुमाह ब्रह्मात्रैव हि कारणमिति। यतः कारणं धर्मनिश्चये ब्रह्मवेदस्तत्रैव नियमेनास्ति तत इत्यर्थः॥ ८३॥

(३) **कुल्लूकः**। ब्राह्मण उत्पत्तिमात्रेणैव किं पुनः श्रुतादिभिर्देवानामपि पूज्यः सुतरां मनुष्याणां लोकस्य च प्रत्यक्षवत्प्रमाणं तदुपदेशस्य प्रामाण्यात् यस्मात्तत्र वेद एव कारणं वेदमूलकत्वादुपदेशस्य यत एवमतः॥ ८३॥

(४) **राघवानन्दः**। ब्राह्मणो धर्मस्य मूलमित्यत्रोपपत्त्यन्तरमाह **ब्राह्मण इति। संभवेनो**त्पत्तिमात्रेणैव। अपिशब्दान्मनुष्याणां सुतरां प्रमाणं तदुपदेशस्यैव धर्मजनकतया प्रमाणत्वात् नेतरे। **ब्रह्म** वेदः अत्रार्थे कारणं प्रमाणम्। ब्राह्मणैरुपदिश्यमान एव धर्मः फलजनक इति॥ ८३॥

(५) **नन्दनः**। निमित्तविशेषेषु प्रायश्चित्तविशेषो ब्राह्मणनिर्णीतः कर्तव्य इति वक्तुं ब्राह्मणस्य वैशिष्ट्यं तावदाह **ब्राह्मणः सम्भवेनेति। दैवतं** ईश्वरत्वार्हः अनेन शक्त्यातिशय उक्तः **प्रमाणं** विश्रंभार्हमनेन ज्ञानातिशयेन ब्राह्मणाब्राह्मण्यमेव कारणं नान्यत्॥ ८३॥

(६) **रामचन्द्रः। ब्राह्मणः संभवेनैव** उत्पत्त्यैव। **ब्रह्म** वेदः। अत्रैव कारणं प्रमाणम्॥ ८३॥

(८) **गोविन्दराजः। ब्राह्मण इति**। ब्राह्मण उत्पत्त्यैव किमुत श्रुतादिभिर्देवानामपि पूज्यः किमुत मनुष्याणां लोकस्य च प्रत्यक्षवत् प्रमाणं यदसावुपदिशति तदनुष्ठेयं यस्माद् ब्राह्मणस्य प्रामाण्ये वेद एव कारणं तस्य वेदार्थोपदेशत्वात्॥ ८३॥

**तेषां वेदविदो ब्रूयुस्त्रयोऽप्येनः सुनिष्कृतिम् ॥**
**सा तेषां पावनाय स्यात्पवित्रं विदुषां हि वाक् ॥ ८४ ॥**

(१) **मेधातिथिः।** परिषद्गमनं प्रायश्चित्तिनोऽनेन कथ्यते। तस्याश्च लक्षणं 'ब्राह्मणा **वेदविदस्त्रयः** परिषदि'ति। "ननु च 'दशावरा वा परिषत्' इति वक्ष्यति। तथा 'एकोऽपि वेदविद्धर्मम्' इति।" न दशसंख्या पुरुषाणामुपदिश्यते किं तर्हि गुणानाम्। तथा 'च त्रैविद्यो हैतुकस्तर्की' इति गुणानामेव निर्देशः। 'एकोऽपि वेदवित्' इत्यनेन चैतत्प्रकटीकरोति हैतुकत्वादिगुणांतराभावेऽपि केवलेनैव वेदेन वेदवित्परिषत्त्वं लभते। अयं तु श्लोकः संख्यानिर्देशार्थः। अत्र यद्यपि वेदविद इत्युपात्तं, हैतुकत्वादयोऽपि गुणा गृह्यन्ते। न ह्यन्यथा वेदवित्त्वं शिष्टपरिच्छलक्षणम्। तत्रैव व्याख्यास्यामः। "यदि वेदवित्त्वं न हैतुकत्वादिना विना भवति, कथं तर्हीदमुक्तम् 'एकोऽपि वेदवित्' इति"। गुणान्तराभावेऽपि वेदवित्परिग्रहार्थमित्येतदपि तत्रैव वक्ष्यामः। अतः प्रायश्चित्तिना त्रयः समुदिताः प्रष्टव्याः। एकस्य कदाचित्प्रमादोऽनवधानं स्यात्। तथैतत्परिषद्गमनं विदुषाऽप्यदृष्टार्थं कर्तव्यमिति। यथा च **पवित्रं विदुषां हि वाक्।** न च रहस्यप्रायश्चित्ताभावप्रसङ्गः। यत्र कस्याप्यविदितं तद्रहस्यम्। विदिते तु परिषद्गमनम्। तथा चोक्तं 'ख्यापनेनानुतापेन' इति– तदेतदयुक्तम् कल्पनाविषयत्वादस्य। 'शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं विकल्पयेदिति' अनुक्तनिष्कृतीनां प्रायश्चित्तं कल्पयेत्। तत्र त्रिभिर्या कल्पना कृता सा प्रमाणयितव्या ॥८४॥

(२) **सर्वज्ञनारायणः।** ततः किमायातमाह **तेषामिति।** त्रयोऽपि अत्यन्तालाभे **तेषां** पापिनां पावनाय प्रायश्चित्तज्ञापनद्वारा। पवित्रं हीति हेतूक्त्या ब्राह्मणैर्बहुभिरुपदिष्टमेव कर्तव्यं नान्यथा पापक्षय इत्यर्थः। पवित्रं पावनी चेति दर्शनात्। स्यामित्यध्याहार्यम्। तेषां वेदविद् इति क्वचित्पाठः ॥ ८४ ॥

(३) **कुल्लूकः। तेषां** विदुषां ब्राह्मणानां मध्ये वेदज्ञास्त्रयोऽपि किमुताधिकाः यत्पापनिर्हरणाय प्रायश्चित्तं ब्रूयुस्तत्पापिनां विशुद्धये भवति यस्माद्विदुषां वाक्पावयित्री ततश्च प्रकाशप्रायश्चित्तार्थं विदुषामपि परिषदवश्यं कार्या रहस्यप्रायश्चित्ते पुनरेतन्नास्ति रहस्यत्वविरोधात् ॥ ८४ ॥

(४) **राघवानन्दः।** एतदेव स्पष्टयति **तेषामिति। तेषां** चतुर्णां वर्णानां एनस्सु जातेषु **निष्कृतिं** प्रायश्चित्तं **ब्रूयुः। सा** निष्कृतिः। अत्र हेतुः **पवित्रमित्यादि। विदुषां** त्रयाणां ब्राह्मणानां वाक् ज्ञानाग्न्यादिवत्पावनीति भावः। धर्मस्येत्यादिश्लोकत्रयं परिषद्गमनस्तुत्यर्थमिति मेधातिथिः ॥ ८४ ॥

(५) **नन्दनः।** ततः किमायातमित्यपेक्षायामाह **तेषां वेदविदो ब्रूयुरिति। वेदविदो** वेदार्थविद**स्तेषां** प्रायश्चित्तानाम् ॥ ८४ ॥

(६) **रामचन्द्रः। तेषां** पापिनां एनःसु निष्कृतिं त्रयो वेदविदो ब्रूयुः। **तेषां** विदुषां **सा** वाक् **पावनाय** पवित्राय **स्यात्** ॥ ८४ ॥

(८) **गोविन्दराजः** । यत एवमतः **तेषामिति** । सा तेषां पावनी यस्मात् पवित्रं विदुषां हि वाक् । ते ब्राह्मणां वेदाज्ञास्त्रयोऽपि किमुताधिकाः सा पापकारिणां शुद्धये स्याद्यस्माद्विदुषां संबन्धिनी वाक् पावयित्र्यतश्च प्रकाशप्रायश्चित्तनिश्चयविदुषां पर्षद्गमनं प्रायश्चित्ताङ्गत यावश्यं कार्यम् । रहस्यप्रायश्चित्ते पुनरेतन्नास्ति रहस्यत्वविनाशप्रसङ्गात् ।। ८४ ।।

(९) **भारुचिः** । वक्ष्यति हि, "दशापरा वा परिषद् यं धर्मं परिकल्पयेत" इत्येवमादि । एवं च सति प्रायश्चित्तपरिषद्ब्राह्मणोपासनात्तैरभ्यनुज्ञातं प्रायश्चित्तं कुर्यात्, जानानोऽपि प्रतिव्यतिक्रमं प्रायश्चित्तमिति केचित् । तदयुक्तम् । एवं हि रहस्यस्य प्रायश्चित्तानुपदेशः प्रसज्येत । येन "रहस्ये रहस्यं प्रकाशे प्रकाशम्" इतीयं स्मृतिः । क्व तर्हीदं यत्पार्थलाभो विज्ञानालाभः । अथवानुक्तप्रायश्चित्तविषयमेतद् विज्ञेयम् । तथा च वक्ष्यति "अनुक्त-निष्कृतीनां तु पापानामपनुत्तये, शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं विकल्पयेत्" इति । अथवा पात्रविशेषादर्थविशेषो धर्माख्योऽनुग्रहात् तेषां यथा, एवमुपघातादप्यधर्मविशेषेण भवितव्यं तद्विशेषादेव । एवं च सत्येतस्मिन् विषय इदमारभ्यते **तेषां वेदविदो ब्रूयुरि**ति । तथा च सति तद्विशेषाद्ब्रह्महत्याप्रायश्चित्तानां गुरुलघुत्वं युक्तम् । इतरथा हि लघुपदेशाद्गुरुणां परिहरणादनुपदेश एव स्यात् । यथा लोके"पणलभ्यं हि न प्राज्ञः क्रीणाति दशभिः पणैः" इत्येवमिहापि स्यात् ।। ८४ ।।

## अतोऽन्यतममास्थाय विधिं विप्रः समाहितः ।।
## ब्रह्महत्याकृतं पापं व्यपोहत्यात्मवत्तया ।। ८५ ।।

(१) **मेधातिथिः** । सर्वेषां ब्रह्महत्याप्रायश्चित्तानामुपसंहारार्थः श्लोकोऽयम् । **विप्र**-ग्रहणं चात्र सर्ववर्णप्रदर्शनार्थम् । **व्यपोहत्य**पहरति । **आत्मवत्तया**ऽऽत्मज्ञानतया । शास्त्रार्थ-कृताभिनिवेश आत्मवानित्युच्यते । तस्यायमध्यवसायो 'न शास्त्रार्थमन्यथा वर्तते' ।। ८५ ।।

(२) **सर्वज्ञनारायणः** । **अन्यतम**मिति तत्तदपनोद्यपापविशेषापेक्षया व्यवस्थितमित्यर्थः । **विधिं** प्रकारम् । विप्रइति प्राधान्यादुक्तं यथोक्तव्यवस्थया तु योज्यम् । **आत्मवत्तया** प्रयत्न-वत्तया ।। ८५ ।।

(३) **कुल्लूकः** । अस्मात्प्रायश्चित्तगणादन्यतमं प्रायश्चित्तं ब्राह्मणादिः संयतमना आश्रित्य प्रशस्तार्थतया ब्रह्महत्याकृतपापमपनुदति । एतच्च ब्रह्मवधादिप्रायश्चित्तविधानं सकृत्पापकरणविषयं पापावृत्तौ त्वावर्तनीयं एनसि गुरुणि गुरुणि लघुनि लघूनीति गौतमस्मर-णात् पूर्णे चानस्यनस्थ्रान्तशूद्रहत्याव्रतं चरेदिति बहुमारणे प्रायश्चित्तबहुत्वस्य वक्ष्यमाण-त्वाच्च ।। विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं स्मृतम् । तृतीये त्रिगुणं प्रोक्तमिति गौतम-स्मरणात् गृहदाहादिना युगपदनेकब्राह्मणहनने तु भविष्यपुराणीयो विशेषः ।। ब्राह्मणो ब्राह्मणं वीरब्राह्मणौ वा बहून्गुह ।। निहत्य युगपद्वीर एकं प्राणान्तिकं चरेत् ।। कामतस्तु यदा हन्याद्ब्राह्मणान्सुरसत्तम ।। तदात्मानं दहेदग्नौ विधिना येन तच्छृणु ।। एतच्चाज्ञानविषयं सर्वमेवैतत् । तथा ।। अकामतो यदा हन्याद्ब्राह्मणान्ब्राह्मणो गुह ।। चरेद्वने तथा घोरे

यावत्प्राणपरिक्षयम् । एतच्चाज्ञानवधे । प्रकृतत्वाद्युगपन्मारणविषयम् । क्रममारणे तु विधेः प्राथमिकादस्मादित्यावृत्तिविधायकं वेदवचनम् ॥ ८५ ॥

(४) **राघवानन्दः** । निमित्ततारतम्येनोक्तं नैमित्तिकतारतम्यमुपसंहरति **अत इति** । अन्यतमं ब्रह्महा द्वादशेत्यात्यादिमध्ये । **आत्मवत्तया** अस्त्यात्मा परलोकभागिति दृढात्मबुद्धा नह्यनात्मवित्कश्चित्क्रियाफलमुपाश्नुत इत्युक्तेः ॥ ८५ ॥

(५) **नन्दनः** । उक्तमर्थमुपसंहरति **अतोऽन्यतममास्थायेति** । अत एषां विधीनां विप्रशब्दः क्षत्रियवैश्ययोरप्युपलक्षणार्थः । केचिद्ब्राह्मणानामेव सर्वत्र प्रायश्चित्तानि विहितानि क्षत्रियादीनान्तु दण्डविशेषानुसारेणाहवनीया इति मन्यन्ते ॥ ८५ ॥

(८) **गोविन्दराजः** । **अत इति** । अस्मात्प्रायश्चित्तं मरणादन्यतमं प्रायश्चित्तं ब्राह्मणादिः संयतमनाः आश्रित्य प्रशस्तात्मतया ब्रह्महत्याकृतं पापमपनुदति ॥ ८५ ॥

(९) **भारुचिः** । सर्वेषां ब्रह्महत्याप्रायश्चित्तानामुपसंहारश्लोकोऽयम् । **विप्रग्रहणं** चात्र सर्ववर्णप्रदर्शनार्थम् । तथा च सति सामर्थ्यादधिकारो यथासम्भवं ब्राह्मणादीनां प्रायश्चित्तेष्ववेक्षितव्यः ॥ ८५ ॥

**हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत् ॥**
**राजन्यवैश्यौ चेजानावात्रेयीमेव च स्त्रियम् ॥ ८६ ॥**
**[जन्मप्रभृतिसंस्कारैः संस्कृतामन्त्रवाचया ।**
**गर्भिणींत्वथवा स्यात्तामात्रेयीं च विदुर्बुधाः ॥१॥]**

(१) **मेधातिथिः** । **गर्भो** ब्राह्मणजातीय एव । केन गर्भस्य पातनं कारयेत् । **अविज्ञात**-मज्ञातस्त्रीपुरुषविशेषव्यञ्जनम् । उपज्ञाते यथायथं स्त्रीपुंसनिमित्तमेव । "कथं पुनः स्त्रियामहतायां गर्भस्य वधो भवति ।" औषधादियोगेन गर्भस्य पातनम् । **एतदेवे**त्येकवचनात्प्रत्यासन्नद्वादशवार्षिकमेवातिदिश्यत इत्याहुः । अन्ये **एतदिति** शुद्धिकारणं सामन्यापेक्षायाम्, अतः सर्वप्रायश्चित्तातिदेशः । **क्षत्रियवैश्यौ चेजानौ** यजमानौ । भूतकालता न विवक्षिता । स्मृत्यन्तरे 'सवनगतौ राजन्यवैश्याविति' । अतश्च प्रारब्धसोमपानयोरेष विधिर्न दर्शपूर्णमासादियजमानयोः । लिङ्गदर्शनं तु यजमानमात्रयोर्भावयतीति । ब्राह्मणीभूयैव यजत इति । **आत्रेयीं स्त्रियम**त्रिगोत्रजाताम् । जातेरविशेषात् स्त्रीपुंसयोर्ब्राह्मणीनामपि प्राप्तावात्रेय्या वचनमन्यगात्रनिवृत्त्यर्थम् । अतो ब्राह्मण्या अप्यन्यस्या वध उपपातकमेव । 'स्त्रीशूद्रविट्क्षत्रियवध' इति । यत्तु 'स्त्रीसुहृद्वधम्' इति तच्चातुर्वर्ण्यस्त्रीमात्रे । अधमस्त्रीणामुपपातकमहापातकप्रायश्चित्ते विकल्प्येते । भर्तृस्वगुणापेक्षो विकल्पो बुद्धिपूर्वाबुद्धिपूर्वकृतश्च सः । स्तनपबालापत्ययोस्तदभावे बालानां दुःशके जीविते विजातियाया अपि, ब्राह्मणभार्याया भर्तृद्वेषादनपराधिन्या निमित्तान्तरतो वोपजाप्यमानायाः शीलं रक्षन्त्या असंप्रयुज्यमानाया वधः । एवमप्युत्प्रेक्षया 'स्त्रीसुहृद्वधम्' इत्यादेशात् । अन्यत्र तु 'स्त्रीशूद्रेति' । आत्रेय्यां त्वविकल्पः । अन्ये **त्वात्रेयीं** गर्भसाहचर्यादृतुमतीमाहुः । पत्यते भ्रूणहात्रेयाश्च हन्तेति । भ्रूणहा ब्राह्मण-

वधकारी सा। सा च ब्राह्मण्येव। अत्र कुक्षावश्यं गर्भ उह्यत इत्यात्रेयी। यद्यपीदृश्यां वृत्तौ तद्धितो न स्मर्यते, प्रयोगानुसारेण तु भवतीति ॥ ८६ ॥

(२) **सर्वज्ञनारायणः**। गर्भं ब्राह्मणेन ब्राह्मण्यामाहितमविज्ञातं पुंनपुंसकस्त्रीवधाद्युक्तमेव। ईजानौ सोमेन। **आत्रेयी**मत्रिगोत्रां रजस्वलां च। तथाहि। ऋतुमतीमात्रेयीमाहुरिति गौतमः। अत्रिगोत्रां वा नारीमिति विष्णुः। सा च ब्राह्मण्येव आत्रेयीं ब्राह्मणीमिति शङ्खस्मृतेः। व्रतमित्यभिधानात्कामतोऽपि हनने न मरणान्तं किंतु द्वादशवार्षिकमेव। अकामतस्तदर्धम् ॥ ८६ ॥

(३) **कुल्लूकः**। प्रकृतत्वाद्ब्राह्मणगर्भविषयं स्त्रीपुंनपुंसकत्वेनाविज्ञातं क्षत्रियं वैश्यं च यागप्रवृत्तं हत्वाऽऽत्रेयीं च स्त्रियं ब्राह्मणीं तथात्रेयीं च ब्राह्मणीमिति यमस्मरणात्। हत्वा ब्रह्महत्याप्रायश्चित्तं कुर्यात्। **आत्रेयी** च रजस्वला ऋतुस्नातोच्यते रजस्वला ऋतुस्नातामात्रेयीमिति वसिष्ठस्मरणात्। एवं चानात्रेयीब्राह्मणीवधे त्रैवार्षिकमुपपातकं यथोक्तं स्त्रीशूद्रविट्क्षत्रवध इति यत्तूत्तरश्लोके कृत्वा च स्त्रीसुहृद्वधमिति तदाहिताग्निब्राह्मणस्य ब्राह्मणीभार्याविषयम्। तथा चाङ्गिराः। आहिताग्नेर्ब्राह्मणस्य हत्वा पत्नीमनिंदिताम् ॥ ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव च ॥ ८६ ॥

(४) **राघवानन्दः**। विप्रवधप्रायश्चित्तप्रसंगेन तदर्थमातिदेशिकब्रह्महत्यामाह। **हत्वेति** द्वाभ्याम्। प्रकृतत्वाद्विप्ररेतोजं गर्भं स्त्रीपुंनपुंसकतयाऽज्ञातम्। **ईजानौ** यागार्थं दीक्षितौ ॥ यागस्थक्षत्रविड्घाते चरेद्ब्राह्मणो व्रतम्। गर्भहा च यथावर्णं तथात्रेयीनिषूदक इति याज्ञवल्क्योक्तेः ॥ यथावर्णं एकगुणायुक्तभेदेन **आत्रेयी** रजस्वला रजस्वलामृतुस्नातामात्रेयीमिति वसिष्ठवचनात्। तथात्रेयीं च ब्राह्मणीमिति यमस्मृतेर्विप्रैव सा जातिस्तु बादरायण इति न्यायात् अत्रिगोत्रा वा ॥ ८६ ॥

(५) **नन्दनः**। अथ ब्रह्महत्याव्रतं केषुचिन्निमित्तेष्वतिदिशति **हत्वा गर्भमविज्ञातमिति**। अविज्ञातमविज्ञातस्त्रीपुंसविभागम्। गर्भं ब्राह्मणगर्भं, **आत्रेयीं** रजस्वलामविज्ञातामात्रेयीमाहुरिति वसिष्ठः रजस्वलामत्रिगोत्रजामिति वैष्णवं वचनम् ॥ ८६ ॥

(६) **रामचन्द्रः**। अविज्ञातं गर्भं स्त्रीपुंनपुंसकं हत्वा **ईजानौ** राजन्यवैश्यौ **आत्रेयीं** रजस्वलामत्रिगोत्रां ऋतुस्नातां वात्रेयीमाहुः ॥ ८६ ॥

(८) **गोविन्दराजः**। **हत्वेति**। राजन्यवेश्यौ वेजानावात्रेयीमेव च स्त्रियम् ॥ प्रकृतत्वाद् ब्राह्मणगर्भं स्त्रीनपुंसकत्वेनाविज्ञातं हत्वा क्षत्रियवेश्यौ वा यागप्रवृत्तौ हत्वाऽऽ**त्रेयीं** रजस्वलां ऋतुमतीमात्रेयीमाहुरत्र ह्येष्यदपत्यं भवतीति वसिष्ठस्मरणात्। अत्रिगोत्रां वा नारीमिति विष्णुस्मरणात्। सा चात्रेयीं च ब्राह्मणीमिति शङ्खस्मरणाद्ब्राह्मणीं तामपि चात्रेयीं हत्वा वधे उपपातकं यथोक्तं स्त्रीशूद्रविट्क्षत्रियवध इति। यदन्तरश्लोके कृत्वा स्त्रीसुहृद्वध इति तत्। आहिताग्नेर्द्विजाग्रस्य हत्वा पत्नीमनिन्दिताम्। ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव च ॥ इत्यङ्गिरस्मरणादाहिताग्निब्राह्मणप्रतिव्रताब्राह्मणीभार्याविषयम् ॥ ८६ ॥

(९) भारुचिः। ब्रह्महत्याप्रायश्चित्तातिदेशोऽयं गर्भादिहन्तॄणाम्। गर्भश्च ब्राह्मण-गर्भ एव प्रकरणाद् विज्ञेयः। आत्रेयी तु रजस्वला ब्राह्मण्येव। तस्यां हि कदाचित् पुंसस्संभव इति, अतः तां हत्वा ब्रह्महा भवति। गोत्रत इत्यपर आत्रेयीमाहुः, यस्माच्चात्रेयीं हत्वा ब्रह्महा भवति, ततोऽन्यां ब्राह्मणीं हत्वा न ब्रह्महेति गम्यते। गवादिषु तु जातिमात्रस्य विवक्षितत्वात् स्त्रीयां पुंसि चाविशेषेण प्रायश्चित्तम्। यच्चोपरिष्टश्लोके वक्ष्यति "कृत्वा च स्त्रीसुहृद्वधम्" इति, स्त्रीग्रहणं तदपि ब्राह्मण्या एव। गोवधादौ च स्त्रीग्रहणस्य विद्यमानत्वाद्विकल्पेन ब्राह्मण्यामिदं प्रायश्चित्तं स्यात्। विकल्पश्च गुणापेक्षो युक्तः, गुरुलघुप्रायश्चित्तयोः प्रत्ययाप्रत्ययकारणेन वा। एवं चात्रेयीग्रहणमर्थवाद् भवति। सवनगतौ राजन्यवैश्यौ हत्वैतदेव। तथा च ब्राह्मणं "यो वै कश्चिद् यजते ब्राह्मणीभूयैव यजते" इति ॥ ८६ ॥

**उक्त्वा चैवानृतं साक्ष्ये प्रतिरभ्य गुरुं तथा ॥**
**अपहृत्य च निःक्षेपं कृत्वा च स्त्रीसुहृद्वधम् ॥ ८७ ॥**

(१) मेधातिथिः। हिरण्यभूम्यादिसाक्ष्ये नु वधादिसंशये वाऽनृताभिधाने प्रायश्चित्त-मेतत्। अत्र हि दोषातिशयः श्रूयते 'भञ्जता'मित्यादि। अन्यत्र गुरुलघुभावेन कल्पना कार्या। प्रतिरभ्येति यदुक्त'मलीकनिर्बन्ध' इति तदेवेदं 'प्रतिरंभः', संरंभपूर्वको गुरोरु-पद्रवारंभः। निक्षेपः। अत्रापि दरिद्रस्य महतो धनवतोऽधमस्योतान्धस्य ब्राह्मणजातीय-स्येत्यादिकल्पना। यत्र त्वेकमेव श्रूयते तत्र यथाश्रुत्येव भवितुमर्हति। कः कल्पनाया अवसरो, न चेह कौटसाक्षिनिक्षेपयोर्लघुप्रायश्चित्तमस्ति। यदपि सुरापाने तदपि तुल्यमनेन गरीयः, श्रुताश्रुतविषयत्वं 'शक्तिं चावेक्ष्येति' यत्। सत्यप्य'नुक्तनिष्कृतीनामिति' श्रवणे ॥ ८७ ॥

(२) सर्वज्ञनारायणः। साक्ष्ये यत्र सत्यवचसि वर्णिनां वधः। प्रतिरुध्य मिथ्याभि-शापेन संयोज्य निःक्षेपम्। ब्राह्मणस्यापि सुवर्णरूपं रजताद्यपि ब्राह्मणस्य। स्त्री स्वभार्या अत्रेष्टा अनात्रेयी यद्भार्यावधस्तूपपातकमेव ब्राह्मणीवधत्वेऽपि तथा चान्यत्र दर्शितम्। सुहृन्मित्रमब्राह्मणोऽपि तस्य वधम् ॥ ८७ ॥

(३) कुल्लूकः। हिरण्यभूम्यादियुक्तसाक्ष्येऽनृतमुक्त्वा गुरोश्च मिथ्याभिशाप-मुत्पाद्य निक्षेपं च ब्राह्मणसुवर्णादन्यद्रजतीति द्रव्यं क्षत्रियादेः सुवर्णमपि चापहृत्य स्त्रीवधं च यथा व्याख्यातं कृत्वा मित्रं ब्राह्मणं हत्वा ब्रह्महत्याप्रायश्चित्तं कुर्यात् ॥ ८७ ॥

(४) राघवानन्दः। साक्ष्ये दातव्ये साक्ष्ये भूम्याद्यर्थे अन्यत्र प्राणायामाचमनयो-र्विधानात्। प्रतिलभ्य मिथ्याभिशापमुत्पाद्य। प्रतिरुध्येति पाठे स एवार्थः। गुरुं ब्रह्मदम् निक्षेपं ब्राह्मणसुवर्णातिरिक्तम्। स्त्रीसुहृद्वधं कृत्वा प्रायश्चित्तं कुर्यादित्यध्याहारेणा-न्वयः। स्त्री आहिताग्नेर्ब्राह्मणी ज्ञातव्या वा अंगिराः। आहिताग्नेर्द्विजाग्र्यस्य हत्वा पत्नीमनिन्दिताम्। ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव चेति। सुहृत् यागस्थक्षत्रिय-वैश्यब्राह्मणमित्रम् ॥ ८७ ॥

(५) **नन्दनः । गुरुं प्रतिलभ्य** गुरोः प्रातिकूल्यं कृत्वा स्त्रीभार्या एतदेव व्रतं चरेदित्यनुषङ्गः ॥ ८७ ॥

(६) **रामचन्द्रः** । गुरुं प्रतिरुध्य मिथ्याशयः ॥ ८७ ॥

(८) **गोविन्दराजः । उक्त्वेति** । यत्र साक्ष्येऽर्थिप्रत्यर्थिनो वधार्हतोपैति तत्रासत्यमुक्त्वा गुरोश्च मिथ्याशापमुत्पाद्य निक्षेपं च ब्राह्मणसुवर्णमपि वापहृत्य स्त्रीवधं च यथा व्याख्यातं कृत्वा मित्रं च ब्राह्मणं निहत्य ब्रह्महत्याप्रायश्चित्तं कुर्यात् ॥ ८७ ॥

**इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ।।**
**कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ॥ ८८ ॥**

(१) **मेधातिथिः ! प्रमाप्य** हत्वा । **निष्कृतिरिरि**ति । प्रागयं व्याख्यातार्थः प्रायश्चित्तगौरवोपदेशपरः ॥ ८८ ॥

(२) **सर्वज्ञनारायणः । इयं विशुद्धिस्तद्देहावच्छिन्नस्य** देहिनो व्रतादिना शुद्धिः । न विधीयते निष्कृतिः तद्देहावच्छेदेन मरणे न तु भवत्येव ॥ ८८ ॥

(३) **कुल्लूकः** । एतत्तु प्रायश्चित्तं विशेषोपदेशमन्तरेणाकामतो ब्राह्मणवधेऽभिहितं कामतस्तु ब्राह्मणवधे **नेयं निष्कृतिः** नैतत्प्रायश्चित्तं किन्त्वतो द्विगुणादि करणात्मकमिति प्रायश्चित्तगौरवार्थं न तु प्रायश्चित्ताभावार्थं कामतस्तु कृतं मोहात्प्रायश्चित्तैः पृथग्विधैरिति पूर्वोक्तविरोधात् ॥ ८८ ॥

(४) **राघवानन्दः** । ब्रह्महत्यानिष्कृतिमुपसंहरति **इयमिति** । **प्रमाप्य** हत्वा । न विधीयत इति प्रायश्चित्तगौरवार्थं निन्दाद्वैगुण्यस्योक्तत्वात् । इयमुक्त्वा द्वादशवार्षिकादिका । अत्रैव च कामतस्तु कृतं मोहात्प्रायश्चित्तैः पृथग्विधैरित्युक्तमन्यथा पूर्वापरविरोध इति । न च तद्विप्रातिरिक्तविषयकं संकोचे मानाभावात् ॥ ८८ ॥

(५) **नन्दनः** । 'उदिता ब्रह्महा द्वादशाब्देऽह्नी'त्यादिनोक्ताः कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते इदं विशेषविषयं कामकारेप्याहुरेके श्रुतिनिदर्शनात् । कामतस्तु कृते मोहात्प्रायश्चित्तैः पृथग्विधैरित्येते। सामान्यविषयेऽपीन्द्रोयतीन् सालावृकेभ्यः प्रायच्छदित्यादिकं धर्मप्रधानलोकोपकारकविशिष्टपुरुषविषयं न सार्वत्रिकमित्यविरोधोऽवगन्तव्यः॥ ८८ ॥

(६) **रामचन्द्रः** । अकामतः द्विजं **प्रमाप्य** हत्वा ॥ ८८ ॥

(८) **गोविन्दराजः । इयमिति** । एषा निष्कृतिरबुद्धिपूर्वब्राह्मणवधे उक्ता । इच्छातो ब्राह्मणवधे प्रायश्चित्तेन संशुद्धिर्नोपदिश्यते । अन्ये त्विन्द्रो यतीनित्याद्युक्तं श्रुतिलिङ्गकामतोऽपि ब्राह्मणवधे प्रायश्चित्तमिच्छतीदं च ब्राह्मणवधवर्जनादरार्थं व्याचक्षते ॥ ८८ ॥

(९) **भारुचिः** । कामतोऽकामत इति कृतविचारः । तस्मान्न कामकृते प्रायश्चित्ताभावं दर्शयति, किं तर्हि प्रमादस्तुत्यर्थमिदं कल्प्यते । इतरथा हि पूर्वापरविरोधः स्यात् ।

अथवा प्रायश्चित्तगुरुत्वोपदेशपरमिदं गुणतः कामतो वधे ब्राह्मणस्य। एवञ्च सर्वगुण-विशेषापेक्षया सप्रत्ययाप्रत्ययवधापेक्षया च ब्रह्महत्याप्रायश्चित्तानि यथा संभवमर्थयोगा-पेक्षया प्रकल्प्यानि। अन्यानि चैवमेव समार्थानि ॥ ८८ ॥

**सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् ॥**
**तया स काये निर्दग्धे मुच्यते किल्बिषात्ततः ॥ ८९ ॥**

(१) **मेधातिथिः**। द्विजश्रुतिर्ब्राह्मणार्थैव। आह च स्मृत्यन्तरे 'ब्राह्मणस्य उष्णां मा सिंचेयुः सुराम्' (गौ. २३/१) इति। **मोहादित्यनु**वादः। **अग्निवर्णां** वर्णश्रुतिग्रहणं सामान्यलक्षणार्थम्। अत एवाह **काये निर्दग्धे मुच्यत** इति ॥ ८९ ॥

(२) **सर्वज्ञनारायणः**। सुरापानप्रायश्चित्तमाह **सुरामिति**। पैष्टीपाने त्रयाणां गौडीमाध्वीपाने तु विप्रस्येत्याशयेन **द्विज** इत्युक्तम्। **मोहात्** रागात् न त्वज्ञानात्। **निर्दग्ध** इति मृत्यहेतुतां दर्शयति। **अग्नीवर्णाम**ग्निसदृशमौष्ण्येन। एतदुत्तरेष्वपीत्यनुषज्यते ॥ ८९ ॥

(३) **कुल्लूकः**। सुराशब्दः पैष्टीमात्रे मुख्यो न तु गौडीमाध्वीपैष्टीषु त्रितयानु-गतैकरूपाभावात्प्रत्येकं च शक्तिकल्पने शक्तित्रयकल्पनागौरवप्रसङ्गात् गौड्यादि मदिरासु गुणवृत्त्यापि सुराशब्दप्रयोगोपपत्तेः। अत एव भविष्यपुराणे। सुरा च पैष्टी-मुख्योक्ता न तस्यास्त्वितरे समे। पैष्ट्याः पानेन चैतासां प्रायश्चित्तं निबोधत। मनुनोक्तं माहाबाहो समासव्याससंयोगतः। एतासामति निर्द्धारणे षष्ठी। एतासां गौडीमाध्वी-पैष्टीनां प्रकृतानां मध्ये पैष्टीपाने मनूक्तं प्रायश्चित्तम्। सुरां पीत्वा द्विजो मोहादिति निबोधतेत्यर्थः। मुख्यां सुरापैष्टीं रागादिव्यामूढतया **द्विजो** ब्राह्मणादिश्च पीत्वाऽग्निवर्णां सुरां पिबेत्तया सुरया शरीरे निर्दग्धे सति द्विजस्तस्मात्पापान्मुच्यते। एतच्च गुरुत्वा-त्कामकारकृतसुरापानविषयम्। तथा च बृहस्पतिः। सुरापाने कामकृते ज्वलन्तीं तां विनिःक्षिपेत्। मुखे तया स निर्दग्धो मृतः शुद्धिमवाप्नुयात् ॥ ८९ ॥

(४) **राघवानन्दः**। सुरापानप्रायश्चित्तं सार्थवादमाह **सुरां पीत्वेत्यष्टभिः**। कामतस्तत्पाने मरणान्तिकप्रायश्चित्तम्। तथा च बृहस्पतिः। सुरापाने कामकृते ज्वलन्तीं चैव तां मुखे। क्षिपेत्तया स निर्दग्धोऽमृतः शुद्धिमवाप्नुयादिति। सुरापदमत्र पैष्ट्यां मुख्यं अन्यत्र मादकयोगाद्गौणम्। अत एव भविष्ये। सुरा च पैष्टी मुख्योक्ता न तस्यास्त्वितरे समे। पैष्ट्याः पाने तु चैतासां प्रायश्चित्तं निबोधतेति। एतासां सुराणां मध्ये। सुरा वै मलमन्नानामिति वक्ष्यति अन्नानामिति लिङ्गात्पैष्टीति ॥ ८९ ॥

(५) **नन्दनः**। अमोहान्मतिपूर्वकं एवं व्याख्याने स्मृत्यन्तराणि संगच्छन्ते **अग्नि-वर्णामग्निस्पर्शां** स्वकाये निर्दग्धे मरणे सति ॥ ८९ ॥

(६) **रामचन्द्रः**। **तया** सुरया ॥ ८९ ॥

(८) **गोविन्दराजः**। **सुरामिति**। द्विजातिगन्धातिशयव्यामूढतया चेच्छातः सुरां पैष्टीं मुख्यां पीत्वाऽग्निस्पर्शां सुरां पिबेत्। तया सुरया शरीरे दग्धे सति द्विजातिः तस्मा-त्पापाद्विमुच्यते ॥ ८९ ॥

(९) **भारुचिः**। एवञ्च मृतस्य शुद्धिर्विज्ञेया। तथा च सुरायाग्निवर्णत्वमनुगृहीतं भवति। **मोहादिति** चात्र यदुक्तं, तत्पूर्वत्रार्थनिर्देशलिङ्गम्, यदुक्तं "प्रायश्चित्तीयतां प्राप्य मोहात् पूर्वकृतेन वा" इति, अत्र मोहस्य स्वशब्देनैवोपदेशात्॥ ८९॥

**गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा॥**
**पयो घृतं वाऽऽमरणाद्गोशकृद्रसमेव वा॥ ९०॥**

(१) **मेधातिथिः**। अन्यतरप्रायश्चित्तमग्निवर्णं भवत्येव। **गोमूत्रादयो** द्रव्यविशेषा अन्यप्रकारमरणनिवृत्त्यर्थाः। **सुरा** च पैष्टीति विज्ञेया। तां मुख्येत्युपचरन्ति। अन्यत्र तु प्रयोगो गौणः। कामतः पाने चैतत्। तथा च वक्ष्यति। 'अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुध्यति'। **अग्निवर्णं**मित्यग्निस्पर्शमिति ज्ञातव्यम्। तथा चाह **'आमरणादिति'**। सुरा च स्त्रीणामपि प्रतिषिद्धा। उक्तं हि वासिष्ठे। 'तथा ब्राह्मणी सुरापी भवति। न तां देवाः पतिलोकं नयन्ति। इहैव सा भ्रमति क्षीणपुण्या लोके प्रेत्यावाप्सु च जलभुग्भवति' ॥ ९०॥

(२) **सर्वज्ञनारायणः**। आमरणाद्यावदद्भिर्वारैर्मरणं भवति। गोशकृद्रसं निष्पीड्य गृहीतम्। एतत्कामतः पाने। अकामतः स्मृत्यन्तरोक्तं ज्ञेयम्॥ ९०॥

(३) **कुल्लूकः**। गोमूत्रजलगोक्षीरगव्यधृतगोमयरसानामन्यतममग्निस्पर्शं कृत्वा यावन्मरणं पिबेत्॥ ९०॥

(४) **राघवानन्दः**। आमरणादितिच्छेदः [कपिदेहे ततः सुरापानजात्। तदभावे गोमूत्रादि पंचाग्निवर्णमिति पदानां विशेषणम्]॥ ९०॥

(५) **नन्दनः**। उदकादीनामपि विशेषणमग्निवर्णमिति आमरणात्पिबेद्यथा गोमूत्रादीनामन्यतमस्य पानेन मरणं प्राप्नोति तथा पिबेदिति॥ ९०॥

(८) **गोविन्दराजः**। **गोमूत्रमिति**। गोमूत्रोदकगोक्षीरघृतगोमयरसानां वान्यतममग्निस्पर्शं मरणपर्यन्तं पिबेत्॥ ९०॥

(९) **भारुचिः**। द्रव्यमात्रविकल्पार्थं चेदमारब्धम्। तथा चौष्ण्यगुणस्समानोऽत्र पूर्वद्रव्येण। अग्निवर्णत्वं च सर्वशेषः। तथा **वामरणादित्युक्तं** एतच्च मुख्यसुरापाने कामतः प्राणान्तिकं प्रायश्चित्तम्॥९०॥

**कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि॥**
**सुरापानापनुत्यर्थं वालवासा जटी ध्वजी॥ ९१॥**

(१) **मेधातिथिः**। इदं प्राणात्यये औषधार्थम्। अन्येन विहितस्यापि तस्य। अज्ञानात्तु तप्तकृच्छ्रसहितः पुनः संस्कारो दर्शयिष्यते। अन्ये तु गौडीमाध्व्योरुपचरितसुराभावयोरिच्छन्ति। तथा च स्मृत्यन्तरे 'असुरामद्यपाने चांद्रायणमभ्यसनीयम्'। **सकृदिति** कणपिण्याकयोरुभयोः शेषः। **निशायाम्**। अवालमयम्। गोलोमाजालोमादिकृतं वासः। **जटी** शिखयाऽन्यैर्वा केशैः। **ध्वजी** मद्यघटिकादिनेति॥ ९१॥

(२) **सर्वज्ञनारायणः । कणान्** तण्डुलकणान् यवागूं पक्त्वा पिबेत् । **पिण्याकं** तिलकल्कं जलेनालोड्याब्दं सकृन्निशि । चीरवासा इत्यादि चोभयगतम् । चीरं खण्डवस्त्रम् । **ध्वजी** सुराभाण्डध्वजं पुरस्कृत्वा । एतच्च कामत उपलभ्यमानमधुसुरासंसृष्टजलपाने ।। ९१ ।।

(३) **कुल्लूकः** । अथवा गोरोमादिकृतवासा जटावान्सुराभाजनचिन्हः सूक्ष्मतण्डुलावयवान् आकृष्टतैलं तिलं वा रात्रावेकवारं संवत्सरपर्यंतं सुरापानपापनाशनार्थं भक्षयेत् । इदमबुद्धिपूर्वकमुख्यसुरापाने द्रष्टव्यम् । न तु गुणान्तरवैकल्पिकं लघुत्वात् ।। ९१ ।।

(४) **राघवानन्दः** । अकामतः पैष्टीपाने कामतश्च गौडीमाध्व्योः पान आह **कणानिति** । **कणान्** तण्डुलस्य सूक्ष्मांस्तुषयुक्तावयवान् । **पिण्याकं** निःसारिततैलं तिलं **वालवासाः** गोवालनिर्मितवासाः । **ध्वजी** मद्यघटिका ध्वजरूपा यस्य सः ।। ९१ ।।

(५) **नन्दनः** । अकामतः पाने प्रायश्चित्तमाह **कणान्वा भक्षयेदब्दमिति** । **वालवासा** गोवालकृतवस्त्रधरः **जटी ध्वजी** सुराकलशचिन्हयुक्तश्च भूत्वा कणान्पिण्याकं वा सकृन्निशि संवत्सरमिह भक्षयेत् ।। ९१ ।।

(६) **रामचन्द्रः** । सुरापानस्य अपनुत्यर्थं **बालवासाः** प्रावारकम्बलादि ।। ९१ ।।

(८) **गोविन्दराजः** । **कणानिति** । अथवा गोलोमादिकृतवासा जटावान् सुराभाजनचिन्हहस्तन्दुलमलं तिलखलं चैकवारं रात्रौ संवत्सरं सुरापानपापनिर्हरणार्थं भक्षयेदितीदमबुद्धिपूर्वमुख्यसुरापाने द्रष्टव्यं न पूर्ववैकल्पिकं लघुत्वात् ।। ९१ ।।

(९) **भारुचिः** । एतच्च प्रायश्चित्तं मुख्यसुरापान एवाकामतो गम्यते । एवं ह्येतद् व्यतिक्रमे सप्रत्ययाप्रत्ययकारणभेदात् गुरुलघुत्वं प्रायश्चित्तस्योपपन्नं भवति । तथा च गौतमोऽप्रत्यये सुरापाने लघुप्रायश्चित्तमाह सप्रत्ययसुरापानप्रायश्चित्ताद् गुरुणः "अमत्या पाने पयो घृतमुदकं वायुं प्रति त्र्यहं तप्तानि स कृच्छ्रस्ततोऽस्य संस्कारः" इति । अथवेतरयोः सुरयोः पान एतल्लघुप्रायश्चित्तं विज्ञेयम् । तथा च स्मृत्यन्तरं "असुरामद्यपाने चान्द्रायणमभ्यसेदिति" ।। ९१ ।।

## सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।।
## तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ।। ९२ ।।

(१) **मेधातिथिः** । '**अन्न**'शब्दो यद्यप्यदनक्रियाकर्मणि व्युत्पाद्यते, तथापि व्रीह्यादिप्रभृतावेव भक्तसक्त्वपूपादौ प्रसिद्धतरप्रयोगः । तथा चा'न्नेन व्यञ्जनमि'ति भेदोपपत्तिः । अतः पिष्टविकारत्वात् सुराया अन्नव्यपदेशे लब्धेऽन्नानां **मलमिति** निवारणोपपत्तौ पैष्ट्याः सुरायाः प्रतिषेधे लिङ्गमिदम् । लिङ्गं त्रयाणां वर्णानां संपद्यते । ब्राह्मणक्षत्रियवैश्यैरपि वर्णैः पैष्टी न पातव्या । किं च सैव सुरा मुख्या गौडीमाध्व्योः । एवं यथा सीधुमाध्वीकयोर्गुरु प्रायश्चित्तं न तथान्येषामरिष्टादीनां मद्यानाम् । **मलशब्दः पाप्मेति** व्याख्यातो निन्दातिशयदर्शनार्थः । सत्यपि प्रायश्चित्तप्रकरणे वाक्यात् सुरापाननिषेधोऽयम् । भिन्नवाक्यत्वाच्च नार्थवादः ।। ९२ ।।

(२) **सर्वज्ञनारायणः । अन्नानां मलं** अन्नानामशुद्धभागः । यच्च **मलम**शुद्धभागः स **पाप्मा** पापहेतुः । शूद्रस्तु स्वत एव पापत्वात्पिबन्नपि नाधिकपापवान्भवतीत्यर्थः । अन्नानामित्युक्तत्वादन्नपिष्टप्रभवत्वात्पैष्टचेव त्रयाणां वर्णानां निषिद्धा ।। ९२ ।।

(३) **कुल्लूकः** । यस्मात्तंडुलपिष्टसाध्यत्वात्सुरा अन्नमलं **मलशब्देन** च पापमुच्यते तस्माद्ब्राह्मणक्षत्रियवैश्याः पैष्टीं सुरां न पिबेयुरित्यनेन प्रतिषेधे सति एतदतिक्रमे सुरां पीत्वेति प्रायश्चित्तं अन्नमलानुवादाच्च पैष्टीनिषेध एवं स्फुटः त्रैवर्णिकस्य मनुनैवोक्तः ।। ९२ ।।

(४) **राघवानन्दः** । त्रयाणां पैष्टीभक्षणाभावं सार्थवादं निगमयति **सुरे**ति । मल-पाप्मनोरेकार्थ्यायित्वेन तद्भुक् मलभुगेव ।। ९२ ।।

(५) **नन्दनः । सुरायाः** पैष्टयाः पाने त्रैवर्णिकैरेतत्प्रायश्चित्तं कर्तव्यमित्यभिप्रायेणाह **सुरा वै मलमन्नानामि**ति । अन्नानां मलमिति वचनसामर्थ्यात्पैष्टी गम्यते प्रतिषिध्यते चेति गम्यते ।। ९२ ।।

(६) **रामचन्द्रः** । सुरा अन्नानां मलं पिष्टेन कृतम् ।। ९२ ।।

(८) **गोविन्दराजः । सुरे**ति । यस्मात्तण्डुलपिष्टादपि संपाद्यत्वात् सुरान्नमलं **मलशब्देन च** पापमुच्यते । ब्राह्मणक्षत्रियवैश्याः पैष्टीं सुरां न पिबेयुः इत्यनेनैव प्रतिषेधे सति एतदतिक्रमे सुरां पीत्वा इत्यादि प्रायश्चित्तं सुरा चान्नमलार्थवादः लोकप्रसिद्धश्च पैष्टयेव मुख्या गौडीमाध्व्योस्तूपचारात् सुरा शब्दः ।। ९२ ।।

(९) **भारुचिः** । केचिदत्र "गौडी" श्लोकं पूर्वं पठति, पश्चादिमं—"सुरा वै मलमन्ना-नामिति" । तैरप्येतौ विपर्यस्य श्लोकौ व्याख्येयावर्थक्रमेण, ये पुनः "सुरा वै मलमन्नानां" इत्येतं पूर्वं पठन्ति, तेषामर्थक्रम एव । अतः पूर्वमयमस्माभिः पठयते । **सुरा** लोकप्रसिद्धा गवादिवत् । अन्नमलवत्वं चार्थवादस्तस्मात् पानविद्वेषणार्थः । न हेतुः प्रतिषेधविधेर्हेतुत्वे सति सर्वस्यान्नमलस्याभक्ष्यत्वं स्यान्मण्डादेः, हेतुमालाप्रसङ्गश्च स्यात् । अन्नमलत्वादपेया सुरा, अन्नमलं पुनः कस्मादपेयमिति । अत्र कारणं वक्तव्यं भवति । यतोऽयमर्थवादः, न हेतुः । एवञ्च सति प्रसन्नापि सति सुरान्नमलत्वेन निन्द्यते । **पाप्मा च मलमुच्यते** । अयमप्यर्थवादो निवृत्त्यर्थ एव । येन नान्नमलत्वं पाप्मनो हेतुः, किं तर्हि सुरापानम् । यतः द्विजातिभिरपेया सा । एवञ्च सुराया अपेयत्वे सिद्धे "सुरां पीत्वा द्विजो मोहात्" इति युक्तः प्रायश्चित्तविधिः । एवं तावदन्नमलाद् लिङ्गात् पैष्टी मुख्यसुरा द्विजातीनां प्रति-षिद्धा । अधुना त्वसुरामद्यप्रतिषेधार्थं ब्राह्मणानामिदमारभ्यते ।। ९२ ।।

**गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।।**
**यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः ।। ९३ ।।**

(१) **मेधातिथिः** । गुडविकारो **गौडी** । येषामपीक्षुरसमेव मद्यतामापद्यते तेषामपि कारणे कार्योपचारेण 'गौडी'व्यपदेशो न विरुद्धः । मधुनो विकारो **माध्वी** । मधु माध्वीकं

विकारवृत्त्या। न सद्यो जातस्य मृद्वीकारसस्य प्रतिषेधो यःद्वन्मद्यावस्थामप्राप्तस्येति दर्शयति। अविकृतं हि मधुमाध्वींकमिच्छन्तीति स्मरति। यत्रापि मद्यशब्देन प्रतिषेधस्तत्रा-ध्यनासादितमद्यपानशक्तियोगस्य नैव प्रतिषेधः। तस्य मद्यशब्देनानभिधानात्। यथा 'शुक्त'शब्दोऽवस्थाविशेषवति प्रवर्तते नाविशेषेण। न हि तदेवाम्लतामनापन्नं 'शुक्त'-मित्युच्यते। यथा स एव गौः वत्सावस्थायां न 'बलीवर्दः'। एवं च पिष्टोदकादिसंघात-संमष्टया न 'सुरा' यावत्कालपरिवासेन न मदशक्तिमापन्ना। एवमिक्षुरसमृद्वीकारसयोर्द्रष्ट-व्यम्। "अल्पायास्तर्हि पानं प्राप्नोति, यावत्या नात्ययः पीता न मदयति। प्रतिबन्धक-द्रव्ययोगेन च"। नैष दोषः। नायं मदोत्पत्तिप्रतिषेधः। 'तथा कर्तव्यं यथा मत्तः क्षीबो न भवतीति'। किं तर्हि 'यन्मदजननसमर्थशक्तियुक्तं तन्न पातव्यमिति'। अल्पाया अपि सा शक्तिर्विद्यते। यावता रूक्षमल्पप्राणं स्वल्पमपि मद्यं मदयति स्निग्धं महाप्राणं बह्वपि नेति। नैतावता मदशक्त्यभावः शक्यो वक्तुम्। कार्याभावेन कारणभावान्मद्यानामपि-नैव निश्चीयते। न हि महत्काष्ठं दग्धुमसमर्थस्याग्नेरदाहकत्वमनुमीयते, शुष्कतृणे तादृश-स्यैव दाहकत्वोपलंभात्। "यदप्युक्तं द्रव्यान्तरेण शक्तिप्रतिबन्धकत्वे पानप्राप्तिरिति"— तदप्यचोद्यम्। न हि तृणेन तादृस्यैव दाहे तदानीं सा तस्य शक्तिर्नास्ति किंतु विद्यमानाऽपि कार्यारंभं प्रत्यसमर्था। शक्तिसंभवश्च प्रतिहेतुर्न ते नित्यकार्यम्। न च द्रव्यान्तराणि शक्ति विनाशयन्ति, अपि तु कार्यारंभं प्रतिबध्नन्ति। तथा च पल्परिमाणारंभकद्रव्ययोगेऽपि पैत्तिको माद्यति न श्लैष्मिकोऽतोऽनुमीयते न तस्य विनाशः। तस्मान्न भाविमद्यावस्थस्य प्रतिषेधो नापि प्राप्तावस्थाविशेषस्य प्रतिबन्धकाभावादिवत्तत्प्रतिषेधः। यथा चौरः स वर्जनीय इति। नोदश्वितोऽप्राप्ताम्लभावस्य प्रतिषेधः। "माध्वीति कथं, यावता गुणेन माध्वीति भवित-व्यम्"। 'संज्ञापूर्वको विधिरनित्य इति' (परिभाषा ९५) परिहारः। ज्ञापकं चास्याः परिभाषाया ओरोदिति वक्तव्ये 'ओर्गुण' (पा. सू. ३-४-१४६) इति गुणग्रहणम्। अत्र द्विजोत्तमग्रहणं न क्षत्रियवैश्ययोर्मद्यानुज्ञानार्थम्। तथा च महाभारते भारतानां यादवानां मद्यपानं तु वर्ण्यते 'उभौ मध्वासवक्षीबौ दृष्टौ मे केशवार्जुनौ' इत्युत्तरश्लोकादर्थवाद एव। "ननु च तथा सर्वा इति बहुवचनं कथम्"। यावता एकमुपमानं द्वे उपमेये। अन्नमलत्वं चात्र हेतुमन्निगदोऽर्थवादो मलं हेतुर्यथा शूर्पेण जुहोति तेन ह्यन्नं क्रियत इति ॥ ९३ ॥

(२) **सर्वज्ञनारायणः**। ब्राह्मणं प्रतिविशेषमाह **गौडीति**। गुडभवा तत्प्रकृतीक्षुरसजा च। **माध्वी** द्राक्षारसकृतेति केचित्। मधूकपुष्पेण मधुना वा कृता वाच्या त्रिविधा सुरा। यथैका सुरा पैष्टी त्रिभिर्वर्णैर्न पेया तथा सर्वा त्रिविधा द्विजोत्तमैः ब्राह्मणैरित्यर्थः ॥ ९३ ॥

(३) **कुल्लूकः**। या गुडेन कृता सा **गौडी** एवं पिष्टेन कृता **पैष्टी** मधुकवृक्षो मधुः तत्पुष्पैः कृता सा **माध्वी** एवं त्रिःप्रकारा **सुरा** जायते मुख्यसुरासाम्यनिबोधनमितरसुरापेक्षया ब्राह्मणस्य गौडीमाध्वीपाने प्रायश्चित्तगौरवार्थम्। यथा वैका पैष्टी मुख्या सुरा पूर्ववाक्य-निषिद्धत्वात् त्रैवर्णिकस्थापेक्षया तथा पूर्वा गौडी माध्वी च द्विजोत्तमैर्न पातव्या ॥ ९३ ॥

(४) **राघवानन्दः**। ब्राह्मणमित्युपसंहारात् विप्रस्य तु सुरात्रयमभक्ष्यमित्याह **गौडीति**। एका पैष्टी यथा ब्राह्मणं प्रति तथेतरे ते प्रतिनिषिद्धतया तुल्ये। **द्विजोत्तमैः** विप्रैः ॥ ९३ ॥

(५) **नन्दनः**। ब्राह्मणस्य गौडीमाध्व्योरपि पाने प्रायश्चित्तमेतत्कर्तव्यमित्यभिप्रायेणाह **गौडी माध्वी च पैष्टी चेति**। एका पूर्वश्लोके प्रतिषिद्धा **पैष्टी** ॥ ९३ ॥

(६) **रामचन्द्रः**। गुडेन कृता **गौडी**। पिष्टस्य **पैष्टी**। **माध्वी** मधूकपुष्पस्य यथैव एका तथा सर्वा सुरा प्रकृतिद्रव्यं मदहेतुः ॥ ९३ ॥

(८) **गोविन्दराजः**। **गौडीति**। गुडेन तत्कारणेनेक्षुरसेन कृता इत्येवं प्रकारा सुरा पैष्टी पूर्ववाक्यनिषिद्धा तद्वत्सर्वा अपि सुरा ब्राह्मणैर्न पातव्या। द्विजोत्तमग्रहणादुत्तरश्लोकेषु ब्राह्मणग्रहणात् गौडीमाध्व्योः सुराया सुरात्वोपचारः ॥ ९३ ॥

(९) **भारुचिः**। गुडस्य विकारो **गौड़ी**, गुड़कार्या वा। अनुक्ता तद्धितवृत्तिरिति कृत्वा यत्रापीक्षुरसविकारो मद्यं तत्रापीक्षुरसो गुड़कारणत्वाद् गुडशब्देनोच्यते। एवं चोभयथापि गौड़ी भवति। **पैष्टी** तु पिष्टविकारः। "तस्येदं" इति वा। अनुक्ता तद्धितवृत्तिरिति पूर्वोक्ता मुख्या। **माध्वी** च मधुशब्दादेरत्र विकारार्थे। एवञ्च मधुविकारो माध्वी न माधवी, येन "संज्ञापूर्वको विधिरनित्य" इतीयं परिभाषा अस्याश्च ज्ञापकं स्यात्। "ओर्वो दिति वक्तव्ये" गुणग्रहणं गुर्वपिकृतं ज्ञापनार्थमस्य। तथा च सति गुणस्यानित्यत्वात् माध्वीति सिद्धम्। एवञ्च "स्वायम्भुव इत्येतदपि सिद्धं" भवति। एवं त्रिविधैषा। **यथैवैका** इति च प्रसिद्धा। प्रतिषिद्धायां पिष्टसुरायां पूर्वश्लोके, इह श्लोके इतरे गौड़ीमाध्व्यावसुरे सत्यौ सुरीकरोति निन्दार्थम्। अतः पिष्टसुरासमे इतरे न सुरे एव। यथा राजसमो मन्त्री राजा भवति। **यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैरिति** गौडीमाध्व्योश्च बहुवचनं **तथा सर्व** इत्येतद्भेदबहुत्वापेक्षं, समुदायापेक्षं वा। ते च पैष्टी च सर्वापेया। इतरथा हि "यथैवैका तथैवोभौ न पातव्यौ द्विजोत्तमैः" इत्येवं बहुवचनमिदं न व्याख्यायेत। एवं चात्र श्लोके ब्राह्मणानां गौड़ीमाध्व्योः प्रतिषेधः, पूर्वश्लोके तु मुख्यसुरा त्रयाणामपि पतिषिद्धा। एतच्च सामर्थ्याद् विज्ञायते। सामर्थ्यञ्च वाक्यद्वयारम्भः। तद् यतः श्लोकेऽस्मिंस्त्रयाणां द्विजानां प्रतिषिध्येरन् ततः पूर्वश्लोकारम्भोऽनर्थकः स्यात्। आरब्धस्तु यतः पुनरुक्तत्वात् शास्त्रवाक्ययोः पूर्वश्लोकेन मुख्यसुरा त्रयाणामपि प्रतिषिद्धा, उत्तरश्लोके तु गौड़ीमाध्व्योरेव ब्राह्मणानां प्रतिषेधः। एवञ्च सति **यथैवैका तथा सर्वा** इत्येतदुपपन्नं भवति। **द्विजोत्तम**ग्रहणं चात्र ये च "द्विजातिभिः" इत्यत्र पठन्ति, तेषां द्विजातिशब्दाद् द्विजोत्तमार्थ एव विज्ञेयः, त्रयाणां साधारणोऽपि सन्नेतत् स्यात् सार्थ्यात्। तथा चोत्तरश्लोकेषु त्रिषु ब्राह्मणग्रहणानि लिङ्गान्यस्यैवार्थस्य प्रदर्शयिष्यामः ॥ ९३ ॥

**यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् ॥**
**तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥ ९४ ॥**

(१) **मेधातिथिः**। **यक्षादयो** निन्द्याः प्राणिनो भक्ष्याभक्ष्यविवेकशून्या मांसमभक्षयन्। सुरा चासवश्च **सुरासवम्**। 'जातिरप्राणिनाम्' इत्येकवद्भावः। आसवोऽत्र मद्यविशेष एव, ईषन्मद्याद्भिन्नं गोबलीवर्द्दवदिहोपादानम्। **देवानामश्नता** देवदेयानि हवींषि चरुपुरोडाशादीनि दर्शपूर्णमासोदितानि ब्राह्मणस्याशितुं युक्तानि, न पिशाचाद्यन्नं मद्यमांसादीनि ॥ ९४ ॥

(२) **सर्वज्ञनारायणः**। न केवलं सुरा ब्राह्मणानामपेया किंतु सुरावन्मद्यासवमांसानि क्षत्रियादिभक्ष्याण्यपि ब्राह्मणस्याभक्षणीयान्याह **यक्ष इति**। **यक्षाः** कुबेरानुचराः। **राक्षसाः** रावणाद्याः। **पैशाचा** वेतालाद्याः। **तेन** मद्यादीनां रजस्तमःप्रधानतोक्ता। तेन तदाहारता सत्त्वप्रधानस्य विप्रस्यायुक्तेत्यर्थः। मद्यं त्रिविधं सुरातोऽन्यन्मदहेतुः। **आसवो** मद्यसुराप्रकृतिद्रव्यजो मदहेतुः। **देवानां** सात्त्विकानां **हविर्भक्ष्यमश्नता**ऽशितुं योग्येन ॥ ९४ ॥

(३) **कुल्लूकः**। मद्यमत्र निषिद्धपैष्टीगौडीमाध्वीव्यतिरिक्तं नवविधं बोद्धव्यम्। तान्याह पुलस्त्यः॥ पानसद्राक्षमाध्वीकं खार्जूरतालमैक्षवम्॥ माध्वीकं टांकमाध्वीकं मैरेयं नारिकेरजम्॥ सामान्यानि द्विजातीनां मद्यान्येकादशैव च॥ द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतम्॥ मांसं च प्रतिषिद्धं सुरा च त्रिप्रकारा प्रोक्ता। असूयत इति **आसवो** मद्यानामवस्थाविशेषः सद्यः कृतसंसाधनः संजातमद्यस्वभावः। यमधिकृत्येदं पुलस्त्योक्तप्रायश्चित्तम्॥ द्राक्षेक्षुटंकखर्जूरपनसादेश्च यो रसः॥ सद्यो जातन्तु पीत्वा तु त्र्यहाच्छुध्येद्द्विजोत्तमः॥ एव मद्यादिचतुष्टयं यक्षरक्षःपिशाचसंबन्ध्यन्नं ततस्तद्ब्राह्मणेन देवानां हविर्भक्षयता नाशितव्यम् निषिद्धायाः सुराया इहोपादानं यक्षरक्षःपिशाचान्नतया निन्दार्थम्। अत्र केचिद्देवानामश्नता हविरिति पुल्लिंगनिर्देशाद्ब्राह्मणस्य पुंस एव मद्यप्रतिषेधो न स्त्रिया इत्याहुस्तदसत्॥ 'पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत्। इहैव सा शुनी गृध्री सूकरी चोपजायते॥' इति याज्ञवल्क्यादिस्मृतिविरोधात्॥ ९४॥

(४) **राघवानन्दः**। किंच **यक्ष इति**। **मद्यं** नवविधं **सुरा** च त्रिविधा। तथा च **पुलस्त्यः**। पानकं वार्क्षमाधूकं खार्जूरं तालमैक्षवम्॥ माक्षीकं टाङ्कमाध्वीकं मैरेयं नारिकेरिजम्॥ समानानि द्विजातीनामद्यान्येकादशानि तु॥ द्वादशं तु सुरामद्यं सर्वेषां मध्यमं स्मृतमिति॥ **आसवं** सद्यः कृतसंधानेन प्राप्तमद्यभावम्। एतत्सर्वं विप्राभक्ष्यम्। अनदने हेतुर्देवानां हविर्यज्ञावशिष्टमन्नमश्नन्ति ते। मांसभतामं यक्षरक्ष इति लिङ्गात्॥ ९४॥

(५) **नन्दनः**। ब्राह्मणस्य मद्यवर्जने युक्तमाह **यक्षरक्ष** इति। **मद्यं** मदकरं द्रव्यं **मासमित्य**नतव्यंप्रसङ्गादुक्तं सुरापैष्टी आसवो माध्वी गौडी च हविर्हविःशेषम्॥ ९४॥

(६) **रामचन्द्रः**। **यक्षरक्षःपिशाचान्नं** कृतं मद्यादि हविः तद्ब्राह्मणेन **नात्तव्यं** न अदनीयम्॥ ९४॥

(८) **गोविन्दराजः**। **यक्षरक्षःपिशाचान्नमि**ति। **मद्यं** सुराव्यतिरिक्तम्। **मांसं** यदभक्ष्यम्। **सुरा** त्रिविधाऽन्याऽऽसवमरिष्टापवादि **यक्षरक्षःपिशाचान्नम्** एतत्संबन्धि अन्नमतस्तद्ब्राह्मणेन देवोद्देशेन हविर्भक्षयता नाशयितव्यं देवानामश्नता हविरिति लिङ्गात्। पुंस एव ब्राह्मणस्य मद्यप्रतिषेधो न स्त्रिय इत्याहुस्तदसत्। सुरालशुनपलाण्डुगृञ्जनकानि अभक्ष्याणि स्युः ब्राह्मणी सुरापी भवति नैनां देवाः पतिलोकं नयन्तीहैव सा दुर्मतिः क्षीणपुण्याप्सु जलोङ्कवेति शुक्तिका वा। पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत्। इहैव सा शुनी गृध्री शूकरी चापि जायते इति शङ्खवशिष्ठयाज्ञवल्क्यैः ब्राह्मण्या अपि निषेधस्मरणात्॥ ९४॥

(९) **भारुचिः**। इति लिङ्गात् सत्यपि जात्यर्थविशेषे स्त्रीनामप्रतिषेधः। एवञ्च सत्यनेनाप्रतिषेधदर्शनेन क्वचिद् ब्राह्मण्यः पिबन्ति। यथा च स्त्रीपुंसयोः सत्यप्येकजातित्वे

प्रायश्चित्तभेदः, एवमयमपि प्रतिषेधविशेषो विज्ञेयः। यथा "आश्विनं भक्षयन्ति" इति च सुराग्रहे सौत्रामण्यां कर्माङ्गत्वाददोषः, मांसवत्, एवं वाजपेये त्विति। अयमपरोऽर्थवादस्सुराप्रतिषेधविधेः ॥ ९४ ॥

**अमेध्ये वा पतेन्मत्तो वैदिकं वाप्युदाहरेत् ॥**
**अकार्यमन्यत्कुर्याद्वा ब्राह्मणो मदमोहितः ॥ ९५ ॥**

(१) **मेधातिथिः।** **अमेध्ये पतनं** देवान्नाशनवदर्थवादः। "ननु च वैदिकोदाहरणं कथमकार्यम्"। अत्रोच्यते। तदपेक्षयाऽन्यदकार्यं **कुर्यादिति**। कथमकार्यम्। अशुचेर्वेदाक्षरोच्चारणप्रतिषेधात् ॥ ९५ ॥

(२) **सर्वज्ञनारायणः।** मद्ये ब्राह्मणस्य दृष्टप्रत्यवायमप्याह **अमेध्य** इति। वैदिकमुपाहरेत् उच्छिष्टादि काले ॥ ९५ ॥

(३) **कुल्लूकः।** ब्राह्मणो मद्यपानमदमूढबुद्धिः सन् अशुचौ वा पतेद्वेदवाक्यं वोच्चारयेद्ब्रह्महत्याद्यकार्यं वा कुर्यादतस्तेन मद्यपानं न कार्यमिति पूर्वस्यैवानुवादः ॥ ९५ ॥

(४) **राघवानन्दः।** तत्रैव दृष्टार्थतामाह **अमेध्ये**ति द्वाभ्याम्। अवैदिकं म्लेच्छभाषितम्। **अकार्यं** स्वकन्यागमनादि। तत्र हेतु**र्मदमोहितः** मद्येन कृतवैचित्त्यः ॥ ९५ ॥

(५) **नन्दनः।** इतश्चापि ब्राह्मणस्य मद्यं वर्ज्यमिति श्लोकद्वयेनाह **अमेध्ये वा पतेन्मत्त** इति। **अमेध्ये**ऽगम्यागमनादौ **वैदिकं** वेदरहस्य**मुदाहरेत्** श्रवणानर्हेषु ॥ ९५ ॥

(६) **रामचन्द्रः।** मत्तः द्विजः **अमेध्ये** पुरीषादौ वा पतेत् पक्षान्तरवैदिकं वोदाहरेत् ॥ ९६ ॥

(८) **गोविन्दराजः।** **अमेध्य** इति। ब्राह्मणः क्षीवः सन्नशुचौ वा निपतेद्वेदवाक्यं वोच्चारयेद्ब्रह्महत्याद्यकार्यं वा मदव्यामूढः कुर्यादतस्तेन मद्यं न पातव्यं इत्यपरोऽर्थवादः ॥ ९५ ॥

(९) **भारुचिः** अर्थवादोऽयं, न हेतुः। हेतुत्वे हि स्वल्पिका पीयेत, यावती पीता मदं न जनयति। अमेध्ये पतनादौ चाकार्ये न प्रवर्तयति। अथवा सप्रत्यनीकी मांसभक्षणेन सह पीयमाना अमेध्यपतनादिदोषं मदभावं न जनयतीति कृत्वा तथा पीयेत ॥ ९५ ॥

**यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत् ॥**
**तस्य व्यपैति ब्राह्मण्यं शूद्रत्वं च स गच्छति ॥ ९६ ॥**

(१) **मेधातिथिः।** अधीते वेदे संस्काररूपेणावस्थितं हृदयं ब्रह्मशब्देनोच्यते। अतो हृदये **मद्येनाप्लाविते**। स शूद्रतां गच्छति। ब्राह्मण्यवचनं सर्वप्रकारमद्यनिषेधार्थं ब्राह्मणस्य। क्षत्रियवैश्ययोः पैष्टया एव निषेध इति दर्शयति ॥ ९६ ॥

(२) **सर्वज्ञनारायणः।** **ब्रह्म** वेदः। **शूद्रत्वं** वर्णत्रयबाह्यत्वम् ॥ ९६ ॥

(३) **कुल्लूकः।** **यस्य** ब्राह्मणस्य कायगतं ब्रह्म वेदः संस्काररूपेणावस्थितः एकदेहत्वात् जीवात्मैकवारमपि मद्येनाप्लाव्यते तथा चैकवारमपि यो ब्राह्मणो मद्यं पिबति ब्राह्मण्यं व्यपैति शूद्रतां समाप्नोति तस्मान्मद्यं सर्वथैव न पातव्यम् ॥ ९६ ॥

(४) **राघवानन्दः।** **ब्रह्म** वेदः। **शूद्रत्वं** शूद्रवद्वेदाभ्यासादेर्बहिष्कृतत्वं पतितत्वादस्य शूद्रस्यापकृष्टत्वात् संभाषणादित्यागोऽपि ॥ ९६ ॥

(५) **नन्दनः।** **ब्रह्म** ब्राह्मण्यम् ॥ ९६ ॥

(६) **रामचन्द्रः।** **यस्य** ब्राह्मणस्य कायगतं ब्रह्म मद्येनाप्राप्यते सकृत् **तस्य** ब्राह्मणस्य ॥ ९६ ॥

(८) **गोविन्दराजः।** **यस्येति**।। तस्य व्यपैति ब्राह्मण्यमवगच्छति शूद्रताम् ॥ यस्य ब्राह्मणस्य शरीरे संस्काररूपेणावस्थितो वेदः सकृदपि मद्येन पूर्यते तस्य ब्राह्मण्यं व्यपगच्छति शूद्रत्वं चासौ व्रजतीत्यपि पूर्वार्थ एव ॥ ९६ ॥

(९) **भारुचिः।** आत्मस्थां ब्रह्मभावनाख्यं यस्मात् अतः **कायगत**मित्यर्थवादोऽयम्। **ब्राह्मण**ग्रहणं चात्र श्लोकत्रये धारणार्थम्। अनन्तरश्लोके गौडीमाध्व्योः ब्राह्मणप्रतिषेधात् तदपेक्षया। अथ तु पूर्वश्लोकप्रतिषेधापेक्षोऽपि ततः पूर्वस्य प्रतिषेधस्योत्तरस्य च सामान्येनामी श्लोकत्रयार्थवादाः। एतस्मिंञ्च पक्षे ब्राह्मणग्रहणं निदर्शनार्थं यथासंभवं विज्ञेयम् अन्ये त्वुक्तप्रतिषिद्धत्वात् क्षत्रियवैश्ययोर्विकल्पं मन्यन्ते गौडीमाध्व्योः प्रतिषेधस्य। तदिदं युक्तमयुक्तं वेति विचारणीयं, ग्रंथगौरवभयात्तु न लिख्यते। किं पुनरयं **मद्य**शब्दो मदनिमित्त उत जातिनिमित्तः। किं चातः यदि जातिनिमित्तः सर्वावस्थामपेयम्। अथ मदगुणनिमित्ते ततोऽपि नष्टे तस्मिन्नल्पं वा पेयं स्यात्। यत इदमुच्यते गुणनिमित्तोऽयं प्रतिषेधः। एवं सति प्रत्यस्तमितमदगुणं मद्यं कुत्रचिदाचरन्ति ब्राह्मणाः। तथा चोक्तम्, "अमेध्ये वा पतेन् मत्तः" इत्येवमादिषु मदगुणनिमित्त एव प्रतिषेधो मद्यस्येति विज्ञायते। अनुत्पन्नमदगुणं च माध्वीकमपर्युषितं च पीयते। यतः गुणापेक्ष एव प्रतिषेधः। अन्येऽपि च नाचरन्ति विनष्टमदगुणमपि सन् मद्यम्। तथा च वक्ष्यति—"सुराभाण्डस्थितस्तथा" इत्येवमादि ॥ ९६ ॥

**एषा विचित्राऽभिहिता सुरापानस्य निष्कृतिः ॥**
**अत उर्ध्वं प्रवक्ष्यामि सुवर्णस्तेयनिष्कृतिम् ॥ ९७ ॥**

(१) **मेधातिथिः।** उक्तप्रयोजनौ पूर्वोत्तरश्लोकौ ॥ ९७ ॥

(२) **सर्वज्ञनारायणः।** विचित्रा स्मृत्यन्तरोक्ता निष्कृतिः। साहित्येन विविधा ॥९७॥

(३) **कुल्लूकः।** इदं सुरापानजनितपापस्य नानाप्रकारं प्रायश्चित्तमभिहितं तस्मात्परं ब्राह्मणसुवर्णहरणपापस्य निष्कृतिं वक्ष्यामि ॥ ९७ ॥

(४) **राघवानन्दः।** सुरापाणां प्रायश्चित्तमुपसंहरन्स्वर्णस्तेयप्रायश्चित्तं प्रतिजानीते **एषे**ति। विचित्रा (अग्निवर्णामित्यादिना) नानाप्रकारा मद्यस्तस्यापि नानात्वात् ॥ ९७ ॥

(५) **नन्दनः।** **विचित्रा** विविधा ॥ ९७ ॥

(६) **रामचन्द्रः।** **एषा** निष्कृतिः पापानि विचिन्त्याहरेत् ।। ९७ ।।

(८) **गोविन्दराजः।** **एषेति।** सुरापानजनितपापस्य नानाप्रकारा संशुद्धिरुक्ता तस्मा-त्परं ब्राह्मणसुवर्णचौर्यस्य संशुद्धिं वक्ष्यामि ।। ९७ ।।

**सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु ।।**
**स्वकर्म ख्यापयन् ब्रूयान्मां भवाननुशास्त्विति ।। ९८ ।।**

(१) **मेधातिथिः।** ब्राह्मणसुवर्णस्तेये एतत्प्रायश्चित्तम्। विप्रग्रहणं सर्ववर्णप्रदर्शनार्थम्। क्षत्रियादीनामन्यस्य प्रायश्चित्तस्यासमाम्नानात्। **मामनुशास्तु** निग्रहं करोतु। राजा गत्वा च वक्तव्यः। अत्र च राजशब्दो देशेश्वरवचन एव न क्षत्रियजात्यपेक्षः ।। ९८ ।।

(२) **सर्वज्ञनारायणः।** सुवर्णस्तेयकृत् ब्राह्मणसंबन्धिपरिमितसुवर्णचोरः। **विप्र** इति न केवलं क्षत्रियादयो विप्रोऽपीत्यर्थः। एतच्च परमतमिति स्फुटीभविष्यति ।। ९८ ।।

(३) **कुल्लूकः।** अपहृत्य सुवर्णं तु ब्राह्मणस्य यतः स्वयमिति शातातपस्मरणात् ब्राह्मणसुवर्णचौरो ब्राह्मणो राजानं गत्वा ब्राह्मणसुवर्णापहारं स्वीयं कर्म कथयन्मम निग्रहं करोत्विति ब्रूयात्। ब्राह्मणग्रहणं मनुष्यमात्रप्रदर्शनार्थम्। प्रायश्चित्तीयते नर इति प्रकृतत्वात्क्षत्रियादीनां च प्रायश्चित्तान्तरानभिधानाम् ।। ९८ ।।

(४) **राघवानन्दः।** तदेवाह सुवर्णमिति त्रिभिः। सुवर्णस्तु। पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडशेति। तदेवाह विप्र इति ब्राह्मणेतरमात्रोपलक्षकं प्रायश्चित्तीयते नर इत्युपक्रमात् न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितमित्युक्तेश्च ।। ९८ ।।

(५) **नन्दनः।** **सुवर्णं** ब्राह्मणसुवर्णं **विप्र**ग्रहणं क्षत्रियादीनामप्युपलक्षणार्थम् ।। ९८ ।।

(८) **गोविन्दराजः।** **सुवर्णस्तेयकृदिति।** ब्राह्मणसुवर्णहारी त्विति याज्ञवल्क्यस्मरणाद् ब्राह्मणसुवर्णहारी राजानं गत्वा सुवर्णापहारं कर्म प्रकाशीकुर्वन्निग्रहं कुर्विति ब्रूयात् ।। ९८ ।।

**गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम् ।।**
**वधेन शुध्यति स्तेनो ब्राह्मणस्तपसैव तु ।। ९९ ।।**

(१) **मेधातिथिः।** **मुशलं** दण्डविशेष आयसो दारुमयो वा। **सकृत्स्वयमिति** च विवक्षितम्। **वधेन शुध्यति।** सकृत्प्रहारेण वधो मरणफलो वा भवतु मा वाऽस्तु तादृशेन मुशलप्रहारेण शुद्धो भवति। **ब्राह्मणस्तु तपसा** वक्ष्यमाणेन। अत्रापि ब्राह्मणग्रहणमविवक्षितम्। तथा चोत्तरत्र द्विजग्रहणम्। यद्यपि च कृष्णलग्रहणे महापातकं तथापि मरणान्तं प्रायश्चित्तं सुवर्णशतहरणे द्रष्टव्यम्। उक्तं दण्डप्रायश्चित्तं तुल्यरूपेण। तत्र चोक्तं 'शताद-भ्यधिके वध' इत्यतोऽर्वाक् कल्पना कार्या। यस्तु 'मरणात्पूतो भवति' इति प्रायश्चित्तान्तरं, तस्मिन् राजा शस्त्रं उदुंबरं आदद्यात्तस्मात्तं प्रमापयेन्मरणात्पूतो भवतीति विज्ञायते। यदा क्षत्रियादिर्हर्ता स्वामी च गुणवांस्तत्रैतद्विज्ञायते। दातुमुद्युक्तं यदा स्यादिति प्रयोजने प्रयोजनोपहारास्तदा वा शिष्टं निष्कान् को धृताक्तो गोमयादिना या प्रकृतिः (?) ।। ९९ ।।

(२) **सर्वज्ञनारायणः।** **वधेन** तेन घातेन मृतोऽमृतो वा। यत्तूक्तं विप्रोऽपीति। तन्निरस्यति ब्राह्मण इति। **तपसा** व्रतेनाऽकामकृतात्। कामकृतात्तु स्मृत्यन्तरोक्तमरण-प्रकारोत्पादनरूपेण तपसेत्यर्थः। चेति पूर्वपक्षनिवृत्तौ ॥ ९९ ॥

(३) **कुल्लूकः।** स्कन्धेनादाय मुसलमित्यादेरुक्तत्वात्तेनार्पितमुसलादिक गृहीत्वा स्तेय-कारिणं मनुष्यमेकवारं राजा स्वयं हन्यात्। स च स्तेनो **वधेन** मुसलाभिघातेन हतो मुक्तोऽपि वा शुचिरिति याज्ञवल्क्यस्मरणात्। मृतो वा मृतकल्पो वा जीवन् तस्मात्पापान्मुच्यते ब्राह्मणः पुनस्तपसैव वेत्येनकारदर्शनात्। तथा च'न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थित' मिति तपसैव शुध्यति अत एव मन्वर्थव्याख्यानपरे **भविष्यपुराणे** यदेतद्वचनं वीरब्राह्मणस्तपसैव वा। तत्रैव कारणाद्विद्वन्ब्राह्मणस्य सुराधिप'॥ तपसैवेत्यनेनेह प्रतिषेधो वधस्य तु' वा शब्दश्च क्षत्रियादीनामपि तपो विकल्पार्थः। ब्राह्मणस्य तु तप एवेति नियमो न तु ब्राह्मणस्यैव तपः। अत एव **भविष्यपुराणे** इतरेषामपि विभो तपो न प्रतिषिध्यत इति॥ तदेव तप आह ॥ ९९ ॥

(४) **राघवानन्दः।** अत एवाह **तपसैवेति**। शुध्यति जीवन् मृतो वा मृतकल्पो वा जीवंस्तस्मात्प्रमुच्यत इति याज्ञवल्क्योक्तेः। वा शब्दो गायत्रीजपविकल्पार्थः। तथा च **चतु-र्विंशतिमतम्** गायत्र्यास्तु जपन्कोटिं ब्रह्महत्यां व्यपोहति। लक्षाशीतिं जपेद्यस्तु सुरापाना-त्प्रमुच्यते। पुनाति हेमहर्तारं गायत्र्या लक्षसप्ततिः। गायत्र्या लक्षषष्टया तु मुच्यते गुरु-तल्पग" इति ॥ गुरुतरत्वात्प्रकाशाविषयमिदं जपतो नास्ति पातकमिति च ॥ ९९ ॥

(५) **नन्दनः।** 'सकृद्धन्यादित्यस्यायमभिप्रायो व्याख्यातः स्मृत्यन्तरेण, तस्मात्तु मुसलं गृह्णन्यथा प्राणेन भूपतिः। सकृद्धन्यान्मृतो वापि जीवन्नपि विशुध्यति। मृते जीवति वा तस्मिन्पार्थिवोऽपि विशुध्यती'ति। 'वा' शब्देन ब्राह्मणस्य पक्षान्तरमुक्तं क्षत्रियादौ वध एव ॥ ९९ ॥

(६) **रामचन्द्रः।** **स्तेनः** ब्राह्मणसुवर्णचौरः ॥ ९९ ॥

(८) **गोविन्दराजः।** **गृहीत्वेति**। स्कन्धेनादाय मुशलमित्याद्युक्तत्वात्तेनार्पितं मुशलादि गृहीत्वा तं स्तेनं न जातु ब्राह्मणं हन्यादित्युक्त्वा तं ब्राह्मणवर्जितमेकवारं राजा तं हन्यात् **स च स्तेनो** वधेन तत्पापात्प्रमुच्यते। तपसा वक्ष्यमाणेन ब्राह्मणो विध्यति कान्तनिषेधेन राज्ञा हन्यते तदा सोऽपि शुध्यत्येव ॥ ९९ ॥

**तपसाऽपनुनुत्सुस्तु सुवर्णस्तेयजं मलम् ॥**
**चीरवासा द्विजोऽरण्ये चरेद्ब्रह्महणो व्रतम् ॥ १०० ॥**

(१) **मेधातिथिः।** इति च द्वादशवार्षिकधर्मानुवादात्तस्यैवातिदेशो न ब्रह्महत्यायाः, प्रायश्चित्तान्तरम्। **ब्रह्महणि यद्व्रतमुक्तं तच्चरेदिति** योजना। **अपनुनुत्सुरपनेतुमिच्छुः।** शुद्धिं चिकीर्षतीति यावत् ॥ १०० ॥

(२) **सर्वज्ञनारायणः।** ब्रह्महणि निमित्ते यद्व्रतमुक्तं द्वादशवार्षिकादि तज्जाति-शक्त्याद्यपेक्षया द्रव्यस्योत्तमाधमसंबन्धितया च यथायोगमुन्नेयमित्यर्थः ॥ १०० ॥

(३) **कुल्लूकः** : तपसा स्वर्णस्तेयोत्पन्नं पापं द्विजो निर्हर्त्तुमिच्छन्नरण्यग्रहणात्प्राथम्याच्च ब्रह्महणि यद्व्रतमुक्तं तत्कुर्यात्। एतच्च द्वादशवार्षिकं क्लेशगौरवात्क्षत्रियादीनां मरणेन विकल्पितत्वाच्च ब्राह्मणसंबन्धिनः सुवर्णापहरणे ।। पञ्चकृष्णलकोमाषस्ते सुवर्णस्तु षोडशेति सुवर्णपरिमाणं द्रष्टव्यं न ततो न्यूनस्य परिमाणापेक्षया मनूक्तपरिमाणस्य ग्रहीतुं न्याय्यत्वात्। यत्त्वधिकपरिमाणं भविष्यपुराणे श्रूयते तत्तथानुबन्धविशिष्टापहारे तथाविधप्रायश्चित्तविषयमेव : तथा **भविष्यपुराणे** क्षत्रियाद्यास्त्रयो वर्णा निर्गुणा ह्यघतत्पराः ।। गुणाढ्यस्य तु विप्रस्य पञ्चनिष्कान्हरन्ति चेत् ।। निष्कानेकादश तथा दग्ध्वात्मानं तु पावके ।। शुध्येयुर्मरणाद्वीर चरेद्ब्रह्मात्मशुद्धये ।। १०० ।।

(४) **राघवानन्दः** । एतदेव तपः कथं कार्यमित्यपेक्षां पूरयति **तपसेति** । **अपनुनुत्सुः** खण्डयितुमिच्छुः । ब्रह्महणो व्रतमिति द्वादशाब्दसंख्यामुण्डनकुटीवासभैक्षचर्यमित्यतिदेशार्थं न तु तत्स्वरूपप्रदर्शनार्थम्। ब्राह्मणस्य निष्कचतुष्टयातिरिक्तसुवर्णापहारे क्षत्रियादीनां मरणमेव। तथा च **भविष्ये** क्षत्रियाद्यास्त्रयो वर्णा निर्गुणा द्यूततत्पराः ।। गुणाढ्यस्य तु विप्रस्य पञ्चनिष्कान्हरन्ति चेत् ।। निष्कानेकादशान्वापि दग्ध्वात्मानं तु पावके ।। शुध्यन्ति मरणाद्वीर तन्निर्यात्यातु तस्य तदिति ।। निर्यात्यातावत्सुवर्णस्य दानेन एकादशेत्यभ्युच्चयमात्रं ते यदि साधव इति ।। १०० ।।

(५) **नन्दनः** । **अपनुनुत्सुरपनोदितुमिच्छन्** ।। १०० ।।

(६) **रामचन्द्रः** । **मलं** पापं तपसाऽपनुनुत्सुः ब्रह्महणो व्रतं द्वादशवार्षिकादि व्रतं चरेत् ।। १०० ।।

(८) **गोविन्दराजः** । **तपसाऽपनुत्तुमिच्छुः सुवर्णस्तेयजं मलम्** ।। चीरवासा द्विजोऽरण्ये चरन्ब्रह्महणि व्रतम् ।। तपसा सुवर्णस्तेयोत्पन्नं पापं द्विजो हर्तुमिच्छन् वस्त्रखण्डच्छन्नोऽरण्यग्रहणात्प्राथम्याच्च द्वादशवार्षिकं ब्रह्महणि यदव्रतं उक्तं तत्कुर्यात् ।। १०० ।।

(९) **भारुचिः** । त्रिभिः श्लोकैः सुवर्णस्तेयप्रायश्चित्तविधिः । क्षत्रियादीनां च विशेषेण प्रायश्चित्तविधेरनाम्नातत्वात् **सुवर्णस्तेयकृद् विप्र** इति यदिदं विप्रग्रहणमेतत् सर्ववर्णप्रदर्शनार्थं विज्ञेयम्। तथा "ब्राह्मणस्तपसैव वा" इति यदुक्तमत्रेदमुच्यते। न हि तपश्शक्यते क्षत्रियादिवर्णानां प्रतिषेद्धुम्। अपरे त्वेतस्माद् यत्नात् ब्राह्मणस्यैवैकस्य तपः नेतरेषां वर्णानामिति मन्यन्ते। राजाभिगमनस्य च राजधर्मेषु सिद्धस्यापि सतः पुनरिहोपदेशः प्रायश्चित्तार्थः, तत्र च राजदण्डार्थः, तपोविधित्सया वा पुनर्ग्रहणम्। ब्राह्मणस्य च वधो नास्तीति तत्रैवोक्तम्। निगदव्याख्यातमन्यत् ।। १०० ।।

**एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः ।।**
**गुरुस्त्रीगमनीयं तु व्रतैरेभिरपानुदेत् ।। १०१ ।।**

(१) **मेधातिथिः** । "ननु च वधेन शुध्यति स्तेनस्तपसा चेति द्वयस्य प्राक्तनत्वादेतैरिति बहुवचनं न सम्यक्" । एतदेव ज्ञापकं—एष निःशेषोक्तानप्यनुक्तान् कल्पेतानुबन्धाद्यपेक्षया ।

गुरुस्त्रीगमनप्रयोजनं **गुरुस्त्रीगमनीयम्**। निमित्तमपि प्रयोजनमुच्यते, प्रयोजयति प्रवर्तयतीति ।। १०१ ।।

(२) **सर्वज्ञनारायणः**। गुरोः पितुः स्त्री गुरुस्त्री माता तद्गमनीयं तदभिगमनम् ।। १०१ ।।

(३) **कुल्लूकः**। ब्राह्मणसुवर्णस्तेयजनितपापमेभिर्व्रतैर्द्विजो निर्हरेद्व्रततपसोर्द्वयोरुक्तत्वात्। **एतैरिति** बहुवचनं संबन्धापेक्षया मनूक्तमपि प्रायश्चित्तं कल्पनीयमिति ज्ञापनार्थम्। गुरुस्त्रीगमननिमित्तं पुनः पापमेभिर्वक्ष्यमाणैः प्रायश्चित्तैर्निर्हरेत् ।। १०१ ।।

(४) **राघवानन्दः**। सुवर्णस्तेयप्रायश्चित्तमुपसंहरन्गुरुतल्पप्रायश्चित्तमाह **एतैरिति** पञ्चभिः। एतैरिति बहुवचनेन याज्ञवल्क्योक्तं व्रतमसूचि ।। अनिवेद्य नृपे शुध्येत्सुरापव्रतमाचरन्। आत्मतुल्यं सुवर्णं वा दद्याद्वा विप्रतुष्टिकृदिति ।। गुरुस्त्रीगमनीयं तद्भागाय गमननिमित्तं पापम्। **एभिः** वक्ष्यमाणैः ।। १०१ ।।

(५) **नन्दनः**। एतैरुक्तैर्व्रतैरिति बहुवचनग्रहणमतिदिष्टस्य ब्रह्महत्याव्रतस्य बहुत्वात **गुरुस्त्रीगमनीयं** गुरुस्त्रीगमनभवं **एभिर्वक्ष्यमाणैः** ।। १०१ ।।

(६) **रामचन्द्रः**। गुरुस्त्रीगमने पापं **एभिर्व्रतैः** वक्ष्यमाणलक्षणैः अपनुदेत् दूरं कुर्यात् ।। १०१ ।।

(८) **गोविन्दराजः**। **एतैरिति**। ब्राह्मणः सुवर्णस्तेयजनितं पापमेभिर्व्रतैर्द्विजो निर्हरेत्। अथ तपसोऽर्धयोरुक्तत्वादेतैरिति बहुवचनमनुमन्वाद्यपेक्षानुक्तमपि कल्पमिति ज्ञापनार्थम्। गुरुभार्यागमननिमित्तं पुनः पापमेभिर्वक्ष्यमाणैः प्रायश्चित्तं निर्हरेत्। गुरुशब्द आचार्यः पिता च ।। १०१ ।।

**गुरुतल्प्यभिभाष्यैनस्तल्पे स्वप्यादयोमये ।।**
**सूर्मीं ज्वलंतीं वाश्लिष्येन्मृत्युना स विशुध्यति ।। १०२ ।।**

(१) **मेधातिथिः**। **गुरुतल्पगः**। गुरुतल्पीति वा पाठः। तल्पीति मत्वर्थीयेन विशिष्ट एव स्त्रीपुंसयोः संसर्ग उच्यते। **गुरुराचार्यः** पिता चेति। **तल्पशब्दो** दारवचनः। आचार्याणीं गत्वेदं प्रायश्चित्तम्। अपरा मातेव मातासमानजातीयायां गमने। इमानि त्रीणि प्रायश्चित्तानि कल्प्यते बुद्धिपूर्वं च। **अभिभाष्यैनः** पापं विख्याप्य। **तल्पे** शयनेऽग्निस्पर्शे**ऽयोमये** शयीत। **मृत्युना शुध्यतीति** वचनात्। **सूर्मिः** तप्ता स्त्रीप्रकृतिरयोमयी **तामाश्लिष्येदा**लिंग्येत् ।। १०२ ।।

(२) **सर्वज्ञनारायणः**। **गुरुतल्पो** गुरुतल्पगः। **अभिभाष्य** कथयित्वा। **अयोमये** शयने **तप्ते** तापेन मृत्युहेतौ। **सूर्मीं** लोहप्रतिमाम् ।। १०२ ।।

(३) **कुल्लूकः**। निषेकादीनि कर्माणीत्युक्तत्वाद्गुरुः पिता **तल्पं** भार्या गुरुतल्पं गुरुभार्या तद्गामी गुरुभार्यागमनपापं विख्याप्य लोहमये तप्तशयने स्वप्यात् लोहमयीं स्त्रीप्रकृतिं कृत्वा ज्वलंतीमालिङ्ग्य मृत्युना स विशुद्धो भवति ।। १०२ ।।

(४) **राघवानन्दः**। तल्पादौ ज्ञानतः सवर्णादिगुरुपत्नीविषयरेतोविसर्गपर्यन्तं तावदाह **गुर्विति** द्वाभ्याम्। गुरुतल्पीति मत्वर्थीयेन पाठेन संयोगविशेषः प्राप्यत इति **मेधातिथिः। अभिभाष्य** विख्याप्य। **एनः** पापम्। अयोमये शयने। **सूर्मी** तादृशीं प्रतिकृतिं वा **ज्वलन्तीम**ङ्गाराकारां **श्लिष्येदा**लिङ्गेत्॥ १०२॥

(५) **नन्दनः**। अयोमये तल्प इति शेषः **सूर्मी** स्थूणाम्॥ १०२॥

(६) **रामचन्द्रः**। **गुरुतल्पी** सभार्यां **एनः अभिभाष्य** उक्त्वा **अयोमये तल्पे** स्वप्यात् **सूर्मी ज्वलन्तीं** लोहप्रतिमां **आश्लिष्येत्। सः मृत्युना विशुध्यति**॥ १०२॥

(८) **गोविन्दराजः**। **गुरुतल्पीति**। गुरुभार्यागमनपापं अभिभाष्य ज्वलदायसे शयने शयीत। स्त्रीप्रतिकृतिं वा कार्ष्णायसीं कृतामिति संवर्तस्मरणादयोमयीं ज्वलन्तीं आलिंगेदेवं मरणेनासौ शुध्यति॥ १०२॥

**स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ॥**
**नैर्ऋतीं दिशमातिष्ठेदानिपातादजिह्मगः॥ १०३॥**

(१) **मेधातिथिः**। **उत्कर्तनं न** कल्पेन शोधनम्। शस्त्राद्याक्षिप्तम्। शक्तिः सर्वत्र सहकारिणी। येन शक्येत छेत्तुं तत्सामर्थ्याल्लभ्यते। प्रत्यग्दक्षिणा **नैर्ऋती दिक्। अजिह्मगो**ऽकुटिलगः। श्वभ्रकूपादि न परिहरेदित्यर्थः। कुड्यादिषु प्रतिपातनं हि तदापाताद्गच्छेदेव॥ १०३॥

(२) **सर्वज्ञनारायणः। वृषण**मण्डकोशः। **आतिष्ठेत्** गच्छेत्। **आनिपाताद**मरणात्। **अजिह्मगो** जलाग्न्यादि परिहारार्थं वक्रगतिमकुर्वाणः॥ १०३॥

(३) **कुल्लूकः**। आत्मनैव वा लिङ्गवृषणौ छित्वाञ्जलौ कृत्वा यावच्छरीरपातमवक्रगतिः सन् दक्षिणपश्चिमां दिशं गच्छेत्। एवं चोक्तप्रायश्चित्तद्वयं गुरुत्वात्सवर्णगुरुभार्याविषयम्। ज्ञानतो रेतोविसर्गपर्यन्तमैथुनविषयम्॥ १०३॥

(४) **राघवानन्दः**। **शिश्नं** लिङ्गं **वृषणौ** मुक्तौ तत्त्रयं **उत्कृत्य** छित्वा आनिपातात्। मरणफलकनिपातपर्यन्तं **अजिह्मगः** अकुटिलवर्त्माऽनुरोधी आतिष्ठेद्गच्छेदित्यन्वयः॥ १०३॥

(५) **नन्दनः**। **आनिपाता**दाशरीरपातात् **अजिह्मगो** यथोपनतमार्गगामी॥ १०३॥

(६) **रामचन्द्रः**। शिश्नवृषणौ **स्वयमुत्कृत्य** छित्वाऽञ्जलावाधाय **नैर्ऋतीं दिशमातिष्ठेत्। अजिह्मगः** जलाग्निपरिहारार्थं वक्रगतिमकुर्वाणः॥ १०३॥

(८) **गोविन्दराजः**। **स्वयमिति**। आत्मनैव वा लिङ्गवृषणमुत्खायाञ्जलौ गृहीत्वा स्पष्टगतिः सन्नाशरीरपाताद्दक्षिणपश्चिमां दिशं गच्छेत्॥ १०३॥

**खट्वाङ्गी चीरवासा वा श्मश्रुलो विजने वने॥**
**प्राजापत्यं चरेत्कृच्छ्रमब्दमेकं समाहितः॥ १०४॥**

**(१) मेधातिथिः।** अबुद्धिपूर्वकं स्वभार्याभ्रान्त्या गमन इदं प्रायश्चित्तम्। द्विजातीयगमने बुद्धिपूर्वकमपि। **चीरं** वस्त्रखण्डम्। **श्मश्रुलो** रूढश्मश्रुः। समानजातीयाया अपि व्यभिचारिण्या गमने लघ्वेव प्रायश्चित्तम्॥ १०४॥

**(२) सर्वज्ञनारायणः।** स्वपितृभार्यान्तरस्य स्वानन्तरजातीयस्य कामाद्गमन आह **खट्वाङ्गीति। खट्वाङ्गं** खट्वाया दण्डस्तच्चिन्हतया धार्यम्। अर्थाच्च स्वानन्तरानन्तरजातीयपितृभार्यागमने स्यार्धम्॥ १०४॥

**(३) कुल्लूकः।** खट्वाङ्गभृद्वस्त्रखण्डाच्छन्नोऽच्छिन्नकेशनखलोमश्मश्रुधारी संयतमना निर्जने वने वर्षमेकं प्राजापत्यं व्रतं चरेत्। एवं च वक्ष्यमाणप्रायश्चित्तलघुत्वात्स्वभार्यादिभ्रमेणाज्ञानविषयं बोद्धव्यम्॥ १०४॥

**(४) राघवानन्दः।** स्वभार्यादिभ्रमेण अज्ञानात् गमने त्वाह **खट्वाङ्गीति।** खट्वाङ्गी खट्वाङ्गः शूलं तद्युक्तः। **चीरवासाः** धृतवस्त्रखण्डः। **श्मश्रुलोऽ**कृतश्मश्रुः। प्राजापत्यं वक्ष्यमाणम्॥ १०४॥

**(५) नन्दनः।** खट्वाङ्गं पृष्ठवंशास्थि॥ १०४॥

**(८) गोविन्दराजः। खट्वाङ्गीति।** खट्वैकदेशभृद्वस्त्रखण्डाच्छन्नो श्मश्रुलोमादितः संयतमना निर्जने वने एकं संवत्सरं प्राजापत्यं वक्ष्यमाणं कृच्छ्रं वा कुर्यात्॥ १०४॥

**चान्द्रायणं वा त्रीन्मासानभ्यस्येन्नियतेन्द्रियः॥**
**हविष्येण यवाग्वा वा गुरुतल्पापनुत्तये॥१०५॥**

**(१) मेधातिथिः।** अतिदिष्टगुरुभावानां मातुलपितृव्यादीनां या भार्यास्तद्गमन इदं प्रायश्चित्तम्। **हविष्यं** पयोमूलघृतादि। **यवागू** द्रवपेयादि॥ १०५॥

**(२) सर्वज्ञनारायणः।** ब्राह्मणस्य शूद्रजातिस्वपितृभार्यागमन आह **चान्द्रायणमिति।** हविष्येण यवाग्वा वेति चान्द्रायणव्रताङ्गभोजनसाधनाभिधानम्। यवाग्वा यवकृतविलेप्या॥ १०५॥

**(३) कुल्लूकः।** यद्वा गुरुभार्यागमनपापनिर्हरणाय संयतेन्द्रियः फलमूलादिना हविष्येण नीवारादिकृतयवाग्वा वा त्रीन्मासांश्चान्द्रायणान्याचरेत्। एतच्च पूर्वोक्तादपि लघुत्वादसाध्वीमसवर्णां वा गुरुभार्यां गच्छतो द्रष्टव्यम्॥ १०५॥

**(४) राघवानन्दः।** अतिदिष्टगुरुत्वानां मातुलपितृव्यादीनां सवर्णासाध्वीगमनविषये त्वाह **चान्द्रायणमिति।** एतया भक्षणीयं द्रव्यं विकल्पेनाह **हविष्येति**॥ १०५॥

**(६) रामचन्द्रः।** चान्द्रायणं हविष्येण यवाग्वा वा गोधूमचूर्णस्य गुरुतल्पी चान्द्रायणं चरेत् पापापनुत्तये॥ १०५॥

**(८) गोविन्दराजः। चान्द्रायणमिति।** यद्वा गुरुदारागमनपापनिर्हरणार्थं संयतेन्द्रियो नीवारादिना पिष्टादिपयसा वा त्रीन् मासांश्चान्द्रायणान्यावर्तयेत्। अत्रापि ज्ञाना-

ज्ञानमुख्यामुख्यगुरुसाध्वसाध्वीभार्यागमनाद्यपेक्ष्यैतानि प्रायश्चित्तानि कल्पनीयानि। अत्र गुरुदाराणां नापरदारत्वं संभवतीत्यतो न पृथक् द्वितीयपरदारप्रायश्चित्तं भवति। यत्र तु नान्तरीयकत्वात्प्रवेशो नास्ति तत्रानेकनिमित्तसमावेशादनेकमपि प्रायश्चित्तं भवति। यस्य गुरुभार्या सगोत्रा रजस्वला च समागतानकल्पामसक्तामभावास्यायां स दिवान् पि जननमसक्तं यावद्वातदस्यक्तरं उच्छिष्टो गच्छन् प्रतिनिमित्तं प्रायश्चित्ती भवति ॥ १०५ ॥

(९) भारुचिः। चतुर्भिः श्लोकैर्गुरुतल्पप्रायश्चित्तमिदं वैकृतिकम्। गुरुर्व्याख्यातो विद्यागुरुः स्वयोनिगुरुश्च। तदङ्गनां गतो गुरुतल्पग इति गुणतस्तल्पशब्दो गुरुभार्यायां विज्ञेयः। हविष्ययवाग्वोश्च ग्रहणं गोबलीवर्दन्यायेन ॥ १०५ ॥

**एतैर्व्रतैरपोहेयुर्महापातकिनो मलम् ॥**
**उपपातकिनस्त्वेवमेभिर्नानाविधैर्व्रतैः ॥ १०६ ॥**

(१) मेधातिथिः। उक्तवक्ष्यमाणसंक्षेपवचनोऽयम् ॥ १०६ ॥

(२) सर्वज्ञनारायणः। महापातकसमतयोक्तेषु प्रायश्चित्तमाह **एतैर्व्रतैरिति**। यदा तु मरणान्तिकप्रायश्चित्तं किं तु (नरो) द्वादशवार्षिक्यादज्ञानतस्तु तदर्धमित्युन्नेयम्। **महापातकिनो** महापातकिसमाः। तत्राप्यनृतं च समुत्कर्ष इत्यादिनोक्तेषु गुरुलघुपापापेक्षया अनुबन्धाननुबन्धाद्यपेक्षया च पूर्वोक्तानि लघुगुरुप्रायश्चित्तानि यथायोगमुन्नेयानि। उपपातकिनस्त्वेवंविधैर्नियमैरिमैरेभिर्वक्ष्यमाणैः ॥ १०६ ॥

(३) कुल्लूकः। एभिरुक्तव्रतैर्ब्रह्महत्यादि महापातककारिणः पापं निर्हरेयुः। गोवधाद्युपपातककारिणः पुनर्वक्ष्यमाणप्रकारेणानेकरूपव्रतैः पापानि निर्हरेयुः ॥ १०६ ॥

(४) राघवानन्दः। महापातकिप्रायश्चित्तमुपसंहरन्नुपपातकप्रायश्चित्तमाह **एतैरिति**। एतैरुक्तैर्मलान्पापान्यपोहेयुर्नाशयेयुः। एतैः वक्ष्यमाणैः ॥ १०६ ॥

(५) नन्दनः। एतैरुक्तैरेभिर्वक्ष्यमाणैरत्र पतितैः संसर्गिणां प्रायश्चित्तवचनं तैस्तेषा-मत्यन्ततुल्यता भ्रमावनोदनार्थमित्यवगन्तव्यम् ॥ १०६ ॥

(६) रामचन्द्रः। महापातकिनः मलान् एतैर्व्रतैरपोहेयुः ॥ १०६ ॥

(८) गोविन्दराजः। **एतैरिति**। एभिरुक्तैर्व्रतैः ब्रह्महत्यादिमहापातककारिणः पापानि निर्हरेयुः। गोवधाद्युपपातककारिणः पुनर्वक्ष्यमाणप्रकारेणैभिरभिधास्यमानैरने-करूपैर्निर्हरेयुः ॥ १०६ ॥

**उपपातकसंयुक्तो गोघ्नो मासं यवान्पिबेत् ॥**
**कृतवापो वसेद्गोष्ठे चर्मणा तेन संवृतः ॥ १०७ ॥**

(१) मेधातिथिः। **गोघ्नो** गोघाती। मूलविभुजादिदर्शनातकः। **यवान् पिबेदिति** यवसक्तुपानं केचिदाहुः। अन्ये तु प्रकृतिशब्दः कार्ये यवाग्वां प्रयुक्तोऽतो यवान् पिष्ट्वा

पाययेदित्युक्तं भवति। पूर्वस्मिन्पक्षेऽश्रुतोदकादिद्रवकल्पना भवति। न हि यवा उदकादिना विना पातुं शक्यन्ते। इह तु लक्षणामात्रम्, अश्रुतकल्पनायाश्च लघ्वी लक्षणा। **कृतवपनः** कृतमौण्डयः। केशच्छेदवपनो वा। **गोष्ठे** यत्र गाव आसते। **चर्मणा तेन**। या न गौर्हता, अपि त्वन्यस्या अपि ॥ १०७ ॥

(२) **सर्वज्ञनारायणः। उपपातकसंयुक्त** इति। शरणागतत्वादि विशेषणवद्गोहत्याया महापातकतुल्यत्वात्तद्व्यवच्छेदार्थमुक्तम्। **यवान्पिबेत्** यवागूं कृत्वा मासं यवानश्नीयादित्यर्थः। **कृतवापो** मुण्डितः। **तेन** चर्मणा तस्या गोश्चर्मणा संवृतः कृतोत्तरीयः ॥ १०७ ॥

(३) **कुल्लूकः**। अनेन विधिना यस्त्विति यावत्कुलकमुपपातकयुक्तो गोघाती शिथिलयवागूरूपेण प्रथममासं यवान्पिबेत्। सशिखं मुण्डितशिरालूनश्मश्रुस्तेन हतगो चर्मणाच्छादितदेहो मासत्रयमेव गोष्ठे वसेत्। गोमूत्रेणाचरेत्स्नानं संयतेंद्रियः कृत्रिमल-वणवर्जितं हविष्यमन्नमेकाहं भुक्त्वा द्वितीयेऽह्नि सायं द्वितीयतृतीयमासावश्नीयात्। मास-त्रयमेव दिवाप्रातस्ता गा अनुगच्छेत्तासां च गवां खुरप्रहारादूर्ध्वमुत्थितं रजस्तिष्ठन्नास्वादये-त्कण्डूयनादिना ताः परिचर्य प्रणम्य च रात्रौ भित्त्यादिकमननुवेष्टचोपविष्ट आसीत। तथा शुचिर्विगतक्रोध उत्थितासु गोषु पश्चादुत्तिष्ठेद्वने च परिभ्रमन्तीषु पश्चात्ततः परिभ्रमेत्। उपविष्टासु गोषूपविशेत्। व्याधितां चौरव्याघ्रादि भयहेतुभिदाक्रान्तां पतितां कर्दमलग्नां वा यथाशक्ति मोचयेत्। तथोष्णे आदित्ये तपति मेघे च वर्षति शीते चोपस्थिते मारुते चात्यर्थं वातिगोर्य यथाशक्ति रक्षामकृत्वाऽऽत्मनस्त्राणं न कुर्यात्तथाऽऽत्मनोऽन्येषां वा गेहे क्षेत्रे खलेषु सस्यादि भक्षणं कुर्वन्तीं वत्सं च क्षीरं पिबन्तं न कथयेत्। अनेनोक्तविधानेन यो गोघ्नो गाः परिचरति स गोवधजनितपापं त्रिभिर्मासैरपनुदति॥ १०७ ॥

(४) **राघवानन्दः**। तत्रादौ गोवध विषयकमाह **उपेति** नवभिः। मासं यवान्पिबेत् कृतवापो गोष्ठे वसेच्च। तेन तदा येन तदलाभे तज्जातीयेन ॥ १०७ ॥

(५) **नन्दनः**। मासपृथङ्मासं **यवान्यवागूः** **कृतवाप** उप्तकेशश्मश्रुः तेन **चर्मणा** ॥ १०७ ॥

(६) **रामचन्द्रः**। यवान् गोमूत्रमिश्रितां यवागूं पिबेत् ॥ १०७ ॥

(८) **गोविन्दराजः**। **उपपातकसंयुक्त** इति। **चतुर्थकालमिति**। **दिवेति**। **तिष्ठन्तीष्विति**। **आतुरामिति**। **उष्ण** इति। **आत्मन** इति। **अनेनेति**। गोघाती उपपातकवान् स मासं यावत् सक्तुयवागूरूपेण यवान् पिबेत्। अन्यन्मासद्वयं गुडादि क्षारवर्जितलवण-मन्नमेकमहरहर्भुक्त्वा द्वितीयेऽह्नि सायं स्तोकमश्नीयात्। तेनैव च गोचर्मणाच्छादितो मुण्डितकेशादि गोमूत्रेण स्नानं कुर्वन्संयतेन्द्रियो मासत्रयमपि गोनिवासे वसेत्। यासां गवां गोष्ठे वसेत्तासां दिवा गोष्ठादूरादि गच्छन्तीनां पश्चाद्गच्छेत् तासां चानुगमनं कुर्वन् स्थितः संमूर्च्छनैरूर्ध्वमूर्ध्वमुद्भूतं रज आस्वदयेत्ताभिरेव सह पुनर्गोष्ठमेत्य कण्डूयनादिना ताः परिचर्य प्रणम्य च ततो रात्रावनिषिद्धोपविष्ट आसीत। तथा व्याधुयेतां चौरव्याघ्रादि-भिर्भयहेतुभिराक्रान्तां श्वभ्रादिपतितां कर्दमावसक्तां परया शक्त्या मोचयेत्। तथोष्णे

आदित्ये तपति वर्षति मेघे वाति वायौ शीतैरत्यर्थं वाति गोर्यथाशक्ति रक्षामकृत्वात्मनस्त्राणं कुर्यात्तथात्मनोऽन्येषां वा गृहे क्षेत्रे खलके च सस्यादि भक्षयन्तीं गां वत्सकं च क्षीरं पिबन्तं न ब्रूयात्। अनेनोक्तविधानेन यो गोघ्नो गामनुसरति स गोवधचरितं पापं त्रिभिर्मासैरपनुदेत्। ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥ ११२ ॥ ११३ ॥ ११४ ॥

**चतुर्थकालमश्नीयादक्षारलवणं मितम् ॥**
**गोमूत्रेणाचरेत्स्नानं द्वौ मासौ नियतेन्द्रियः ॥ १०८ ॥**

(१) **मेधातिथिः।** **द्वौ मासावेकैकमाहारं** भुक्त्वा द्वितीयेऽहनि सायमश्नीयात्। लवणविशेषेण क्षारग्रहणात्सैन्धवस्याप्रतिषेधः। स्वतन्त्रः क्षारप्रतिषेधो हि द्वन्द्वे सति स्यात्। तत्र वचनप्रवृत्तिः पदद्वयस्य च लक्षणार्था। युगपदधिकारणतायां द्वन्द्वः। स्थिते विशेषणसमासे विशिष्टस्यार्थस्य नानुज्ञासंबन्धः। न समासादिलाघवम्। **मितं** स्वल्पमित्यर्थः। न यावता तृप्तिर्भवति शरीरस्थितिश्च जायते। **गोमूत्रस्नानं** त्रिष्वपि कालेषु। **चतुर्थकालं द्वौ मासाविति** संबन्धः। एवं स्मृत्यन्तरे 'कृतवपनो वसेद्गोष्ठे चर्मणा तेन संवृतः। द्वौ मासौ स्नानमप्यस्य गोमूत्रेण विधीयते'॥ 'पादशौचक्रियाकार्यमद्भिः कुर्वीत केवलम्।' न चास्य द्वौ मासावित्यस्यानेन संबन्धः संभवति। स्नानग्रहणं पादपूरणार्थम्। स्नानकाले यदि पादाद्यशुद्धिर्भवत्यर्थात्तदुदकेनैव द्रव्यशुद्धिविधिना शोधनीयम्। अत आचमनमपि शुद्ध्यर्थमुदकेनैव स्नानकाले। अन्यथा मृदा शुद्धिः। सा मृद्वारिक्रमेणैव कर्तव्या। स्नानविधौ गोमूत्रश्रवणादाचमनादौ कः प्रसङ्गः। स्नानेऽपि प्रायश्चित्ताङ्गेन शुद्ध्यर्थम् ॥१०८॥

(२) **सर्वज्ञनारायणः।** ततः परं द्वौ मासौ यवक्षारादिक्षारसैन्धवादिलवणवर्जितमन्नं मितमष्टग्रासनियमस्यात्यपकर्षेण परिमाणत्वात्तावन्नियतं चतुर्थकालं पूर्वदिने नक्ताशनोऽपरदिने उपोष्य द्वितीयदिने सायमश्नीयात्। प्रतिदिनं हि द्वौ द्वौ भोजनकालौ तत्कालत्रयमतिक्रम्यैवं भुक्तं भवति। **गोमूत्रेण** तन्मात्रेण। अत्र चर्मसंवृतत्वगोमूत्रस्नानाचरणाद्युक्तवक्ष्यमाणाङ्गजातं प्रथममासे द्वितीयादौ चोपसंहार्यम् ॥ १०८ ॥

(४) **राघवानन्दः।** किं च **चतुर्थेति**। द्वौ मासौ गोमूत्रेण स्नानमाचरन् चतुर्थकालं चतुर्थभोजनमक्षारलवणान्नितमश्नीयात्कुर्यादित्यन्वयः त्रिभिर्मासैर्व्यपोहतीत्युपसंरात् ॥१०८॥

(५) **नन्दनः।** मासयोर्द्वितीयतृतीययोः कर्तव्यमाह **चतुर्थकालमश्नीयादिति**। चतुर्थकालं चतुर्थकाल एकदिनमुपोष्य द्वितीये दिने सायमिति यावत्। क्षारं जिव्हाक्षरणकृद्दूषणसारभूतम् ॥ १०८ ॥

(६) **रामचन्द्रः।** **मितं** परिमितम् ॥ १०८ ॥

**दिवानुगच्छेद्गास्तास्तु तिष्ठन्नूर्ध्वं रजः पिबेत् ॥**
**शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनो वसेत् ॥ १०९ ॥**

(१) **मेधातिथिः**। यासां गवां स्थाने वसति ताश्चरितुं गच्छन्तीः पश्चाद्गच्छेत्। तच्छब्देन प्रत्यवमर्शाद्यासां गृहे स्थितस्तासाम्। अन्यासां गच्छन्तीनां न भवत्यनुगमनम्। ताभिः समुत्थापितं **रजो** रेणुरूर्ध्वं गच्छन् **पिबेत्**। एवं तत्रैव ताभिः सह दिवसं विहृत्य ताभिरेव सह पुनर्गोष्ठमागच्छेत्। **शुश्रूषयित्वा** कण्डूकर्षणरजोपनोदनेनोपगच्छन्। **नमस्कृत्य** जानुशिरसा प्रणामं कृत्वा। **वीरासनो वसेत्**। भित्तिशय्यादावनिषद्य यदुपविष्टस्यावस्थानं तद्'वीरासनम्' ॥ १०९ ॥

(२) **सर्वज्ञनारायणः**। दिवानुगच्छेन्नाग्रे गच्छेत्। एतच्च यदा गावो गच्छन्ति तदैव। आगोवासं गोष्ठे वसेत्। दिवा च यदा तदा खुराघातादूर्ध्वमुत्क्षिप्तं रजः पिबेत् मुखवातेन वक्त्रं प्रवेशयेत्। **शुश्रूषित्वा** कण्डूयनादिना। वीरासनं वसेत् येनासनेनादावासीनस्तेनैवासनेन रात्रिं क्षपयेत्। एतच्च तिष्ठन्तीष्वपि गोषु ॥ १०९ ॥

(४) **राघवानन्दः**। तेष्वेवेति कर्तव्यतामाह **दिवेत्यादि** पञ्चभिः। **ऊर्ध्वं** ऊर्ध्वगामि **रजः पिबेदा**स्वादयेत्। रात्रौ तासां गवां सन्निधौ वीरासनं कृत्वा **वसे**त्तिष्ठेदित्यन्वयः ॥१०९॥

(५) **नन्दनः**। रजः पिबेत् **रजो** गोधूलिं रक्तास्यो मुहुर्गोखुरोद्धूतं पवित्रम् ॥ १०९ ॥

(६) **रामचन्द्रः**। दिवानुगाः अनुगच्छेत् तिष्ठन् ऊर्ध्वरजः गोसंबन्धिरजः पिबेत् ॥ १०९ ॥

**तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत् ॥**
**आसीनासु तथासीनो नियतो वीतमत्सरः ॥ ११० ॥**

(१) **मेधातिथिः**। **तिष्ठन्ती**त्येवमादिको विधिः। यत्र काश्चित्तिष्ठन्ति काश्चिद् व्रजन्ति काश्चिद्वाऽऽसते तत्र भूयसीनां धर्मं समाश्रयेत्। **वीतो मत्सरो** लोभो यस्येति। प्रदर्शनार्थं चैतत्। त्यक्तरागादिमनोदोष इति यावत्। नियतेन्द्रियवचनात् ॥ ११० ॥

(२) **सर्वज्ञनारायणः**। दिवाकर्तव्यमाह **तिष्ठन्तीष्विति**। **आसीनासू**पविष्टासु। नियतस्तपःस्वाध्यायादियावच्छक्यनियमवान्। **मत्सरः** क्रोधः ॥ ११० ॥

(४) **राघवानन्दः**। किंच **तिष्ठन्तीष्विति**। **आसीनासु** शयानासु उपविष्टः सन्। वीतमत्सरः किमित्येवं कुर्वन्त्येता इत्यनुद्विग्नहृदयः ॥ ११० ॥

(५) **नन्दनः**। **वीतमत्सरः** तिष्ठन्तीषु गोष्विति विपरिणेतव्यम् ॥ ११० ॥

**आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भयैः ॥**
**पतितां पङ्कलग्नां वा सर्वप्राणैर्विमोचयेत् ॥ १११ ॥**

(१) **मेधातिथिः**। **आतुरां** व्याधिताम्। **अभिशस्तां** गृहीताम्। **भयैर्व्याघ्रादि** निमित्तैः। **सर्वेण** सामर्थ्येन **प्राणशब्दो**च्छ्वासपवन एव। 'अल्पप्राणो महाप्राण' इति स्थूले [illegible]दर्शनात्। तेन स्वयमशक्तेन सहायकोपादानेनाप्युद्धारः कर्तव्यः ॥ १११ ॥

(२) **सर्वज्ञनारायणः। भयैर्भयसाधनैरभिषक्तां पराक्रान्ताम्।** सर्वोपायैर्यावच्छक्ति ।। १११ ।।

(४) **राघवानन्दः। आतुरामौषधादिना** सुखिनीं कुर्यात् तथापि मृतायां न दोषः। तदुक्तम् ।। औषधं स्नेहमाहारं दद्याद्गोब्राह्मणेषु यः ।। दीयमाने विपत्तिः स्यान्न स पापेन लिप्यत इति ।। **अभिशस्तां** जीर्णतया स्वपोषकैः परित्यक्ताम्। **पतितां** चोरादिभयैः। पङ्कनग्नां च। **सर्वप्राणैः** प्राणसत्वेन तद्रक्षातो निवर्तेतेति भावः ।। १११ ।।

(५) **नन्दनः। अभिशस्तां** पीडितां **भयैर्भय**हेतुभिः ।। १११ ।।

(६) **रामचन्द्रः। अभिशस्तां** आक्रान्तां **भयैः** भयसाधनैः ।। १११ ।।

**उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ।।**
**न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ।। ११२ ।।**

(१) **मेधातिथिः। उष्णेन भृशं** तपत्यादित्ये **वर्षति** पर्जन्ये **शीते वा मारुते वाति** वायौ भृशमिति ।। ११२ ।।

(२) **सर्वज्ञनारायणः। उष्णे** आतपे। **वर्षति** वृष्टिकाले। **शीते** शीतपीडासमये। **मारुते भृशं** वाति झञ्झावातादौ। अकृत्वा त्राणम् ।। ११२ ।।

(४) **राघवानन्दः। उष्णे** सूर्याद्यातपे छत्रादिनात्मत्राणं न कुर्यात्तासामकृत्वा ।। ११२ ।।

(५) **नन्दनः। उष्णे** आतपे ।। ११२ ।।

**आत्मनो यदि वाऽन्येषां गृहे क्षेत्रेऽथवा खले ।।**
**भक्षयन्तीं न कथयेत्पिबन्तं चैव वत्सकम् ।। ११३ ।।**

(१) **मेधातिथिः।** व्रीह्यादि **भक्षयन्तीं** गां न वारयेत्। न चान्यानाचक्षीत निवारणार्थम्। यदि तु बध्नीयात् आशंक्यते बाधेति तृप्त्या तदा पूर्वोक्तकरणे न दोषः। तदनुग्रहो विधीयते। एवं **पिबंतं वत्सकमपि** ।। ११३ ।।

(२) **सर्वज्ञनारायणः। भक्षयन्तीं** सस्यानि। **पिबन्तं** मातुः स्तन्यम्। नान्यस्मै तन्निवारणाय **कथयेत्**। धयन्तमिति क्वचित्पाठः ।। ११३ ।।

(४) **राघवानन्दः। भक्षयन्तीं** सस्यमिति शेषः। दुग्धं **पिबन्तं वत्सं** च न **कथयेत्**। ।। ११३ ।।

(५) **नन्दनः।** भक्षयन्तीं गां पिबन्तं स्तनम् ।। ११३ ।।

**अनेन विधिना यस्तु गोघ्नो गामनुगच्छति ।।**
**स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति ।। ११४ ।।**

**वृषभैकादशा गाश्च दद्यात्सुचरितव्रतः ।।**
**अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत् ।। ११५ ।।**

(१) **मेधातिथिः। दश गावो देया एको** वृषभः। शक्तौ चत्वारि व्रतानि। **अविद्यमाने** गदितधने ततो न्यूनं **सर्वस्वं** देयम्। **वेदविद्भ्यः** इति बहुशः, न द्वयोरेकस्मिन् वा। 'वेदविद्'-ग्रहणं न बहुवचनार्थमनुवादो वेदविदामेव पात्रतयोक्तत्वात्। यत्तु स्मृत्यन्तरे 'दहनवाहनबन्धन-दामपाशयोजनतैलौषधादियोगे मृते सशिखं वपनं कृत्वा प्राजापत्यं चरेत्ततश्चैलखण्डं दद्यादिति' यो नातिप्रयत्नेनैतासु क्रियासु प्रवर्तते तस्य प्रमादजेऽपराधे प्रायश्चित्तमेतत्। यतः 'यंत्रणे गोश्चिकित्सायां गूढगर्भविमोचने। यत्ने कृते विपत्तिः स्यात्प्रायश्चित्तं न विद्यते' ।। 'औषधं स्नेहमाहारं दद्याद्गोब्राह्मणेषु यः। दीयमाने विपत्तिः स्यान्न स पापेन लिप्यते ।।' इति सांवर्तम्। तथाऽस्य मासेन शुद्धिरुक्ता 'पंचगव्यं पिबेत् षष्ठे काले पयः समाप्ते ब्राह्मणांस्तर्पयेत्। तिलधेनुं च दद्यात्। तथान्याऽर्द्धमासेन 'सक्तुयावकशाकपयोदधि घृतं सकृदिति'। विकल्पा-नेतान्वक्ष्यामि। येन द्रव्येण यः प्रयोग आरब्धः स तेनैव समापनीयो न तु कस्मिंश्चिदह्नि सक्तवः कस्मिंश्चिद्यावकादीनीति। व्रीहिभिर्यजेत यवैर्वेति विकल्पितेऽपि द्रव्यद्वये न व्रीहिषूप-पन्नेष्विच्छया चैतेषां वा विनाशे यवा उपादीयन्ते। प्रतिनिधिनैवं प्रयोगसमाप्तिः। तत्रापि गोदानं विहितम्। तथैतावन्त्येव तपांस्यतो वत्ससहितां गां दद्यादिति। अत्रोक्तं गौतमीये (२२ - १८) च 'गां वैश्यवदिति'। तत्र श्रोत्रियस्य यज्ञविदुषोऽन्याहितस्य दोग्ध्रीं बहुक्षीरां बालवत्सां निधनस्य गां हत्वा गौमतीयं, क्षेत्रारामादौ व्रीह्यादिषु च प्रविश्य तन्निवारणार्थं प्रद्रुते 'मा मारयाम्येनामिति अनया बुद्ध्या कथंचिन्मृतायामिदं मासिकम्। तथाऽश्रोत्रियस्य जरत्या अक्षीरायाश्च बुद्धिपूर्ववधे त्रैमासिकम्। सर्वतो निर्गुणाया निर्गुणस्वामिकाया अबुद्धि-पूर्ववधे प्राजापत्यम्। तस्या एव बुद्धिपूर्वमृतायां त्रैमासिकमिति ।। ११४–११५ ।।

(२) **सर्वज्ञनारायणः। गामनुगच्छति** गवानुगमनसहितं व्रतं करोति ।। ११४ ।।

(४) **राघवानन्दः।** उपसंहरति **अनेनेति**। विधिना उक्तेन ।। ११४ ।।

(२) **सर्वज्ञनारायणः। वृषभैकादशाः** यासां गवां वृषभ एकादशः एकं वृषं दशस्त्री-गवीरिति यावत्। अविद्यमान एतावद्वित्ताभावे ।। ११५ ।।

(३) **कुल्लूकः।** वृषभ एकादशो यासां ताः सम्यगनुष्ठितप्रायश्चित्तो दद्यात् अविद्यमाने तावति धने सर्वस्वं वेदज्ञेभ्यो ब्राह्मणेभ्यो दद्यात् ।। ११५ ।।

(४) **राघवानन्दः। वृषभैकादशाः** वृषभः एकादशो यासु गोषु। **चरितव्रतः** कृतोपवा-सत्रयः। अत्र तु व्रतत्रयमेवोचितं मासत्रयसाध्यमेकं त्रिभिर्मासैर्व्यपोहतीत्युपसंहाराद्ब्राह्मण-धेनुविषयम्। तदितरधेनुविषयं च उपोषणत्रयपुरःसरं गवामेकादशकदानम्। अज्ञानेन गो-मात्रवधे तु सर्वस्वदानम्। दानव्रताद्यसमर्थस्य तु यत्यादेश्चान्द्रायणमेव। अत एव याज्ञव-ल्क्योक्तविकल्पत्रयमपि संगच्छते। तथाहि ।। पञ्चगव्यं पिबन्गोघ्नो मासमासीत संयतः। गोष्ठेशयो गोनुगामी गोप्रदानेन शुध्यति ।। कृच्छ्रं चैवातिकृच्छ्रं च चरेद्वापि समाहितः। दद्यात्त्रिरात्रं वोपोष्य वृषभैकादशास्तु गा इति ।। याज्ञवल्कीये मासपदमुपलक्षणं मासत्रयस्येति।

अत्र शूलपाणिः ।। मासत्रये द्वादशधेनवस्तेन षट्त्रिंशत्कार्षापणागवां दशकस्य दशकार्षापणावृषभस्य पञ्चकार्षापणास्तेनैकपञ्चाशत्पणा इत्येवं गोदानपर्यन्तमेकं व्रतमिति ।। ११५ ।।

(५) **नन्दनः**। अविद्यमाने वृषभ एकादशके ।। ११५ ।।

(६) **रामचन्द्रः**। एकादशो वृषभो दश गाः ।। ११५ ।।

(८) **गोविन्दराजः**। **वृषभैकादशा** इति। वृषभ एकादशो यासां गवां ताः चेच्छातो तत्प्रायश्चित्ते दद्यात्। अविद्यमाने इगति धने सर्वस्वं वेदज्ञभ्यो दद्यात् ।। ११५ ।।

(९) **भारुचिः**। केचित्तु त्रिभिर्वर्षैरिति पठन्ति। तदयुक्तम्। अधस्तादत्रैव प्रायश्चित्तप्रकरणे मासत्रयग्रहणात्। सर्वोपपातकेषु चैतदेव व्रतं कुर्युरिति वक्ष्यति, चान्द्रायणवैकल्पिकमवकीर्णिवर्जम्। एवं च वर्षत्रयेणास्यासमानविधित्वादन्यायकल्पनेयम्" ।। ११४ ।।

अविद्यमानायामनन्तरदक्षिणायां चरितप्रायश्चित्तस्य सर्वस्वं दक्षिणा तच्चेकादशेभ्यो गोरूपेभ्यः सर्वस्वमर्वागिति सामर्थ्यादगम्यते। गावोऽन्यद्वोभयं वा ।। ११५ ।।

## एतदेव व्रतं कुर्युरुपपातकिनो द्विजाः ।
## अवकीर्णिवर्जं शुद्ध्यर्थं चान्द्रायणमथापि वा ।। ११६ ।।

(१) **मेधातिथिः**। **एतदेवेति** गोघातकप्रायश्चित्तं सर्वेषूपपातकेष्वतिदिशति। वैकल्पिकं चान्द्रायणमपि। उपपातकित्वे विशेषोपदेशान्न गोघ्नस्य चान्द्रायणमिच्छन्ति। तेषामुपपातकित्ववचने गोघ्नस्य प्रयोजनं मृग्यम् ।। ११६ ।।

(२) **सर्वज्ञनारायणः**। **एतदेव व्रतं** हृतगोचर्मपरिधानमस्यासंभवात्तच्छून्यम्। **उपपातकिनः** पूर्वोक्ताः। एतत् ज्ञानतः। अज्ञानतस्त्वाह **चान्द्रायणमिति**। इदं च यत्र निष्कृतिर्विशेषतो नोक्ता तद्विषयम्। तत्रापि पापगुरुत्वापेक्षयाऽऽवृत्त्या योज्यम् ।। ११६ ।।

(३) **कुल्लूकः**। अपरे तूपपातकिनो वक्ष्यमाणावकीर्णिवर्जिताः पापनिर्हरणार्थमेतदेव गोवधप्रायश्चित्तं चान्द्रायणं वा लघुत्वात्कुर्युः चान्द्रायणन्तु लघुन्युपपातके जातिशक्तिगुणाद्यपेक्ष्यं वा योजनीयम् ।। ११६ ।।

(४) **राघवानन्दः**। उपपातकप्रायश्चित्तमुपसंहरन् अन्यत्रातिदिशति **एतदेवेति**। अपिना पयःपराकयोर्ग्रहणम् ।। उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा ।। पयसा वापि मासेन पराकेणापि वा पुनरिति याज्ञवल्क्योक्तेरिति मनूक्तेषु प्रायश्चित्तेषु उपपातकेषु त्रयाणां विकल्पेन प्रवेशः तथैकार्थास्तु विकल्पेरन्निति न्यायात् इति ।। ११६ ।।

(५) **नन्दनः**। एतद्गोहत्याव्रतम् ।। अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितमिति याज्ञवल्क्यः। बुद्धिपूर्वविषयं गोव्रतमबुद्धिपूर्वविषयचान्द्रायणम् ।। ११६ ।।

(६) **रामचन्द्रः**। अवकीर्णिसंज्ञं पुरुषं वर्जयित्वा ।। ११६ ।।

(८) **गोविन्दराजः**। **एतदिति**। अन्येप्युपपातकगणः पठितव्यतिक्रमकारिणो नरा वक्ष्यमाणावकीर्णिवर्जिताः पापनिर्हरणार्थं एतदेव गोवधप्रायश्चित्तं कुर्युः ।। ११६ ।।

(९) भारुचिः। एतदेव गोघातप्रायश्चित्तं सर्वोपपातकेष्वतिदिश्यते । तद्विकल्पेन चान्द्रायणमेव। एवं च सति गोहत्यायाश्चान्द्रायणं न स्यात् तद्वैकल्पिकसामर्थ्यात् यथान्यषूपपातकेषु। अत एव पृथङ्निर्देशः। **आवकीर्णीवर्ज्यमिति** चानेन प्रतिषेधलिङ्गेन गोवधादौ यदुक्ता व्रताः स्युरिति तदवकीर्णिनो ग्रहणमिति विज्ञायते ।।११६।।

**अवकीर्णी तु काणेन गर्दभेन चतुष्पथे ।।**
**पाकयज्ञविधानेन यजेत निर्ऋतिं निशि ।। ११७ ।।**

(१) मेधातिथिः। 'अवकारो'ऽ'वकीर्णी' ब्रह्मचारिणो व्रतानि तस्यातिक्रमः स्त्रीसंप्रयोगलक्षणः सोऽस्यास्तीत्यवकीर्णी। वक्ष्यति 'कामतो रेतसः सेकमिति'। **काणेन गर्दभेनेति** सगुणद्रव्यनिर्देशः। **चतुष्पथेनेति** देशस्य। **निशीति** कालस्य। **नैर्ऋतमिति** देवतायाः। **पाकयज्ञविधानेनेती**तिकर्तव्यताविधानम्। "ननु च पशुयागा अग्निष्टोमीयपशुसाध्या अग्निषोमीयपशुप्रकृतयः"। सत्यम्। स एव पाकयज्ञप्रकृतिः। सत्यधिकारे हि सः। उक्तं च 'पशुरपि द्रवति पयोऽपि द्रवतीति'। 'पाकयज्ञाः' पूर्णमासादयः ।। ११७ ।।

(२) **सर्वज्ञनारायणः**। अवकीर्णिप्रायश्चित्तमाह **अवकीर्णीति**। पाकयज्ञसहचरितः पशुकल्प आश्वलायनगृह्यादावुक्तः। **निशि** रात्रौ। **निर्ऋतिं** देवताम्। एतच्चालौकिकाग्नावेव ।। ११७ ।।

(३) **कुल्लूकः**। **अवकीर्णी** वक्ष्यमाणः **काणेन गर्दभेन** रात्रौ **चतुष्पथे** पाकयज्ञेन तन्त्रेण निर्ऋत्याख्यां देवतां यजेत् ।। ११७ ।।

(४) **राघवानन्दः**। अवकीर्णि (वर्जमित्युक्तं तस्य प्रायश्चित्तमाह **अवकीर्णीति** षड्भिः। **पाकयज्ञविधानेन** वैश्वदेवविधानेन)' ।। ११७ ।।

(५) **नन्दनः**। **काणेन** गर्दभेन काणं गर्दभं पशुमालभ्य **पाकयज्ञविधानेन** पाकयज्ञप्रयोगेण स्मार्तेनेत्यर्थः ।। ११७ ।।

(६) **रामचन्द्रः**। **अवकीर्णी** क्षतव्रतः **निर्ऋतिं** देवतां **पाकयज्ञविधानेन** सप्तपाकसंस्थाप्रकारेण **काणेन गर्दभेन** एकाक्षिगर्दभेन **निशि** यजेत् ।। ११७ ।।

(८) **गोविन्दराजः**। **अवकीर्णीति**। **हुत्वेति**। अवकीर्णी वक्ष्यमाणः काणेन खरेण रात्रौ चतुष्पथे पार्वणतन्त्रेण निर्ऋताख्यां देवतां यजेत्। यस्माच्च गर्दभाद्वपादि होमान्यथार्थं कृत्वा ततः सं मा सिञ्चन्तु इति। मारुतेन्द्रबृहस्पतीत्यग्नीनामत्र मन्त्र एषां स्रुवेणाज्येन जुहुयात् ।। ११७ ।। ११८ ।।

**हुत्वाऽग्नौ विधिवद्धोमानं ततश्च समेत्यृचा ।।**
**वातेन्द्रगुरुवह्नीनां जुहुयात्सर्पिषाऽऽहुतीः ।। ११८ ।।**

(१) **मेधातिथिः**। **अग्नौ** यदा होमम्। अग्निहोमाश्च 'हृदयस्याग्र' इति। अन्ततः समाप्तेषु होमेषु मरुद्भ्य इन्द्राय बृहस्पतयेऽग्नयेऽप्याहुतीर्जुहुयात्। **'सम्'** इत्यनया। 'सं मा

सिञ्चन्तु मरुतः समिन्द्रः सं बृहस्पतिः । संचायमग्निः सिञ्चतु प्रजया च धनेन च ।' (अथर्ववेद ७ । ३३ । १) इत्येतया जुहुयात् । मान्त्रवर्णिकत्वात् देवतानां श्लोके 'वातगुरुशब्दौ मरुद्बृहस्पतिशब्दलक्षणौ । अतो वातादिषु स्वाहाकारादौ मरुद्बृहस्पतिशब्दौ प्रयोक्तव्यौ, न वातगुरुशब्दौ ।। ११८ ।।

(२) **सर्वज्ञनारायणः** । विधिवन्नैर्ऋतदैवतमन्त्रैः । होमान् वपया मांसेन च प्रधानदेवतायै स्विष्टकृते चान्तत इति तिस्र आहुतीः । तदन्ते सं मा सिञ्चन्तु मरुतः समिन्द्रः संबृहस्पतिरित्यृचा एतदृक्प्रतिपाद्यादिदेवतानां घृतेनाहुतीराहुतित्रयं जुहुयात् ।। ११८ ।।

(३) **कुल्लूकः** । ततो निर्ऋतयै गर्दभवपादिहोमान्यथावच्चतुष्पथे कृत्वा तदन्ते 'सं मा सिंचन्तु मरुत' इत्येतया ऋचा मारुतेन्द्रबृहस्पत्यग्नीनां घृतेनाहुतीर्जुहुयात् ।। ११८ ।।

(४) **राघवानन्दः** । (होमान् गर्दभरसादिहोमान् । ते च) कामाय स्वाहा निर्ऋतये स्वाहा रक्षोदेवताभ्यः स्वाहेति वसिष्ठस्मरणात् । समित्यृचा 'सं मा सिञ्चन्तु मरुत' इत्येतयर्चा **गुरुः** बृहस्पतिः ।। ११८ ।।

(५) **नन्दनः** । तत्र प्रधानहोममुपहोमांश्चाह **हुत्वाग्नौ विधिवद्धोममिति** । संततमविच्छिन्नधारम् । समेत्यृचा सममासिञ्चन्त्वित्यृचा ।। ११८ ।।

(६) **रामचन्द्रः** । विधिवदग्नौ हुत्वा होमान् अन्ततः पश्चात् समित्यृचा **वातो** वायुः **इन्द्रः गुरुः** बृहस्पतिः एषामाहुतीः सर्पिषा जुहुयात् ।। ११८ ।।

**कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः ।।**
**अतिक्रमं व्रतस्याहुर्धर्मज्ञा ब्रह्मवादिनः ।। ११९ ।।**

(१) **मेधातिथिः** । अवकीर्णिपदार्थनिरूपणम् । अतश्चोपात्तव्रतातिरिक्तविषय एवं विज्ञायते । **व्रतस्थस्येति** ब्रह्मचर्याश्रमस्थस्येति, स्मृत्यन्तरदर्शनाद्विज्ञेयम् । रेतःसेकस्त्वस्यैव विशेषतः प्रतिषिद्धोऽन्तरेणापि स्त्रीसंप्रयोगम् । **कामतः सेके** विधिरयम् ।। ११९ ।।

(२) **सर्वज्ञनारायणः** । अत्रान्तरा कामत इत्यवकीर्णिलक्षणाभिधानं वातादिदैवतर्चाहोमस्तुतिं प्रस्तावयितुम् । व्रतं ब्रह्मचर्यवनस्थयतित्वनियमपरिग्रहः चान्द्रायणादिव्रतं च तत्र स्थितस्य व्रतस्यातिक्रमम् ।। ११९ ।।

(३) **कुल्लूकः** । अप्रसिद्धत्वादवकीर्णवतो लक्षणमाह **कामत** इति । इच्छातो द्विजः ।। अवकीर्णी भवेद्गत्वा ब्रह्मचारी च योषितमिति वचनात्स्त्रीयोनौ शुक्रोत्सर्गं ब्रह्मचर्यस्यातिक्रममवकीर्णरूपं सर्वज्ञा वेदविदः प्राहुः ।। ११९ ।।

(४) **राघवानन्दः** । वातादीनामेव होमोऽर्थवादः । कामत इत्यवकीर्णिलक्षणम् ।। अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितमिति याज्ञवल्क्योक्तेः ।। ११९ ।।

(५) **नन्दनः** । एतदकामतो रेतःसेकविषये प्रायश्चित्तमुक्तमथ कामतस्तु विशेषमाह **कामतो रेतसः सेकमिति** । **अतिक्रमं** लोपं **व्रतस्य** ब्रह्मचर्यस्य ।। ११९ ।।

(६) **रामचन्द्रः**। व्रतस्थस्य कामतः **रेतसः सेकं** रेतसः क्षरणम् ॥ ११९ ॥

(८) **गोविन्दराजः**। अप्रसिद्धत्वादवकीर्णिलक्षणमाह **कामत** इति। द्विजातेर्ब्रह्मचारिण इच्छातः शुक्रोत्सर्गं **ब्रह्मचर्यस्य** लोपकं धर्मविदो ब्रह्मस्वरूपनिरूपणपराः प्राहुः ॥ ११९ ॥

(९) **भारुचिः**। अवकिर्णीपदार्थं प्रायश्चित्तनिमित्तमवधारयति। एवं चाकामतो दिवा रात्रौ वा प्रच्युतेन्द्रियस्य लघुतरं प्रायश्चित्तं स्यात्। ततोऽपि स्वप्न इति। तथा चोक्तं 'स्वप्ने रेतस्सेके ब्रह्मचारिणः पुनर्मामित्यृचं जपेदि'ति ॥ ११८ ॥ ११९ ॥

**मारुतं पुरुहूतं च गुरुं पावकमेव च ॥**
**चतुरो व्रतिनोऽभ्येति ब्राह्मं तेजोऽवकीर्णिनः ॥ १२० ॥**

(१) **मेधातिथिः**। 'जुहुयादाहुतीरिति' विधेरर्थवादः। **व्रतिनः** सत **अवकीर्णिनः** यत् **ब्राह्मं तेजो** विविधविज्ञानोपार्जितं पुण्यं तद्देवतां देवतामुपैत्युपसंक्रामति। तत्र लयं गच्छतीति यावत्। व्रतिनोपैतीति विवक्षितम् ॥ १२० ॥

(२) **सर्वज्ञनारायणः**। विकिरणाद्विक्षेपाद्व्रतस्थस्यावकीर्णीति योग उक्तः। **मारुतमि**ति प्रकृताहुतिस्तुत्युपयुक्तम्। **गुरुं** बृहस्पतिम्। **ब्राह्मं** वेदेन सहितं तेजः ॥ १२० ॥

(३) **कुल्लूकः**। व्रतचारिणो वेदाध्ययननियमानुष्ठानजं तेजः तदवकीर्णिनः सतो मरुदिन्द्रबृहस्पतिपावकांश्चतुरः संक्रामति अतस्तेभ्य आज्याहुतीर्जुहुयात् इत्याज्याहुतेरयमनुवादः ॥ १२० ॥

(४) **राघवानन्दः**। **पुरुहूतं** पुरुभिर्बहुभिर्हूयतेऽस्मा इति शक्रम्। **ब्राह्मं** वेदाध्ययनजम् ॥ १२० ॥

(५) **नन्दनः**। व्रतिनोऽवकीर्णिनो ब्राह्मं तेजो मरुतादींश्चतुरोऽयेति प्रविशति चतुर्थेत्याहुः ब्रह्मवादिन इति श्रुतेः ॥ १२० ॥

(६) **रामचन्द्रः**। अवकीर्णिनः व्रतिनः बाल्ये ब्राह्मं तेजः चतुरः मारुतादीनां देवानां सकाशमभ्येति ॥ १२० ॥

(८) **गोविन्दराजः**। **मारुतमि**ति। ब्रह्मचारिणो यदध्ययनयमनियमानुष्ठानजनितं तेजस्तदवकीर्णिनः सतो मरुदिन्द्रबृहस्पत्यग्नीश्चतुर उपसंक्रमेऽन्यतरेभ्यः आज्याहुतीर्जुहुयादित्याज्याहुतिविधेरर्थवादः ॥ १२० ॥

(९) **भारुचिः**। यत एवमतोऽवकीर्णी ॥

**एतस्मिन्नेनसि प्राप्ते वसित्वा गर्दभाजिनम् ॥**
**सप्तागारांश्चरेद्भैक्षं स्वकर्म परिकीर्तयन् ॥ १२१ ॥**

(१) **मेधातिथिः**। **वसित्वा** आच्छाद्य। **स्वकर्मा**वकीर्णोऽस्मीत्येवम् ॥ १२१ ॥

(२) **सर्वज्ञनारायणः**। प्रकृतकर्मशेषमाह **एतस्मिन्निति**। पूर्वोक्तं होमं कृत्वा एतदब्दं कर्तव्यमित्यर्थः। **गर्दभस्य** हविरुत्पादनभूतस्य**जिनं** चर्म स्वकर्माधिकरणम् ॥ १२१ ॥

(३) **कुल्लूकः**। एतस्मिन्नवकीर्णाख्ये पाप उत्पन्ने पूर्वोक्तं गर्दभयागादि कृत्वा गर्दभचर्म-परिधायेति हारीतस्मरणात्तद्गर्दभसंबन्धिचर्मप्रावृतोऽवकीर्ण्यहमिति स्वकर्मख्यापनं कुर्वन्सप्त-गृहाणि भैक्षं चरेत् ॥ १२१ ॥

(४) **राघवानन्दः**। गर्दभहोमोत्तरकृत्यमाह **एतस्मिन्निति**। एतस्मिन्नवकीर्णिनिमित्ते। **वसित्वा** परिधाय। स्वकर्म अवकीर्ण्यस्मीति ख्यापयन् ॥ १२१ ॥

(५) **नन्दनः**। एतस्मिन्नेनसि कामतः कृतेऽवकीर्णत्वे ॥ १२१ ॥

(६) **रामचन्द्रः**। एतस्मिन् एनसि प्राप्ते सति **गर्दभाजिनं** गर्दभस्य चर्म ॥ १२१ ॥

(८) **गोविन्दराजः**। **एतस्मिन्निति**। सप्तागारं चरेद्भैक्ष्यं स्वकर्मपरिकीर्तयन् ॥ अवकीर्णाख्ये पाप उत्पन्ने पूर्वोक्तगर्दभयागादिकृत्वा तद्गर्दभसंबन्धि चर्म प्रावृत्याकीर्ण्यस्मीत्येवं स्वकर्म ख्यापयन् सप्तगृहं भैक्ष्यं चरेत् ॥ १२१ ॥

**तेभ्यो लब्धेन भैक्षेण वर्तयन्नेककालिकम् ॥**
**उपस्पृशंस्त्रिषवणमब्देन स विशुध्यति ॥ १२२ ॥**

(१) **मेधातिथिः**। प्रातर्मध्याह्नापराह्णेषू**पस्पृशन्** स्नानं कुर्वन्। संवत्सरेण पूतो भवति ॥ १२२ ॥

(२) **सर्वज्ञनारायणः**। **एककालिकं** दिने एकवारम्। **वर्तयन्** भोजनेन प्राणस्थितिं कुर्वन्। **उपस्पृशन्** स्नानं कुर्वन् ॥ १२२ ॥

(३) **कुल्लूकः**। **तेभ्यः** सप्तगृहेभ्यो **लब्धेन भैक्षेणै**ककालमाहारं कुर्वन्सायंप्रातर्मध्यं-दिनेषु च स्नानमाचरन्सोऽवकीर्णी संवत्सरेणैव विशुध्यति ॥ १२२ ॥

(४) **राघवानन्दः**। **उपस्पृशन्** स्नानं कुर्वाण एव शुध्यतीति भावः ॥ १२२ ॥

(५) **नन्दनः**। **तेभ्यो**ऽगारेभ्यः वर्तयञ्जीवन् ऐककालिकमिति स्वार्थे ठक्प्रत्ययः। **उपस्पर्शनं** स्नानं कुर्वन् ॥ १२२ ॥

(६) **रामचन्द्रः**। **तेभ्यः** साप्तागारेभ्यः। **त्रिषवणं** त्रिकालम्। **उपस्पृशन्** स्नानं कुर्वन् ॥ १२२ ॥

(८) **गोविन्दराजः**। **तेभ्य** इति। तद्गृहलब्धेन भैक्ष्येण एककालमाहारं कुर्वन् सायं-प्रातर्मध्यंदिनेषु च स्नानमाचरन् संवत्सरेण योऽवकीर्णी स शुध्यति ॥ १२२ ॥

(९) **भारुचिः**। वेदब्रह्मचारिणः स्त्रीगमन एतत्प्रायश्चित्तं विज्ञेयम्। एवं च समान-कार्यत्वात् प्रव्रजितानामप्येवंविधमेव रेतस्सेकप्रायश्चितं प्रव्रज्याविरोधि स्यात्। तेषां च स्खलितानामन्यप्रायश्चित्तानुपदेशात् ॥ १२२ ॥

**जातिभ्रंशकरं कर्म कृत्वाऽन्यतममिच्छया ॥**
**चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥ १२३ ॥**

(१) **मेधातिथिः**। समाप्तान्युपपातकानि। **अन्यतम**मित्यनुवादः। न हि निमित्तानां समाहारसंभवः। समुदायविवक्षायां न च कस्यचित्प्रायश्चित्तमुपदिशति। को हि मनुष्यः सर्वाणि जातिभ्रंशकराण्यकार्याणि कुर्यात्। एक एव शब्दः प्रायश्चित्तानुदेशेऽशास्त्रताप्रसंगः। न च साहित्यविवक्षाऽप्युक्ता, लक्षणत्वेन श्रवणात्पुरुषं प्रति निमित्तानाम्। अतः प्रत्येकं वाक्यपरिसमाप्तिः 'यस्य पिता पितामहः सोमं न पिबेदि'त्यन्यतरस्य पितुः पितामहस्य वा सोममपीतवतो भवत्येव पशुः। यथा सत्यप्युभयश्रवणे यद्युभयं हविरार्तिमियादित्यन्यतरहविर्विनाशेऽपि भवत्येव पंचशरावः, एवं सर्वप्रायश्चित्तेषु द्रष्टव्यम्। **इच्छयेति** निवक्षितम्। **अनिच्छयेति** च। प्राजापत्यसान्तापनयोः स्वरूपं वक्ष्यति ॥ १२३ ॥

(२) **सर्वज्ञनारायणः**। **जातिभ्रंशकरं** पूर्वोक्तम्। **इच्छया** कामतः। **सांतपनं** सप्ताहसाध्यम् ॥ १२३ ॥

(३) **कुल्लूकः**। 'ब्राह्मणस्य रुजः' कृत्वेत्यादिजातिभ्रंशकर्मोक्तं तन्मध्यादन्यतमं कर्म विशेषं इच्छातः कृत्वा वक्ष्यमाणं सान्तपनं सप्ताहसाध्यं कुर्यात्। अनिच्छातः पुनः कृत्वा प्राजापत्यं वक्ष्यमाणं चरेत् ॥ १२३ ॥

(४) **राघवानन्दः**। उक्तजातिभ्रंशकरमनूद्य प्रायश्चित्तमाह **जातिभ्रंशेति**। इच्छया कृत्वेत्यन्वयः सान्तपनादिव्रतजातस्य लक्षणं वक्ष्यमाणम्। अनिच्छया तु प्राजापत्यं कृच्छ्रम् ॥ १२३ ॥

(५) **नन्दनः**। **जातिभ्रंशकरमिति**। 'ब्राह्मणस्य रुजः' कृत्वेत्याद्युक्तं कर्म ॥ १२३ ॥

(६) **रामचन्द्रः**। इच्छया सान्तपनं कृच्छ्रं अनिच्छया प्राजापत्यं कृच्छ्रम् ॥ १२३ ॥

(८) **गोविन्दराजः**। **जातिभ्रंशकरमिति**। ब्राह्मणस्य रुजः कृत्वेत्यादि जातिभ्रंशकराण्युक्तानि तेषु मध्यादन्यतममिच्छया कृत्वा वक्ष्यमाणं सान्तपनं कुर्यात्। अनिच्छातस्तु कृत्वा प्राजापत्यं वक्ष्यमाणम् ॥ १२४ ॥

(९) **भारुचिः**। सान्तपनं कृच्छ्रं प्राजापत्यं च वक्ष्यति।

**सङ्करापात्रकृत्यासु मासं शोधनमैन्दवः ॥**
**मालिनीकरणीयेषु तप्तः स्याद्यावकैस्त्र्यहम् ॥ १२४ ॥**

(१) **मेधातिथिः**। सङ्करीकरणमपात्रीकरणं पूर्वमुक्तेनेति। एवं **सङ्करापात्रकृत्यास्विति** संज्ञिभेदाद्बहुवचनम्। **कृत्या**शब्दः प्रत्येकमभिसंबध्यते। 'कृत्यं' कारणम्। **ऐन्दवो मासः** चान्द्रायणः। **यावको** यवविकारः पेयलेह्यादिः। अत्राविशेषश्रवणेऽपीच्छानिच्छयोर्गुरुलघुभावो विज्ञेयः ॥ १२४ ॥

(२) **सर्वज्ञनारायणः**। **संकरापात्रकृत्यासु** संकरीकरणेषु (अपात्रीकरणेषु) च मासं क्रियमाणमैन्दवं चान्द्रायणं शोधनम्। मासमिति प्रायश्चित्तसौम्यकृच्छ्रस्यैन्दवपदेन

परिग्रहशङ्कानिरासार्थम् । एतत्कामतः पूर्वोक्तं सांतपनम् । तप्तो यावकैः प्रसृतिमात्रं यवानां चूर्णं गोमूत्रे साधयित्वा तस्य तप्तस्य पानम् । एतदकामतः । कामतो द्विगुणम् ।। १२४ ।।

(३) **कुल्लूकः** । खराश्वोष्ट्रेत्यादिना सङ्करीकरणान्युक्तानि निन्दितेभ्यो धनादानमित्यादिना चापात्रीकरणान्युक्तानि तेषां मध्यादन्यतममिच्छातः कृत्वा चान्द्रायणं मासं शुद्धये कुर्यात् । कृमिकीटवयोहत्येत्यादिना मलिनीकरणान्युक्तानि तन्मध्यादेकमिच्छातः कृत्वा त्रिरात्रं यवागूं क्वथितामश्नीयात् ।। १२४ ।।

(४) **राघवानन्दः** । एवं संकरापात्रीकरणयोराह **संकरेति** । ऐंदवं चान्द्रायणम् । यावको यवागूः सतप्तस्त्र्यहं भोक्तव्यः ।। १२४ ।।

(५) **नन्दनः** । सङ्करणीषु पात्रत्वकरणीषु च क्रियासु ऐन्दवं चान्द्रायणं **मलिनीकरणीयेषु** मलावहेषु तप्तं तप्तकृच्छ्रं त्र्यहं यावकमभ्यावान्नम् ।। १२४ ।।

(६) **रामचन्द्रः** । **संकरः** वर्णसंकरः अपात्रहस्ते दानकरणं कृत्यासु अभिचारादिक्रियासु ऐन्दवं चान्द्रायणं मासं मासपर्यन्तं कायशोधनम् । तु पुनः मलिनीकरणीये कर्मणि तप्तः तप्तकृच्छ्रः स्यात् त्र्यहं यावकः यावकाहारः ।। १२४ ।।

(८) **गोविन्दराजः** । **सङ्करापात्रकृत्यास्विति** । खराश्वोष्ट्रेत्यादि निन्दितेभ्यो धनादानमित्यादिना च सङ्करीकरणापात्रीकरण्यान्युक्तानि तेषु मध्यादन्यतममिच्छातः कृत्वा अनिच्छया कृतं चाद्रायणं शुद्ध्यर्थं कुर्यात् कृमिकीटयोः हत्येति मलिनीकरणीयान्युक्तानि तन्मध्यादन्यतममिच्छातः कृतं त्र्यहं यावकं पिबेत् । यावकं यवकृतं पेयाकृतितप्तं पिबेत् ।। १२४ ।।

(९) **भारुचिः** । अन्यतममिति वर्तते । एवं चेच्छया प्रत्येकं गुरुप्रायश्चित्तोपदेशैः अनिच्छया तस्य लघुत्वमर्थसिद्धं पूर्वशास्त्रादेव ।। १२४ ।।

**तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः ।।**
**वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडशः ।। १२५ ।।**

(१) **मेधातिथिः** । सवनगतयो राजवैश्ययोर्ब्राह्मणसममुक्तम् । इह तु ततोऽन्यत्र स्वधर्मानुष्ठानयोश्चतुर्थाष्टमविभागविधिः । तथा च वृत्तस्य ग्रहणं सर्वक्रियार्थम् । त्रीणि वर्षाणि क्षत्रियस्य, सार्धवर्षं वैश्यस्य, नव मासान् शूद्रस्य । यत्तु 'स्त्रीशूद्रविट्क्षत्रियवध' इति तत्परित्यक्तस्वकर्मणोः अधर्मस्थितयोः । शूद्रस्य 'वृत्तं' द्विजशुश्रूषादि, न महायज्ञानुष्ठानं च । वृत्तं शीलं वैश्यवृत्तौ वैश्यस्य वृत्तावेव वा तिष्ठति । गहने यथा समये 'तियच्छग्निवेति' । स्वधर्मपराणां विधिवत्प्रायश्चित्तम् ।। १२५ ।।

(२) **सर्वज्ञनारायणः** । क्षत्रादिहत्यासु प्रायश्चित्तमाह **तुरीय** इति । **ब्रह्महत्यायाः** ब्रह्महत्यादि प्रायश्चित्तस्य द्वादशवार्षिकादेः **तुरीयश्**चतुर्थभागः न तु मरणस्य तत्तुरीयभागासंभवात् तत्तदुपाधिविशेषादेव प्रायश्चित्तानामधिकाल्पत्वे । अत्रापि क्षत्रियविशेषणतया वृत्तस्थपदमावर्तनीयम् । वैश्ये हत इति शेषः । अष्टमांशो ब्रह्मवधप्रायश्चित्तस्य । एवं

षोडश इत्यत्रापि शूद्रे वृत्तस्थे। अत्र च प्रायश्चित्तं विशेषत उपदिशतापि स्त्रीशूद्रविट्क्षत्रवध इति क्षत्रादिवधानामुपपातकसंज्ञाकरणं तत्संसर्गिणामुपपातकिसंसर्गितया कर्माधिकाराभावज्ञापनार्थम्। महापातकत्वे ह्येषां तत्संसर्गस्य पातित्यहेतुत्वात्। द्विजातिकर्मभ्यो हानिः पतनमिति वचनात्प्राक्प्रायश्चित्तात्सर्वकर्महानिः स्यादिति ।। १२५ ।।

(३) **कुल्लूकः।** ब्रह्महत्यातुरीयो भागः त्रैवार्षिकरूपः द्वादशवार्षिकस्य चतुर्थो भागः। एतच्च प्रायश्चित्तं स्त्रीशूद्रविट्क्षत्रवध इत्युपपातकत्वेनोपदिष्टम्। त्रैवार्षिकत्वापेक्षया गुरुत्वाद्वृत्तस्थक्षत्रियस्य कामतो वधे द्रष्टव्यम्। वैश्ये साध्वाचारे कामतो हतेऽष्टमो भागः सार्धवार्षिकं व्रतं शूद्रे वृत्तस्थे कामतो हते नवमासिकं द्रष्टव्यम् ।। १२५ ।।

(४) **राघवानन्दः।** स्त्रीशूद्रक्षत्रियवधो नास्तिक्यं चोपपातकमित्युपपातकत्वेनोक्तानां विशेषतः प्रायश्चित्तमाह **तुरीय** इति। **तुरीयस्त्रैवार्षिकः। अष्टमांशः** सार्धसांवत्सरिकः। **षोडशांशो** नवमासिकः एतद्व्रतस्थक्षत्रियादीनां कामतो वधे। ब्रह्महत्याया इति तद्धर्मभिक्षामुण्डनादिप्राप्तये वृत्तस्थ इति त्रिष्वनुषञ्जनात् ।। १२५ ।।

(५) **नन्दनः।** क्षत्रियस्य वृत्तस्थस्येति विपरिणामः ।। १२५ ।।

(६) **रामचन्द्रः।** इति क्षत्रियादि कर्मकर्तृकमित्यविरोधः। जातिमात्रक्षत्रियवधे वृत्तस्थक्षत्रियवधे ।। १२५ ।।

(८) **गोविन्दराजः। तुरीय** इति। ब्रह्महत्यावधाद्द्वादशवार्षिकाच्च चतुर्थो भागः क्षत्रियवधे स्मृतः। वैश्ये च साध्वाचारेऽष्टभागः। शूद्रे हते षोडशभागो बोद्धव्य इतीदं साध्वाचारक्षत्रियविट्शूद्रविषयं गुरुत्वात् स्त्रीशूद्रविट्क्षत्रवध इत्येतत्पुनरुपपातकप्रायश्चित्तं ज्ञानाज्ञानभेदेन च चान्द्रायणवैकल्पिकमसत्क्षत्रविट्शूद्रविषयं लघुत्वात्। एतच्च ब्रह्महत्याव्रतचतुर्थांशादबुद्धिपूर्ववधे येनेदमाह ।। १२५ ।।

(९) **भारुचिः।** अनिच्छया तस्य लघुत्वमर्थसिद्धं क्षत्रियादीनामपरः प्रायश्चित्तविधिः वैकल्पिक उपपातकप्रायश्चित्ताच्चान्द्रायणात्। येन स्त्रीशूद्रविट्क्षत्रवध उपपातकमध्य उपदिष्टः। सदसद्विभागापेक्षया च क्षत्रियादीनामिदं वैकल्पिकमन्यत् प्रायश्चित्तं पूर्वोक्तात्। तथा चोक्तम्—**'वैश्येऽष्टमोंऽशो वृत्तस्थ'** इति। इदमपरमधुना क्षत्रियादिवध एव क्षत्रियादिप्रायश्चित्तमुपदिश्यते, पूर्वश्लोकोपदिष्टप्रायश्चित्ताद्वैकल्पिकम् ।। १२५ ।।

**अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः ।।**
**वृषभैकसहस्रा गा दद्यात्सुचरितव्रतः ।। १२६ ।।**

(१) **मेधातिथिः।** इदमपरं दानप्रायश्चित्तम्। संभवद्वित्तस्य तपो नास्तीति। वक्ष्यति, 'दानेन वधनिर्णेकम्' इत्यादि। **अकामत** इति न विवक्षितं, महत्त्वात्प्रायश्चित्तस्य। यदि वा 'सवनगतयोरेवाकामत' इति कल्पनीयम्। वृषभ एको यासां सहस्रे वा **वृषभैकसहस्राः** ।। १२६ ।।

(२) **सर्वज्ञनारायणः।** यागस्थक्षत्रियविट्घाते तु कामतो ब्रह्महव्रतमुक्तमकाम-

तस्तत्राह **अकामत** इति। वृषभ एको गावश्च स्त्रियः सहस्रमिति वृषभैकसहस्रा गावः ॥ १२६ ॥

**(३) कुल्लूकः।** अबुद्धिपूर्वकं पुनः क्षत्रियं निहत्य वृषभेणैकेनाधिकं सहस्रं यासां गवां ता आत्मशुद्ध्यर्थं ब्राह्मणेभ्यो दद्यात् ॥ १२६ ॥

**(४) राघवानन्दः।** तेषामेवाकामतो वधेऽप्याह **अकामत** इति चतुर्भिः। द्विजोत्तमः द्विजउत्तमो यत्र समुदाये स तथा चातुर्वर्ण्यमित्यर्थः। **वृषभैका** वृषभ एको यासु गोषु एवमेकशतमित्यादि ज्ञेयम् ॥ १२६ ॥

**(५) नन्दनः।** कामतो वध एतदुक्तमकामतस्त्वाह **अकामतस्तु राजन्यमि**ति। ऋषभेणैकेनाधिकं सहस्रं यासां ता ऋषभैकसहस्रा गाः ॥ १२६ ॥

**(८) गोविन्दराजः। अकामत** इति। अबुद्धिपूर्वं पुनः क्षत्रियं निहत्य वृषभ एकः सहस्रे यासां गवां आत्मनः शुद्ध्यर्थं ब्राह्मणेभ्यो दद्यात् ॥ १२६ ॥

**(९) भारुचिः।** अर्थाच्चेदं वित्तवतः प्रायश्चित्तमुपदिश्यते। पूर्वं चावित्तस्य तपः। वक्ष्यति च दानं तस्य तपसा विकल्पं "दानेन वधनिर्णेकं सर्पादीनामशक्नुवन्निति" इत्येवमादि। **अकामत** इत्ययं च प्रमादस्तुल्यर्थोऽर्थवादः। यस्मान्न ह्यकामतो गरीयः प्रायश्चित्तमुपपद्यत इत्युक्तं पुरस्तात्। एवं तावत् संभवद्वित्तस्य प्रायश्चित्तमिदमन्यत् दरिद्रस्य पूर्वोक्तमनूद्यते वैकल्पिकमेतस्य ॥ १२६ ॥

**त्र्यब्दं चरेद्वा नियतो जटी ब्रह्महणो व्रतम् ॥**
**वसन्दूरतरे ग्रामाद्वृक्षमूलनिकेतनः ॥ १२७ ॥**

**(१) मेधातिथिः।** आद्योऽर्धः श्लोकस्तुरीय इत्यस्यानुवादः। **जटीति** चीरखट्वाङ्गधारणादि निवृत्त्यर्थमिति केचित्। तदयुक्तं तत्रैव ते धर्मास्तदीयतुरीयभागातिदेशो नान्येषां सत्यपि संभवे, सरस्वतीपरिसर्पणादीनामिव प्रयोजनसत्त्वोपपत्तौ। **दूरत** इति ग्रामान्निवृत्तिः। **वृक्षमूले** कुटीं कृत्वेति ॥ १२७ ॥

**(२) सर्वज्ञनारायणः।** त्र्यब्दं चरेदिति दानाशक्तौ। एवं च त्र्यब्द ब्रह्महव्रतप्रायश्चित्तस्य गोसहस्रदानानुकल्पत्वेनाभिधानात्स्वकल्पितगणनानुरोधेन यत्कैश्चिद्द्वादशवार्षिकव्रतानुकल्पत्वेन षष्ठ्यधिकगोशतत्रयदानं कैश्चित् द्वादशीत्यधिकगोशतदानं व्यवस्थापितं तद्भ्रमादेवेति मन्तव्यम् ॥ १२७ ॥

**(३) कुल्लूकः।** यद्वा संयतो जटावान्ग्रामाद्विप्रकृष्टवृक्षमूले कृतनिवासो ब्रह्महणि यदुक्तं ब्रह्महाद्वादशसमा इत्यादि तद्वर्षत्रयं कुर्यात्। ननु तुरीयो ब्रह्महत्याया इत्यनेन पुनरुक्तिर्वाच्या। जटी दूरतरे ग्रामाद्वृक्षमूलनिकेतन इति वचनाद्यतिरिक्तशवशिरोध्वजधारणादिसकलधर्मनिवृत्त्यर्थत्वादस्य ग्रन्थस्याकामाधिकाराच्चेदमकामतः अत एवाङ्गलाघवाद्युचितम् ॥ १२७ ॥

(४) **राघवानन्दः**। दुर्वृत्तानां कामतो वधापेक्षया वा विकल्पः। अत्र जटीति विशेषणात्पूर्वं मुण्डनं बोद्धव्यम्। ब्रह्महत्याया इत्यादि विशेषणं भैक्षचर्याशिरोध्वजादि धारणाद्यर्थं। लब्धतुरीयांशयोः समानत्वेऽपि मुण्डनादिभेदेन कामतोऽकामत इति ॥ १२७ ॥

(८) **गोविन्दराजः**। **त्र्यब्दमि**ति। ब्रह्महा द्वादशसमा इत्यादि वर्षत्रयं चरेदेतदकामतस्त्वित्येतद्वैकल्पिकम्। गोसहस्राभावे दानेन वधनिर्णेकं सर्पादीनामशक्नुवन्निति दर्शनाज्जटी दूरतरे ग्रामाद्वासं वृक्षमूलनिकेतन इत्येतत् स्थिरो ग्रहणादङ्गान्तरनित्यर्थं तुरीयो ब्रह्महत्याया इत्यत्र तु सर्वं द्वादशवार्षिकाङ्गाजातं भवति ॥ १२७ ॥

(९) **भारुचिः**। **जटिल**—वचनं नियमार्थत्वादन्येषां खट्वाङ्गीत्येवमादीनां निवृत्त्यर्थम् ॥ १२७ ॥

**एतदेव चरेदब्दं प्रायश्चित्तं द्विजोत्तमः ॥**
**प्रमाप्य वैश्यं वृत्तस्थं दद्याच्चैकशतं गवाम् ॥ १२८ ॥**

(१) **मेधातिथिः**। पूर्वत्राष्टमोंऽशः अनेन द्वादशो विधीयते। अल्पत्वा**दब्दं** न्यूनगुणस्य विधिरयमिति विज्ञायते। "ननु **वृत्तस्थं** इति श्रुतम्"। सत्यम्। संप्रति वृत्तस्थो वधकाले, प्राङ्निर्गुण इति। यस्तु सर्वदैव वृत्तस्थस्तस्य पूर्ववदिति ज्ञेयम् ॥ १२८ ॥

(२) **सर्वज्ञनारायणः**। **एतदेवे**ति सवनस्थ वैश्यवधे। दद्याद्वैकशतं गवामिति वाकारः समुच्चयार्थः। व्रतान्ते एकवृषाधिकगोशतदानं कार्यमित्यर्थः। अन्यथा हि दानमुक्त्वा तदनुकल्पतया व्रतमुपदिश्येतेति युज्येत। त्रिवर्षानुकल्पसहस्रव्यवस्थाश्रयणेन त्रवार्षिकगोशतदानस्यासंगतिरेवेति। दद्याच्चैकशतमिति क्वचित्पाठः ॥ १२८ ॥

(३) **कुल्लूकः**। एतदेव द्वादशवार्षिकव्रतमकामतः साध्वाचारं वैश्यं निहत्य वर्षमेकं ब्राह्मणादिः कुर्यात्। एकाधिकं वा गोशतं दद्यात् ॥ १२८ ॥

(४) **राघवानन्दः**। **एतदेवे**ति। जटादिधारणवृक्षमूलनिकेतनादि विशिष्टं गोदानेन सह विकल्पितम् ॥ १२८ ॥

(५) **नन्दनः**। **ऋषभेणैकाधिकं गवां** शतं एतदेव प्रकृतम् ॥ १२८ ॥

(७) **मणिरामः**। तुरीयो ब्रह्महत्याया इति पूर्वमुक्तमपि पुनरत्रोक्तिशवशिरो ध्वजधारणादिधर्मनिवारणार्थं अकामतो हनने इदं वा कार्यम् ॥ १२८ ॥

(८) **गोविन्दराजः**। **एतदि**ति। ब्रह्महत्यायां यदुक्तं व्रतं ब्रह्महा द्वादशसमा इत्येतदेव कामाधिकारादकामतः साध्वाचारं वैश्यं निहत्य ब्राह्मणादिसंवत्सरं चरेद्वित्तवान् पुनरेकवृषभाधिकगवां शतं दद्यात्। पूर्वोत्तरश्लोकयोरिति वृषभग्रहणात् ॥ १२८ ॥

(९) **भारुचिः**। सम्भवद्वित्तस्येदं पूर्ववत् वैकल्पिकम्। द्विजोत्तमग्रहणं चेतरवर्णनिदर्शनार्थम नावधारणार्थम् ॥ १२८ ॥

**एतदेव व्रतं कृत्स्नं षण्मासान् शूद्रहा चरेत् ।**
**वृषभैकादशा वाऽपि दद्याद्विप्राय गाः सिताः ॥ १२९ ॥**

(१) **मेधातिथिः** । अत्रापि मासषट्कं नवकं च वृत्तस्थेतरभेदेन योज्यम् । यथाश्रुतसंख्यं च गोदानं सर्वत्र वैकल्पिकम् । द्विजोत्तमग्रहणं च प्रदर्शनार्थम् । **सिता** न वर्णतः । किं तर्हि ? शुद्धिसामान्यात्या नहुक्षीरास्त्व्यपत्या अनष्टप्रजाश्च ॥ १२९ ॥

(२) **सर्वज्ञनारायणः** । एवं वृत्तस्थशूद्रवधोक्तद्वादशवार्षिकब्रह्महव्रतषोडशांशचरणाशक्तौ । एतदेव व्रतमिति क्वचित्पाठः । तत्र वृत्तस्थशूद्रवधोक्तद्वादशवार्षिकब्रह्महव्रतषोडशांशचरणाशक्तौ । एतदेव व्रतमिति षण्मासव्रताचरणं वृषभाधिकदशगोदानसहितमत्रोपदिष्टम् । उभयतोऽधिकस्यैकस्य वृषभस्य दानविधानाद्वैश्येप्यधिक एको वृषभो देय इति गम्यते । वसेद्दूरतर इत्यादिना च ग्रामान्तादिवासो वैकल्पिको ब्रह्महव्रतोक्तोऽत्र व्युदस्यते । जटीति त्वनुवादमात्रं शवशिरोधारणाद्यङ्गान्तरनिवृत्त्यर्थम् । अत्र च द्विजोत्तम इत्यभिधानाद्ब्राह्मणस्यैव तद्व्रतमन्येषां स्वोत्कृष्टवर्णहनने भविष्ये बहुतराभिधानात्किंचिदाधिक्यमुन्नेयम् । **सिता** इति शूद्रवधप्रायश्चित्त उक्तत्वात्तत्रैवान्वितम् ॥१२९ ॥

(३) **कुल्लूकः** । एतदप्यकामत इदमेव व्रतं शूद्रहा षण्मासं चरेत् । वृषभ एकादशो यासां गवां ताः शुक्लवर्णा ब्राह्मणाय दद्यात् ॥ १२९ ॥

(४) **राघवानन्दः** । वृत्तस्थशूद्रेप्येवमित्याह **एतदेवेति** ॥ १२९ ॥

(६) **रामचन्द्रः** । वृषभ एकादशो यासां ता वृषभैकादशगाः ॥ १२९ ॥

(७) **मणिरामः** । एतदेव ब्रह्महत्याप्रायश्चित्तमेव वृत्तस्थं साध्वाऽऽचारम् । प्रमाप्य अकामतो मारयित्वा एकशत एकावृतं चांद्रायणम् ॥ १२९ ॥

(८) **गोविन्दराजः** । **एतदिति** । एतदेव व्रतं ब्रह्महा द्वादशसमा इति तदुक्तं तद्व्रतं गवोपेतं चाकामाधिकारादकामतः साध्वाचारं शूद्रं निहत्य कुर्यात् । वित्तवान् पुनः वृषभ एकादशो यासां गवां ताः शुक्ला गाः ब्राह्मणाय दद्यात् ॥ १२९ ॥

(९) **भारुचिः** । उक्तार्थः श्लोकः । पीतवर्णाग्रहणं चात्र शुद्धिसामान्यात् । एवं च त्रीण्येतानि प्रायश्चित्तानि क्षत्रियादिवधे विकल्पन्ते । पूर्वोक्तं चान्द्रायणमिह च प्रकरणे गोदानं ब्रह्महत्याप्रायश्चित्तविकल्पश्च कामकृतः । केचित्तु समुच्चयमेतयोरस्मिन् प्रकरण उपदिष्टयोः प्रायश्चित्तं मन्यन्ते । समुच्चयेन श्लोकान् पठन्ति "त्र्यब्दं चरेच्च नियतः" । तथा 'प्रमाप्य वैश्यं वृत्तस्थं दद्याच्चैकशतं गवाम्' । 'एवमेव वृषभैकादशा गाश्चापी'ति । तदेतदयुक्तं शास्त्रन्यायविरोधात्, एतस्यां च कल्पनायामुपपातकप्रायश्चित्तं चान्द्रायणं लघु नोपपद्येत गुरुणः प्रायश्चित्तस्य दानतपःसमुच्चयस्योपदेशेन । तथा लोके व्यवहारः । 'पणलभ्यं हि न प्राज्ञः क्रीणाति दशभिः पणैरि'ति । वैकल्पिकयोरेव तावदेतयोरुपदेशे चान्द्रायणस्यानर्थक्यं प्राप्नोतीति । किं पुनः समुच्चितयोरत्यन्तगुरुत्वात् । तस्मात् समुच्चयाभावा'द्वा' शब्दो विकल्पार्थः पठितव्यः ॥ १२९ ॥

**मार्जारनकुलौ हत्वा चाषं मण्डूकमेव च ।**
**श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत् ।। १३० ।।**

**(१) मेधातिथिः ।** अतिमहत्त्वात्प्रायश्चित्तस्य समुदायवधे प्रायश्चित्तमेतत् । "ननु चात्र साहित्यं न विवक्षितमित्युक्तं यतो जातिभ्रंशकरादिषु । कथं चैते सर्वे चैकस्य हन्तव्यतया उपनयेयुः । अतिरिक्तसद्भावे न तन्निमित्तं स्यात् । अर्थान्तरमेवैतद्वशेनैव तच्छक्यते वक्तुम् । तेनावृत्तेन हन्ता । अधिकवधे त्वन्यद्भविष्यति । नैतच्छक्यते न्यूने वधे च न स्यात् । पयः पिबेदित्यादि प्रत्येकविधेन संबध्यते । न समुदाये प्रत्येकं वाक्यपरिसमाप्तिः समुदाये वा । अर्थान्तरे तु स्थातुं लभ्यते" । यत्तावदुच्यते साहित्यं न विवक्षितमिति । तत्र न विवक्ष्यते यत्र प्रत्येकं संबन्धिवाच्यमर्थवत् । यथा 'यस्य पिता पितामहः सोमं न पिबेत्' इति । यत्र पुनरविवक्ष्यमाणे वाच्यमेवानर्थकं तत्र तत्परिहारार्थं युक्ता विवक्षा । यथा वक्ष्यति 'सहस्रस्य प्रमापणे पूर्णं वानसीति' । अत्राविवक्षायां सहस्रस्येति व्यर्थं स्यात् । एवं हि शास्त्रान्तरविरोधादतिमहत्त्वे युक्तैव विवक्षा । "ननु च पदोपादानतायामपि लक्षणागतस्य विशेषणस्याविवक्षैव । यथा यस्योभयं हविरित्युभयशब्दार्थं तत्र तुल्यम् । अत्र हविरुभयमिति च पदद्वये वक्ष्यमाणे वाक्यभेदः । हविरत्रोभयं चेति । यत्रावस्थाभेदस्तत्र वाक्यभेदपरिहारार्थमवश्यं भेदः । अन्यतरस्मिन् व्यवहितो गुणो वा ह्रातव्यो भवति । तथोभयशब्दे सर्वमस्ति । आर्च्छेदिति हविःशब्देन व्यवहृतो भवति संख्यानुरूपत्वात् । गुणानुवादकत्वं वाऽस्य संभवति । अविवक्षिते च तस्मिन् परिशिष्टं वाक्यमर्थवाद एव । इह पुनः समुदायविवक्षायां सहस्रशब्दविवक्षायां वा कृत्स्नमेव वाक्यमनर्थकम् । तथा ह्येतावद्वाच्यं स्यात् । स्थानतां प्रमाणतां तथाऽस्यां शूद्रहत्याव्रतमित्येतावद्वक्तव्यं स्यात् । प्रमाणे शूद्रहत्येति । एतावतामेव हिंसा संभवति" । तथाऽन्यदप्येकं जातीयकं विशेषणं न विवक्ष्येत, समानन्यायत्वात् 'फलदानां तु वृक्षाणाम्, इति । ततश्च सर्वमसमंजसं स्यात् । पौरुषेयं चेदं वाक्यं नैव वैदिकम् । वेदे च कस्य पुरुषस्य प्रयोगः किमर्थमनर्थकं प्रयुक्तमिति । इह तु बुद्धिपूर्वे प्रयोगे मात्रायामप्ययुक्तमानर्थक्यम् । तत्साहित्यविवक्षाविशेषणविवक्षा वायुक्तैव । यच्चोक्तं "कथं च तदिति सर्व ऐत इति च" तत्राप्याखेटकार्थमृगयायां दावदाहिनो वा उपपद्यतयैव । यदप्युक्तमतिरिक्तसद्भावे न तन्निमित्तमिति, तदप्ययुक्तम् । न त्वाधिक्ये पूर्वेषां नाशो न्यूनेषु च तथैव कल्पना कार्या ।। १३० ।।

**(२) सर्वज्ञनारायणः ।** चाषः स्वर्णकाकः शतपदः । **शूद्रहत्याव्रतं** कुर्याच्छूद्रवधं प्राप्य तप्तकृच्छ्रमिति संबन्धोक्तम् । एतच्च कामकृते ।। १३० ।।

**(३) कुल्लूकः ।** बिडालनकुलचाषभेककुक्कुरगोधापेचककाकानामेकैकं हत्वा शूद्रहत्याव्रतं स्त्रीशूद्रवध इत्युपपातकप्रायश्चित्तं गोवधव्रतं चान्द्रायणं चरेत् । न तु शूद्रे ज्ञेयस्तु षोडशेत्यादि प्रायश्चित्तं पापस्य लघुत्वात् । चान्द्रायणमप्येतत्कामतोऽभ्यासादिविषये द्रष्टव्यम् ।। १३० ।।

**(४) राघवानन्दः ।** मार्जाराद्यष्टानां कामतः प्रत्येकवधे षण्मासव्रतमाह **मार्जा-**

रेति। चाषं शतपत्राख्यपक्षिणम्। चान्द्रायणमिति केचित्। तत्र श्रुतस्यैव नियामकत्वा-दुपपातकत्वेन चान्द्रायणमिति विशेषतोऽनुक्तस्थल इति भावः ॥ १३० ॥

(५) नन्दनः। शूद्रहत्याव्रतं प्रत्येकं चरेदिति ॥ १३० ॥

(६) रामचन्द्रः। चाषं स्वर्णकाकं नीलकण्ठश्वागोधोलूकः शूद्रहत्याव्रतं कामकृते तप्तकृच्छ्रं चरेत् ॥ १३० ॥

(८) गोविन्दराजः। मार्जारनकुलाविति। विडालनकुलचाषं मण्डूकश्च गोधोलूक-काकानामेकैकं हत्वा शूद्रवधव्रतं स्त्रीशूद्रविट्क्षत्रवध इति उपपातकप्रायश्चित्तं गोवधव्रतं चान्द्रायणं चरेत्। शूद्रे ज्ञेयस्तु षोडश इत्याद्यतिदेशेन स्यात् न्याय्यत्वात्। यद्येवं किमिति गोवधादि गणपाठ एवैतेन पठितः नैवं तत्र पाठे पयः पिबेत्त्रिरात्रं चेत्यत्र पुनरेषां ग्रहणं कर्तव्यं स्यात्। यत्समुचितवधे एतत्प्रायश्चित्तमुत्तरे पयः पानादिना लघुना सह विकल्पः स्यात् न्याय्यत्वादित्याहुस्तदसत्समुच्चयवाचिशब्दाश्रवणात् विज्ञानादिकृतभेदेन च व्यवस्थित-विकल्पसंभवादतिगुरुणा लघीयसो ज्ञानादिभेदेन व्यवस्थितविकल्पो वान्याय्य इति। प्रास्येदात्मानमग्नौ वा गृहं वासपरिच्छदं ब्राह्मणाय दद्यादित्येवमादिषु न चास्य समुचित-विषयत्वमुत्तरस्य च प्रत्येकगोचरत्वे पयः पिबेत्त्रिरात्रं वेत्येवं वा शब्दः संगच्छते। तस्मात्तत्स्थौल्यात्। प्रायश्चित्तस्यैच्छातो निवेश्यैनघ्नतः संतपसि समर्थस्यात्यन्ततपसि अत्यन्तमशक्तस्येति धार्मिकस्येदं प्रायश्चित्तम्। उत्तरं पुनः कथंचित्। प्रमादसंजात-व्यतिक्रमस्यात्यन्तधार्मिकस्य तपसि अत्यन्तमशक्तश्चेति न किंचिद्वैषम्यम् ॥ १३० ॥

(९) भारुचिः। समुच्चितानां वध एतत् प्रायश्चित्तम्। तथा च वक्ष्यति 'अस्थिमतां सत्त्वानां सहस्रस्य प्रमापणे' इति। अपरे तु लघुत्वादेतेषां शूद्रजातानां प्रतिलोमानामायोग-वक्षत्तृचण्डालानां यद्वधे प्रायश्चित्तं तदेतत्समस्तवध इति। प्रत्येकं तु वध इदमन्यत् प्रायश्चित्तं पूर्वस्माल्लघूपदिश्यते ॥ १३० ॥

**पयः पिबेत्त्रिरात्रं वा योजनं वाऽध्वनो व्रजेत् ॥**
**उपस्पृशेत्स्रवन्त्यां वा सूक्तं वाऽब्दैवतं जपेत् ॥ १३१ ॥**

(१) मेधातिथिः। प्रत्येकं वधे प्रायश्चित्तान्तरमुच्यते। पयः क्षीरं, प्रसिद्धतरत्वा-त्प्रयोगस्य, नापः, सत्यामप्युभयार्थतायां; यथा 'पयसा जुहोति' इति। यथैव वराह शब्दो मेघे पर्वते सूकरे वर्तते। प्रसिद्धतरः सूकरे। पर्वतादिप्रवृत्तौ सामानाधिकरण्यमपेक्षते 'वराहो हिमवान्' 'वराहः पारियात्र' इति। प्रकृते च भोजने भक्तादौ शरीरस्थित्यर्थं प्राप्ते तत्स्थाने पयो विधीयमानमन्यदन्नं निवर्तयति। तपोरूपत्वाच्चैतदेव प्रतिपत्तुं युक्तम्। तापयति दुःखयतीति तपः। अतो यथा 'प्राणायामे घृतप्राशनमिति' नात्र पौरस्य भोजनं निवर्त्यते, एवमिह नाचमनं निवर्तयति। यो घृतप्राशनं भोजनान्तरनिमित्तं बाधत इति। नापः पयः-पानेन विकल्पिताः, किं तर्हि ? उपस्पृशेत् स्रवन्त्यामिति। पयःपानात्तद्गमने अध्वगमनशब्द उक्तस्य नद्यां स्नानम्। स्रवन्तिवचनात्तडागसरसोर्निवृत्तिः। अब्दैवतं 'आपो हि ष्ठा'

इत्यादि ऋक्समुदायोक्तं पवमानसूक्तम्। स्मृत्यन्तरेषु 'कृशरभोजननेकार्थं लोहदण्डं च दक्षिणेति'। **व्रजेत्** न देशान्तरप्राप्तिरित्येव किं तर्हि? पादाभ्यां गमनम्।। १३१।।

(२) **सर्वज्ञनारायणः**। अकामतस्त्वाह **पयः पिबेदिति**। **पयः** क्षीरमल्पम्। योजनं वाध्वनो वजेदिति भेषजार्थं तद्धिंसायाम्। क्षत्रियादीनां उपस्पृशेदिति द्वयम्। ब्राह्मणस्य उपस्पर्शः स्नानम्। **अब्दैवतं** आपो हिष्ठेति ऋचम्।। १३१।।

(३) **कुल्लूकः**। अबुद्धिपूर्वकं मार्जारादीनां वधे त्रिरात्रं क्षीरं पिबेत्। अथ मन्दानलत्वादिना न समर्थः। त्रिरात्रं प्रतियोजनमध्वनो व्रजेत्। अत्राशक्तस्त्रिरात्रं नद्यां स्नायात् तत्राप्यक्षमस्त्रिरात्रमापोहिष्ठेत्यादि सूक्तं जपेत् यथोत्तरं लघुत्वात्पूर्वपूर्वासंभव उत्तरोत्तरपरिग्रहो न तु वैकल्पिकः।। १३१।।

(४) **राघवानन्दः**। एषामकामतो वधे प्रायश्चित्तचतुष्टयमाह **पय** इति। तत्राप्यशक्तितो व्यवस्था न तु वैकल्पिकं उत्तरोत्तरस्य लघुत्वात्। पयोऽत्र दुग्धं हत्वाग्रहं पिबेत्क्षीरमिति याज्ञवल्क्योक्तेः। त्रिरात्रं व्रतचतुष्टयेऽप्यनुगतम्। **स्रवन्त्यां** पुण्यनद्याम्। **अब्दैवतं** आपो हिष्ठेति।। १३१।।

(५) **नन्दनः**। असकृत्कृतविषयमेतत्सकृत्कृतविषयेऽप्याह **पयः पिबेत्त्रिरात्रं वेति**। **अब्दैवतं** हिरण्यवर्ण इत्यादिकम्।। १३१।।

(६) **रामचन्द्रः**। **पयः** दुग्धं त्रिरात्रं वा पिबेत्। **अध्वनो** योजनं त्रिरात्रं व्रजेत्। उपस्पृशेदिति भेषजार्थं न कूलायां क्षत्रियवैश्ययोः स्रवंन्त्यां **उपस्पृशेत्** स्नायात्।। १३१।।

(७) **मणिरामः**। इदं बुद्धिपूर्वकमार्जारादिहनने ज्ञेयं अबुद्धिपूर्वके त्वाह। **पय** इति। **अब्दैवतं** आपोहिष्ठेत्यादि सूक्तं अत्र पूर्वपूर्वकरणाऽशक्तौ उत्तरोत्तरं ज्ञेयम्।। १३१।।

(८) **गोविन्दराजः**। **पय** इति। एषां मार्जारादीनामबुद्धिपूर्वे वधे त्रिरात्रं क्षीरं पिबेत्। तत्रान्तरत्वादिनासमर्थः प्रकृतं त्रिरात्रं योजनमध्वनो गच्छेत्तत्राप्यशक्तस्त्रिरात्रं नद्यां स्नायात् तत्राप्यपर्याप्तः त्रिरात्रमापोहिष्ठेत्येतत्सूक्तं जपेत्।। १३१।।

(९) **भारुचिः**। असमर्थः सन्नध्वगमनस्यात्यन्तवृद्धो गम्यते समुद्रगामिन्यां विशिष्टायां स्नायादित्यर्थः। सपरिष्करस्नानोपदेशपरतश्चैतत् सामर्थ्याद् विशिष्टमुपदिश्यते। **सूक्तं वाब्दैवतं जपेत्**। सर्वेषु च पयः पानं सामर्थ्यादुपवासो वा त्रिरात्रं सप्रत्ययाप्रत्ययवधोपेक्षया।। १३१।।

**अभ्रिं कार्ष्णायसीं दद्यात्सर्पं हत्वा द्विजोत्तमः।।**
**पलालभारकं षण्ढे सैसकं चैकमाषकम्।। १३२।।**

(१) **मेधातिथिः**। **द्विजोत्तम**ग्रहणमतंत्रम्। तीक्ष्णामायसीम**भ्रीम्**। **कार्ष्णायसी**ग्रहणं काष्ठादिनिवृत्त्यर्थम्। **षण्ढे** नपुंसके। तच्चतुर्विधम्। अरेतो वातरेतो वा अप्रवृत्तेन्द्रियमुभयव्यञ्जनं वा। सर्वप्राणिमात्रसंबन्धेनैतत्प्रायश्चित्तम्। ब्राह्मणस्य शूद्रस्य मेषस्य छागस्य च।। १३२।।

(२) **सर्वज्ञनारायणः।** **अभ्रिं** खनित्रं **कार्ष्णायसीं** सर्वलोहाम्। द्विजोत्तम इति विप्रोऽपीत्यर्थः। **पलालभारकं** धान्यतृणभारं पञ्चकृष्णलसीसमसहितम्। **षण्ढे** नपुंसके मानुष एव॥ १३२॥

(३) **कुल्लूकः।** सर्पं हत्वा ब्राह्मणाय तीक्ष्णाग्रं लोहदण्डं दद्यात्। नपुंसकं हत्वा पलालभारं सीसकं च माषकं ब्राह्मणाय दद्यात्॥ १३२॥

(४) **राघवानन्दः।** वैधेतरहिंसायाः पापजनकत्वं ज्ञापयन् प्रायश्चित्तमाह **अभ्रि-मिति** द्वादशभिः। **अभ्रिः** स्त्रीकाष्ठकुद्दालः। अभ्रिस्तीक्ष्णकोणयुक्तातीक्ष्णाग्रलोहदंडं च षण्ढे हते तच्चतुर्विधं कृत्रिमाकृत्रिमोभयव्यञ्जनसदृशेन्द्रियं चेति मनुष्यादिसाधारण कर्मानधिकृतत्वाविशेषात्। **माषकं** माषपरिमितसीसकं पलालभारसहितम्। (विशुद्धि-मता पितृजत्वेपि जातं तु बादरायण इत्यत्र स्त्रीपुंसोर्ग्रहणं न तु षंढस्य पुण्यपापयोर्वचनस्यैव प्रमाणत्वादिति )॥ १३२॥

(५) **नन्दनः।** **अभ्रिः** कुद्दालकः पलालभारं दद्यादित्येव माषकं माषपरिमाणम्॥ १३२॥

(६) **रामचन्द्रः।** सर्पं हत्वा कार्ष्णायसीमभ्रिं लोहदण्डं दद्यात्। **षण्ढे** नपुंसके हते धान्यस्य पलालभारं दद्यात् धान्यस्य पलालभारं पवारमिति। सैसकं माषकं सीसस्य माषमात्रम्॥ १३२॥

(७) **मणिरामः।** **अभ्रिं** तीक्ष्णाग्रं लोहदंडं **षंढे** नपुंसके॥ १३२॥

(८) **गोविन्दराजः।** **अभ्रीमिति।** पलालभारकं षण्ढे सीसकं चैव माषकम्॥ १३२॥

(९) **भारुचिः।** पलालेनास्य माषकस्य च समुच्चय आनन्तर्यसामर्थ्याद्विज्ञेयः। नाभ्या पलालं च दद्याद् गवे गोपतये वा ब्राह्मणाय॥ १३२॥

**घृतकुम्भं वराहे तु तिलद्रोणं तु तित्तिरौ॥**
**शुके द्विहायनं वत्सं क्रौंचं हत्वा त्रिहायनम्॥ १३३॥**

(१) **मेधातिथिः।** **वराहः** सूकरस्तस्मिन्हते **घृतघटं** दद्यात्। चतुराढको **द्रोणः।** **हायनो** वर्षम्। **वत्सो** गोजातीयो बालः॥ १३३॥

(२) **सर्वज्ञनारायणः।** **कुम्भः** पलशतद्वयम्। **द्रोणमष्टाविंशतिपलाधिकपलशतम्।** **द्विहायनं** द्विवर्षं वत्सं गोः॥ १३३॥

(३) **कुल्लूकः।** सूकरे हते घृतपूर्णं घटं ब्राह्मणाय दद्यात्तित्तिरि संज्ञिनि पक्षिणि हते चतुराढकपरिमाणं तिलं दद्यात् शुके हते द्विवर्षं वत्सं, क्रौंचाख्यं पक्षिणं हत्वा त्रिवर्षं वत्सं ब्राह्मणाय दद्यात्॥ १३३॥

(४) **राघवानन्दः।** **घृतकुम्भं** मध्यमघटपूर्णं घटम्। **तिलद्रोणं** द्रोणपरिमितं तिलं तित्तिरौ पक्षिणि हते। **द्विहायनं** वत्सं द्व्यब्दवयसं गोवत्सं दद्यादित्यध्याहार्यम्। एवं त्रिहायणम्॥ १३३॥

(५) **नन्दनः**। अत्रापि दद्यादित्यनुवर्तते द्विहायनमिति देववत्सरविशेषणम् ।। १३३ ।।

(६) **रामचन्द्रः**। वराहे तु हते घृतकुंभं कुम्भः पलशतरूपः। क्रौंचं हत्वा त्रिहायनं वत्सम् ।। १३३ ।।

(७) **मणिरामः**। **वराहः** शूकरः। **क्रौंचं** कूंज इति ख्यातं पक्षिणं हत्वा त्रिहायणं वत्सम् ।। १३३ ।।

(८) **गोविन्दराजः**। **घृतकुंभमिति**। शूकरे हते घृतपूर्णं घटं दद्यात्तित्तिराख्ये पक्षिणि हते तिलानां पलशद्वयं दद्याच्छुके हते द्विवर्षं वत्सम्। क्रौञ्चाख्यं पक्षिणं हत्वा त्रिवर्षं वत्सं दद्यात् ।। १३३ ।।

**हत्वा हंसं बलाकां च बकं बर्हिणमेव च ।।**
**वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गाम् ।। १३४ ।।**

(१) **मेधातिथिः**। **हंसादयः** पक्षिणः। **वानरो** मर्कटः। **स्पर्शयेद्**दद्यात्। प्रत्येकवधे चैतत्प्रायश्चित्तं द्वन्द्वानिर्देशादित्युक्तम् ।। १३४ ।।

(२) **सर्वज्ञनारायणः**। **बलाका** विशकण्ठी। **बर्हिणं** मयूरम्। **भासं** शतपत्राख्यपक्षिणम्। **स्पर्शयेत्** दद्यात् ।। १३४ ।।

(३) **कुल्लूकः**। हंसबलाकामयूरवानरश्येनभासाख्यं पक्षिणामन्यतमं हत्वा ब्राह्मणाय गां दद्यात् ।। १३४ ।।

(४) **राघवानन्दः**। **बर्हिणं** मयूरम्। स्पर्शयेद्दद्याद् **गां** धेनुम् ।। १३४ ।।

(५) **नन्दनः**। स्पर्शयेत्प्रत्येकम् ।। १३४ ।।

(६) **रामचन्द्रः**। हंसादीन्हत्वा ब्राह्मणाय गाः स्पर्शयेद्दद्यात् ।। १३४ ।।

(७) **मणिरामः**। **बर्ही** मयूरः **भाषः** भासः। **स्पर्शयेत्** दद्यात् ।। १३४ ।।

(८) **गोविन्दराजः**। **हत्वेति**। हंसबलाकबकमयूरवानरपाजिकभासाख्यपक्षिणामन्यतमं हत्वा ब्राह्मणाय गां दद्यात्। स्पर्शनं दानम्। अत्रापि गोर्महत्वात्समस्तवध एतत्प्रायश्चित्तमित्याहुः तदसत् क्रौञ्चहनने त्रिहायनवत्सदर्शनात् ।। १३४ ।।

(९) **भारुचिः**। समस्तवध एतत्प्रायश्चित्तं विभागानुपदेशाद्, गोश्च महत्त्वात्, यथा मार्जारनकुलौ हत्वेत्येवमादि। यत्र समस्तानामप्युपदेशे प्रत्येकमिच्छति तत्र पृथग्ग्रहणं करोति। तथा चोपरिष्टात् प्रदर्शयिष्यामः ।। १३४ ।।

**वासो दद्याद्धयं हत्वा पंच नीलान्वृषान्गजम् ।।**
**अजमेषावनड्वाहं खरं हत्वैकहायनम् ।। १३५ ।।**

(१) **मेधातिथिः**। **हयोऽश्वः**। **गजो** हस्ती। **अनड्वान्** पुंगवः। **अजमेषवधे**। खरवधे अनडुत्साहचर्यादेक**हायनो** गोवत्सः ।। १३५ ।।

(२) **सर्वज्ञनारायणः**। वासः प्रकृष्टं हयं केनाप्यपरिगृहीतम्। एवं **गजमपि**। अजमेषौ हत्वा अनड्वाहमनोवहनशक्तं वृषं दद्यात्। एकहायनं वत्सम् ।। १३५ ।।

(३) **कुल्लूकः**। अश्वं हत्वा वस्त्रं दद्याद्धस्तिनं हत्वा पंचनीलान्वृषभान्दद्यात्प्रत्येकं छागमेषौ हत्वा वृषभं दद्याद्गर्दभं हत्वैकवर्षं वत्सं दद्यात् ।। १३५ ।।

(४) **राघवानन्दः**। नीलान् नीलवर्णान्पञ्च गोवृषान्गजं हत्वा दद्यादित्यन्वयः। अनड्वाहं वृषं दद्यादित्यनुषङ्गः। एकहायनं वत्सम् ।। १३५ ।।

(५) **नन्दनः**। एकहायनमनड्वाहमित्यनुवर्तते ।। १३५ ।।

(६) **रामचन्द्रः**। अजमेषौ हत्वा अनड्वाहम्। खरं हत्वा एकहायनं वत्सं दद्यात् ।। १३५ ।।

(७) **मणिरामः**। गजं हत्वा पंच नीलावृषान् दद्यात् अजमेषौ हत्वा अनड्वाहं वृषभं दद्यात्। खरं हत्वा एकहायनं एकवर्षं वत्सं दद्यात् ।। १३५ ।।

(८) **गोविन्दराजः**। **वास** इति। अश्वं हत्वा वस्त्रं दद्यात्। हस्तिनं हत्वा पञ्चनीलान् वृषान् दद्यात्। छागाविकं हत्वा वृषभं दद्यात्। खरं हत्वैकवर्षं वत्सं दद्यात् ।। १३५ ।।

(९) **भारुचिः**। निगदव्याख्यातश्लोकः। अजाविकवधश्च सङ्कीर्णकर उक्तः। एवं च तदीयं प्रायश्चित्तं **अजमेषावनड्वाहमित्यनेनो**पदेशसामर्थ्याद् विकल्पेत। एवमन्यत्रापि योज्यम् ।। १३५ ।।

**क्रव्यादांस्तु मृगान्हत्वा धेनुं दद्यात्पयस्विनीम् ।।**
**अक्रव्यादान्वत्सतरीमुष्ट्रं हत्वा तु कृष्णलम् ।। १३६ ।।**

(१) **मेधातिथिः**। **क्रव्यादा**स्तरक्षुसिंहमृगादयः। **अक्रव्यादाः** रुरुपृषतादयः। **धेनु**र्गौरेव। **कृष्णलं** विशिष्टपरिमाणं सुवर्णम्। दण्डाधिकारशास्त्रपरिभाषा। अन्यत्र लौकिकमेव। 'शतकृष्णलं घृतमायुष्काम' इति ।। १३६ ।।

(२) **सर्वज्ञनारायणः**। **क्रव्यादान्** मांसादान् **मृगान्** हिंस्रव्याघ्रादीन्। **धेनुं** सवत्सां **पयस्विनीं** बहुक्षीराम्। **अक्रव्यादान्** मृगादीन् हरिणादीन्। **वत्सतरीं** द्विहायनीं गाम्। उष्ट्रमपरिगृहीतम्। **कृष्णलं** सुवर्णकृष्णलम् ।। १३६ ।।

(३) **कुल्लूकः**। आममांसभक्षिणो मृगान्व्याघ्रादीन्हत्वा बहुक्षीरां धेनुंदद्यात् आममांसभक्षकान्हरिणादीन्हत्वा प्रौढवत्सिकां दद्यात् उष्ट्रं हत्वा सुवर्णकृष्णलं रक्तिकां दद्यात् ।। १३६ ।।

(४) **राघवानन्दः**। **क्रव्यादान्** व्याघ्रादीन्। **पयस्विनीं** प्रभूतदुग्धाम्। **वत्सतरीं** प्रौढवत्सिकाम्। **कृष्णलं** सुवर्णस्य ।। १३६ ।।

(५) **नन्दनः**। **क्रव्यादान्**मृगान्व्याघ्रादीन् **कृष्णलं** कृष्णलपरिमाणं सुवर्णम् ।। १३६ ।।

(६) **रामचन्द्रः**। **क्रव्यादान्** व्याघ्रादीन्। मृगान् **अक्रव्यादान्** कुरंगादीन्। **वत्सतरीं** धेनुं उष्ट्रं हत्वा कृष्णलं सुवर्णस्य कृष्णलं सुवर्णस्य कृष्णलमात्रम् ।। १३६ ।।

(७) **मणिरामः।** **क्रव्यादां**स्तु मृगान् आममांसभक्षकान् व्याघ्रादीन् **अक्रव्यादान्** मृगान् हरिणादीन् **कृष्णलं** रक्तिकापरिमितं सुवर्णम् ।। १३६ ।।

(८) **गोविन्दराजः।** **क्रव्यादानिति।** आममांसभक्ष्यान् मृगान् व्याघ्रादीन् हत्वा प्रत्यग्रप्रसूतां प्रचुरक्षीरां गां दद्यात्। अमांसभक्षान् मृगान् सारंगादीन् हत्वोत्तीर्णवत्सभावां गां दद्यात्। उष्ट्रं हत्वा सुवर्णरक्तिकां दद्यात् ।। १३६ ।।

(९) **भारुचिः।** धेनूपदेशादेव पयस्सिद्धम्। एवं च सिद्धस्योपदेशोऽतिशयार्थो विज्ञेयः ।। १३६ ।।

**जीनकार्मुकबस्तावीन्पृथग्दद्याद्विशुद्धये ।।**
**चतुर्णामपि वर्णानां नारीर्हत्वाऽनवस्थिताः ।। १३७ ।।**

(१) **मेधातिथिः।** **अनवस्थिताः।** बहुभिः संगच्छमाना वेश्यावृत्तमाचरन्त्योऽ-'नवस्थिता' भवन्ति। न पुनः शास्त्रातिक्रममात्रम्, तथा सति न परपुरुषसंप्रयोग एव लभ्यते। वर्णक्रमेण **जीनादिदानात् जीनं** चर्मपुटं मुटकाधारादिप्रयोजनम्। **कार्मुकं** धनुः। **बस्तः** छागः। **अविर्मेषः।** **पृथग्ग्रहणं** लिङ्गादुक्तं न समुदाये प्रायश्चित्तमिति। केचिद्गत्वेति पठन्ति तदयुक्तम्। हिंसाप्रकरणात् ।। १३७ ।।

(२) **सर्वज्ञनारायणः।** **जीनं** चर्मपुटम्। **कार्मुकं** धनुः। **बस्त**श्छागः। **अविर्मेषः।** पृथक् क्रमादेकैकमारणे। **अनवस्थिताः** अनियताः अनियतवर्गगा नारीः ।। १३७ ।।

(३) **कुल्लूकः।** ब्राह्मणादिवर्णस्त्रियो लोभादुत्कृष्टापकृष्टपुरुषव्यभिचारिणीर्हत्वा ब्राह्मणादिक्रमेण चर्मपुटधनुश्छागमेषान् शुद्ध्यर्थं दद्यात् ।। १३७ ।।

(४) **राघवानन्दः।** **जीनं** चर्मपुटम्। **कार्मुकं** धनुः। **बस्त**श्छागः। **अविर्मेषः** **अनवस्थिताः** अनेकपुंदुष्टाः। अकामत इति शेषः। तथा च याज्ञवल्क्यः। दुर्वृत्ता ब्रह्मविट्-क्षत्रशूद्रयोषाः प्रमाप्यतु। दृतिं धनुर्बस्तमविंक्रमाद्द्याद्विशुद्धये। अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेदिति ।। १३७ ।।

(५) **नन्दनः।** **अनवस्थिता** अतिचारिणीः ।। १३७ ।।

(६) **रामचन्द्रः।** **अनवस्थितां** व्यभिचारिणीं हत्वा **जीनं** घृतजलाधारं चर्मकोशं ब्राह्मणीवधे दद्यात्। क्षत्रियायाः वधे कार्मुकं दद्यात्। वैश्यायाः वधे **बस्तं** छागं दद्यात्। शूद्रायाः वधे अविं दद्यात् अन्त आचामेत् ।। १३७ ।।

**[ वर्णानामानुपूर्व्येण त्रयाणामविशेषतः ।**
**अमत्या च प्रमाप्य स्त्रीं शूद्रहत्याव्रतं चरेत् ।। १ ।। ]**

(७) **मणिरामः।** **अनवस्थिता** व्यभिचारिण्यः। व्यभिचारिणीब्राह्मणीवधे **जीनं** चर्मपुटं क्षत्रियावधे कार्मुकम्। वैश्यावधे **बस्तं** छागम्। शूद्रावधे मेषमिति यथाक्रमेण दद्यात् ।। १३७ ।।

(८) **गोविन्दराजः।** **जीनकार्मुकबस्तावीनि**ति। ब्राह्मणादिचातुर्वर्ण्यजातीयाः स्त्रियो नैकोत्कृष्टापकृष्टपुरुषगमनेन पतन्तीभूताः कथंचिदनिच्छातो हत्वा चर्मपुटधनुच्छागमेषान् यथाक्रमं शुद्धर्थं दद्यात् ।। १३७ ।।

(९) **भारुचिः।** **जीनं** चर्मपुटं दद्यात्। ब्राह्मणाय तदुपभागदेशे। ब्राह्मणीमनवस्थितां हत्वा। क्षत्रियां **कार्मुकं** ब्राह्मणायैव। तद्भृत्यापहरणं रक्षार्थम् ब्राह्मणतन्त्रस्य। वैश्याम्**बस्तं** शूद्राम**विम्**। पृथग्ग्रहणाच्चात्रान्यत्र समुदायेषु प्रायश्चित्तं न पृथग्भावादिति विज्ञेयम्। उपगम्येति केचित्, न युक्तं, तद्धिंसाप्रकरणान्नारीं **हत्वानवस्थितः** इति च पाठात्। तथा चोपसंहारं प्रकरणान्ते करिष्यति 'एतैर्व्रतैरपोह्यं स्यादेनो हिंसासमुद्भवमिति ।। १३७ ।।

**दानेन वधनिर्णेकं सर्पादीनामशक्नुवन् ।।**
**एकैकशश्चरेत्कृच्छ्रं द्विजः पापापनुत्तये ।। १३८ ।।**

(१) **मेधातिथिः।** **निर्णेकः** शुद्धिः। हिंसायां **दानं** मुख्यमिति दर्शयति। न च तस्यैकैकश इति लिङ्गात् क्वचित्समुदायेऽपीति। **द्विज** इत्यादिपादपूरणम्। अविशेषग्रहणे कृच्छ्रशब्दं प्राजापत्ये इति स्मरन्ति ।। १३८ ।।

(२) **सर्वज्ञनारायणः।** दानेनेति सर्पादीनां न मार्जारादीनाम्। **एकैकशः** प्रत्येकम्। कृच्छ्रं प्राजापत्यं तस्यैव कृच्छ्रेषु प्रथमपाठात्। तथा च कार्ष्णाय सदानाभिसक्तावेकप्राजापत्यचरणमन्येषु मूल्योत्कर्षापकर्षापेक्षया प्राजापत्यार्धतद्वैगुण्यादि योज्यम् ।। १३८ ।।

(३) **कुल्लूकः।** अभ्रिप्रभृतीनामभावाद्दानेन सर्वपापनिर्हरणं कर्तुमसमर्थो ब्राह्मणादिः प्रत्येकवधे कृच्छ्रं प्राथम्यात्प्राजापत्यं द्विजः पापनिर्हरणार्थं चरेत्। सर्पादयश्चाभ्रिं कार्ष्णायसीं दद्यादित्येवमारभ्यैतत्पर्यन्ता गृह्यन्ते ।। १३८ ।।

(४) **राघवानन्दः।** सर्पादिस्त्रीपर्यन्तानामुक्तप्रायश्चित्ताशक्तौ प्रतिस्वं कृच्छ्रमेकं चरेदित्याह **दानेनेति**। द्विजो नरमात्रं छत्रिन्यायेन अत एवोपसंहारे वक्ष्यति ।। एषा पापकृतामुक्ता चतुर्णामपि निष्कृतिरिति। कामतस्तु चान्द्रायणं एतच्च कामकृत इति वक्ष्यति ।। १३८ ।।

(५) **नन्दनः।** **वधनिर्णेकं** वधपापशुद्धिम् ।। १३८ ।।

(६) **रामचन्द्रः।** सर्पादिवधनिर्णेकं प्रायश्चित्तं दानेन कर्तुमशक्नुवन् तदा एकैकशः कृच्छ्रं द्विजः चरेत् ।। १३८ ।।

(७) **मणिरामः।** एकैकशः प्रत्येकं सर्पादीनां वधे कृच्छ्रं प्राजापत्यं चरेत् ।। १३८ ।।

(८) **गोविन्दराजः।** **दानेनेति**। पुटद्यभावाद्दानेन सर्पादिवधपापनिर्हरणं कर्तुमसमर्थो ब्राह्मणादिप्रत्येकवधे कृच्छ्राणां मध्ये प्रथमं प्राजापत्यं कृच्छ्रं पापनिर्हरणार्थं सर्पादयश्च अभ्रिकार्ष्णायसीं दद्यादित्यतः प्रभृति निर्दिष्टा गृह्यन्ते ।। १३८ ।।

(९) **भारुचिः।** अनेन च गम्यते प्रायश्चित्तेषु दानं प्राथमकल्पिकम्, येन तदभावे कृच्छ्रमिह शास्ति ।। १३८ ।।

**अस्थिमतां तु सत्वानां सहस्रस्य प्रमापणे ।।**
**पूर्णे चानस्यनस्थ्नां तु शूद्रहत्याव्रतं चरेत् ।। १३९ ।।**

(१) **मेधातिथिः ।** स्वल्पशरीरत्वमिहास्थिमत्त्वम्, अनस्थिसाहचर्यात् । **अनः** शकटस्तत्संख्यानमेतत् । उक्तार्थं सत्येव ।। १३९ ।।

(२) **सर्वज्ञनारायणः ।** अस्थ्नावतां अस्थिमतां अनस्थिसाहचर्यात्क्षुद्रजन्तूनां ज्येष्ठकृकलासादीनां सहस्रस्य । अनस्थ्नां पिपीलिकादीनां पूर्णेऽनसि शकटवाह्ये भारे हते शूद्रहत्याव्रतं तप्तकुच्छ्रम् ।। १३९ ।।

(३) **कुल्लूकः ।** अनास्थिसाहचर्यादस्थिमतां प्राणिनां कृकलासादीनां सहस्रस्य वधे शूद्रवधप्रायश्चित्तमौपदेशिकं कुर्यात् । **अस्थिरहितानां** च मत्कुणादीनां शकटपरिमितानां वधे तदेव प्रायश्चित्तं कुर्यात् ।। १३९ ।।

(५) **नन्दनः ।** अनस्थ्नां सत्वानां पूर्णेऽनस्यनस्थभिः सत्त्वैः प्रमापितैः पूर्णे शकटे पूग पर्याप्तभार इति यावत् ।। १३९ ।।

(६) **रामचन्द्रः ।** अस्थिमतां सत्त्वानां कृकलासादिपूर्णे चानसि शकटे प्रमापणे अनस्थ्नां तु पुनः अनसिपूर्णे शूद्रहत्या व्रतं कृच्छ्रं चरेत् ।। १३९ ।।

(७) **मणिरामः । अस्थिमतां** कृकलासादीनाम् । **अनस्थिमतां** मशकयूकादीनां **प्रमापणे** मारणे । शूद्रहत्या व्रतं चांद्रायणम् ।। १३९ ।।

(८) **गोविन्दराजः । अस्थ्यन्वितानामिति ।** अनस्थिसाहचर्यादस्थिमतां प्राणिनां शूद्र जन्तूनां कृकलासादीनां सहस्रस्य वधे क्षूद्रवधव्रतमौपदेशिकं कुर्यात् । अस्थिरहितानां प्राणिनां क्षुद्रजन्तूनां मत्कुणादीनां च शकटपूरणपरिमाणानां वधादेतदेव व्रतं कुर्यात् ।। १३९ ।।

(९) **भारुचिः ।** इत्युक्तं समुदायहिंसां परिज्ञायास्थिमतां च शूद्रस्यावृत्तस्य हिंसायां यत्प्रायश्चितं तच्चरेत् ।। १३९ ।।

**किंचिदेव तु विप्राय दद्यादस्थिमतां वधे ।।**
**अनस्थ्नां चैव हिंसायां प्राणायामेन शुद्ध्यति ।। १४० ।।**

(१) **मेधातिथिः । किंचिदिति** स्वल्पधनमुच्यते । परिमाणतः प्रयोजनतो मूल्यतश्च । पूर्वेषामेव प्रत्येकवध एतत् । अनुक्तनिष्कृतयश्च'नास्थिमन्तो' ज्ञेयाः । आत्मनिरोधः **प्राणायामः ।** मलिनीयेषु यत्कृमिकीटवयोग्रहणं तदुपचितग्रहपरिमाणार्थम् । इदं तु ये क्षुद्रा मशकादयः ।। १४० ।।

(२) **सर्वज्ञनारायणः ।** अस्थिमतां सहस्रोनवधे किंचिद्दद्यादिति पणो देय इति सुमन्तुवचनात्पणो देयः । अनस्थ्नामिति शकटभारादूनवध एतत् ।। १४० ।।

(३) **कुल्लूकः । अस्थिमतां** क्षुद्रजन्तूनां कृकलासादीनां प्रत्येकं वधे । किंचिदेव दद्यात् । अस्थिमतां वधे पणो देय इति सुमन्तुस्मरणात्किंचिदेवेति । पणो बोद्धव्यः अनस्थिमतां तु

यूकामत्कुणादीनां प्रत्येकं वधे प्राणायामेन शुद्धो भवति। प्राणायामश्च ।। सव्याहृतिकां सप्रणवां सावित्रीं शिरसा सह ।। त्रिः पठेदायतप्राणः प्राणायामः स उच्यते इति वसिष्ठप्रोक्तलक्षणो ग्राह्यः ।। १४० ।।

(४) **राघवानन्दः।** किंच उक्तसर्पाद्यतिरिक्तानामल्पदेहानामस्थिमतां वधे किंचिद्देयम्। अनस्थिमतां शकटान्न्यूने प्राणायामः। तत्र प्राणायामलक्षणं वसिष्ठः प्राह ।। सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।। त्रिः पठेदायतप्राणः प्राणायामः स उच्यत इति ।। गायत्र्यनधिकारिणां मनसा। सन्यासिनां प्रणवेनैवेत्युक्तम् ।। १४० ।।

(५) **नन्दनः।** किञ्चिच्छब्देन मुष्टयष्टकमुच्यत इति व्याचक्षते ।। अष्टमुष्टिर्भवेत्किंचिद्किंचिच्चत्वारिपुष्कलं ।। पुष्कलानि च चत्वारि पूर्णपात्रं विधीयत इति ।। १४० ।।

(६) **रामचन्द्रः।** अस्थिमतां वधे किंचित् अष्टमुष्टि किंचिद्यच्छेत् किंचिद्विप्राय-दद्यात् ।। १४० ।।

(८) **गोविन्दराजः। किञ्चिदिति। अस्थिमतां** क्षुद्रजन्तूनां कृकलासादीनां प्रत्येकं वधे किंचिदेवास्थिमतां वधे पणो देय इति सुमन्तुस्मरणात् पणं ब्राह्मणाय दद्यात्। अनस्थ्नां तु प्रत्येकं वधे प्राणायामेन ।। सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह। त्रिः पठेदायतप्राणः प्राणायामः स उच्यते इति वसिष्ठोक्तलक्षणेन शुध्यति ।। १४० ।।

(९) **भारुचिः।** एतेषामेष प्रत्येकं हिंसायामधुनोच्यते। प्रत्येकमित्यस्यारम्भसामर्थ्याद्विज्ञायते। अनस्थ्नां चैव हिंसायां प्राणायमेन शुद्ध्यति ।। कृमिकीटवयो हत्या मलिनीकरणेषूक्ताः। एवं च सति तदीयं प्रायश्चित्तं समानाश्रयत्वादनेन विकल्पेन ।। १४० ।।

**फलदानां तु वृक्षाणां छेदने जप्यमृक्शतम् ।।**
**गुल्मवल्लीलतानां च पुष्पितानां च वीरुधाम् ।। १४१ ।।**

(१) **मेधातिथिः। फलदा** आम्रकण्टक्यादयः। **ऋक्शतजपो** द्विजानाम्। शूद्रस्य तर्हि किं? केचिदाहुः 'इन्धनार्थमशुष्काणाम्' इति उपपातकप्रायश्चित्तम्। तच्च न, अतिमहत्त्वात्। यदि न तद्भवति किमर्थं तर्ह्युपपातकेषूपदेशः। भूयोभूयः प्रवृत्तौ स्यादिति। तस्माच्छूद्रस्य द्विरात्रत्रिरात्रादीत्येव कल्पयेत्। **गुल्मादयो** व्याख्याताः। **लता** वृक्षशाखाः ।। १४१ ।।

(२) **सर्वज्ञनारायणः। ऋक्शतं** गायत्र्या ऋचः शतावृत्त्या जप इत्यर्थः। **गुल्मा** बीजपूराद्याः। **वल्यः** कूष्माण्डाद्याः। **लता** वृक्षारोहिण्यो वल्यः। **वीरुत्** दूरप्रसारिणी लता। **पुष्पितानां** चेति सर्वत्रान्वितम्। तथा फलदानामित्यपि ।। १४१ ।।

(३) **कुल्लूकः। फलदानामा**म्रादीनां वृक्षाणां **गुल्मानां** कुब्जकादीनां **वल्लीनां** गुडूच्यादीनां **लतानां** वृक्षशाखासक्तानां **पुष्पितानां च वीरुधां** कूष्माण्डादीनां प्रत्येकं छेदने पापप्रमोचनार्थं सावित्र्यादिऋक्शतं जपनीयम् ।। इन्धनार्थमशुष्काणां द्रुमाणामवपातनम् इत्यादेरुपपातकमध्ये पठितस्य गुरुप्रायश्चित्ताभिधानात्। इदं फलवद्वृक्षादिछेदने लघुप्रायश्चित्तं सकृदबुद्धिपूर्वकविषयं वेदितव्यम् ।। १४१ ।।

(४) **राघवानन्दः ।** वृक्षादिवीरुदंतानां छेदेप्याह । ऋक्शतं ऋगत्र गायत्री । **वीरुधां** कूष्माण्डादीनाम् ।। १४१ ।।

(५) **नन्दनः ।** भक्ष्यफलदायिनां पुष्पितानां भोज्यपुष्पाणाम् ।। १४१ ।।

(६) **रामचन्द्रः ।** फलादिविरुद्धे हतानां ऋक्शत गायत्रीसंजाप्यम् ।। १४१ ।।

(७) **मणिरामः ।** अस्थ्यनस्थिमतां समुदायवधे प्रायश्चित्तमुक्त्वेदानीं तेषां प्रत्येकवधे प्रायश्चित्तमाह । **फलदानमिति । गुल्मानां** कुब्जकादीनां **वल्लीनां** गुडीच्यादीनाम् । **लतानां** वृक्षशाखासक्तानाम् । **पुष्पितानां** च **वीरुधां** कूष्मांडादीनाम् । एतेषां प्रत्येकमबुद्धिपूर्वकं सकृत् छेदने **प्रायश्चित्तमाह** ऋक्शतं सावित्र्यादिऋक्शतं जप्यम् ।। १४१ ।।

(८) **गोविन्दराजः । फलदानामिति । फलदानां वृक्षाणां** आम्रादीनां **वीरुधां** बहुपर्णानां संजातपुष्पाणां छेदने पापप्रमोचने लिङ्गानां ऋचां शतं जपनीयम् ।। १४१ ।।

(९) **भारुचिः ।** एतच्चायज्ञीये छेदन एषां प्रायश्चित्तम् । तथा च वक्ष्यति 'वृथालम्भेऽनुगच्छेद् गां' इत्येवमादिः ।। १४१ ।।

**अन्नाद्यजानां सत्त्वानां रसजानां च सर्वशः ।।**
**फलपुष्पोद्भवानां च घृतप्राशो विशोधनम् ।। १४२ ।।**

(१) **मेधातिथिः ।** अन्नाद्याद्भुक्तसत्वादेश्चिरस्थिताद्यानि जायन्ते **सत्त्वानि** प्राणिनः । **रसजानामिति** गुडोदश्विदादिभ्यः । उदुंबरमशकादीनि **फलपुष्पोद्भवानि । घृतप्राशः** अशनप्रारंभे घृतं पातव्यम् । 'प्र' शब्द आदिकर्मणि । तेन न प्राकृतं भोजनं निवर्तते, यथा पयोव्रतादौ । तथा चैते प्राणिनः क्षुद्रजन्तवो, येषां वध प्राणायाम उक्तः । तदपेक्षयोपवासोऽतिमहान् । तस्मादाचमनवत् घृतप्राशनम् ।। १४२ ।।

(२) **सर्वज्ञनारायणः ।** अन्नाद्यमोदनादि । **सत्त्वानां** कृमीणाम् । **रसो** गुडादिस्तज्जानाम् । **धृतप्राशो** घृतमात्रेणैकैकदिनवर्तनं शकटमित्यन्तं वधे । अन्यथा तु प्राणायाम एव ।। १४२ ।।

(३) **कुल्लूकः ।** अन्नादिषु जातानां गुडादिरसजातानां चोदुम्बरादिफलसंभवानां मधूकादिपुष्पोद्भवानां च सर्वप्राणिनां वधे घृतप्राशनं पापशोधनम् ।। १४२ ।।

(४) **राघवानन्दः । किंच अन्नेति । अन्नाद्यजानां** धान्यादिषु जातानां **सत्त्वानां** प्राणिनाम् । **घृतप्राशः** दिनमेकं किंचिद् घृतमात्रप्राशनम् ।। १४२ ।।

(५) **नन्दनः ।** अन्नाद्यजानां वध इति शेषः ।। १४२ ।।

(६) **रामचन्द्रः ।** अन्नाद्यजानां सत्त्वानां द्रूनानाम् ।।१४२ ।।

(७) **मणिरामः । अन्नाद्यजानां** घुणादिजंतूनाम् । **रसजानां** गुडादिरसोत्पन्नानां कृमीणाम् । **फलोद्भवानां** उदुंबरादिफलोद्भवानाम् । **पुष्पोद्भवानां** मधूकादिपुष्पोद्भवानाम् ।। १४२ ।।

(८) **गोविन्दराजः । अन्नाद्यजानामिति ।** सक्त्वादिजातानां प्राणिनां गुडाद्युत्पन्नानां च सर्वेषां उदुंबरमधुकादिफलपुष्पोद्भवानां च वधे घृतप्राशनं शोधनं प्रायश्चित्तानां शरीरसंतापनार्थत्वात् । घृतप्राशक्षीरपानादि चोदनायमन्नांतरनिवृत्तिः । शरीरशुद्ध्यर्थे पुनर्घृतप्राशनेन तु गम्येच्छाया प्रेतमित्यादौ न भोजनान्तरं निवर्तेत ।। १४२ ।।

(९) **भारुचिः ।** पूर्वोऽस्थिमदनास्थिमद्विधिरन्नादिजातेभ्योऽन्यत्र विज्ञेयः, अस्यारम्भसामर्थ्यात् ।। १४२ ।।

**कृष्टजानामोषधीनां जातानां च स्वयं वने ।।**
**वृथालम्भेऽनुगच्छेद्गां दिनमेकं पयोव्रतः ।। १४३ ।।**

(१) **मेधातिथिः ।** फालकुद्दालादिना याः **कृष्टे जायन्ते ।** याश्च **स्वयं वने ।** तासां **वृथालंभे** गवादि प्रयोजनेन विना छेदनम् । गवानुगमनम् । **दिनमेकं** परमहर्षाय परिचर्यते । **पयोव्रतं** भोजनान्तरनिवृत्तिः ।। १४३ ।।

(२) **सर्वज्ञनारायणः । कृष्टजानां** कृष्या जनितानाम् । **वृथा** अग्निगवादिप्रयोजनं विना । **आलम्भे** हिंसायाम् । अनुगच्छेत् गोहत्याव्रतवत् । **पयोव्रतः** क्षीरमात्राहारः । ज्ञानात्कृतमुक्तक्रमेण । अज्ञानकृतं तदर्धेन ।। १४३ ।।

(३) **कुल्लूकः ।** कर्षणपूर्वकजातानामौषधीनां षष्टिकादीनां वने च स्वयमुत्पन्नानां नीवारादीनां निःप्रयोजनच्छेदने क्षीराहारः एष्वेकमहो गोरनुगमनं कुर्यात् ।। १४३ ।।

(४) **राघवानन्दः ।** कृष्टजातानां कृषिजातानाम् । वने स्वयं जातानां नीवारादीनाम् । एतेषामुपपातकप्रकरणपठितत्वेऽपि लघुप्रायश्चित्तं सकृदबुद्धिपूर्वविषयकमिति केचित् । तन्नवाचनिकत्वात् । अत एव याज्ञवल्क्यः । वृक्षगुल्मलतावीरुच्छेदने जप्यमृक्शतमिति उपपातकप्रकरणपठनं तु निवृत्तितात्पर्यकमिति । अत एव वक्ष्यति ज्ञानाज्ञानकृतमिति ।। १४३ ।।

(५) **नन्दनः । वृथालम्भो** वृथाच्छेदकः **पयोव्रतः** क्षीरान्नः ।। १४३ ।।

(६) **रामचन्द्रः । कृष्टजानां** हलेनोत्पादितानां ओषधीनां **वृथालम्भे** वृथाच्छेदे गां अनुगच्छेत् ।। १४३ ।।

(७) **मणिरामः ।** कृष्टजानामोषधीनां कर्षणपूर्वकजानां षष्टिकादीनाम् । **वृथालंभ** निःप्रयोजनछेदने । **पयोव्रतः** दुग्धाहारः सन् दिनमेकं गोऽनुगमनं कुर्यात् ।। १४३ ।।

(८) **गोविन्दराजः । कृष्टजानामिति ।** कर्षणपूर्वं जातानामौषधीनां षष्टिकादीनां वने च स्वयमुत्पन्नानां नीवारादीनां निष्प्रयोजने छेदे क्षीराहारः सन्नेकमहो गोरनुगमनं कुर्यात् ।। १४३ ।।

(९) **भारुचिः ।** उपसंहारोपन्यासार्थः श्लोकः ।।

**एतैर्व्रतैरपोह्यं स्यादेनो हिंसासमुद्भवम् ।।**
**ज्ञानाज्ञानकृतं कृत्स्नं श्रृणुतानाद्यभक्षणे ।। १४४ ।।**

(१) **मेधातिथिः। हिंसासमुद्भवं** हिंसात उत्पन्नमेनः पापमेतैरनन्तरोक्तैः प्रायश्चित्तैर-**पोह्यमपनोद्यम्**। बुद्धिपूर्वकृतमबुद्धिपूर्वकृतं वा। **अनाद्यभक्षणे**ऽभक्ष्यभक्षणे यथा पापम-पोह्यते तथा **श्रृणुत**॥ १४४॥

(२) **सर्वज्ञनारायणः**। आत्मनोऽमोक्षं शोध्यम्। अनाद्यस्याभक्ष्यस्य भक्षणे प्रायश्चित्त-मिति शेषः॥ १४४॥

(३) **कुल्लूकः**। एभिरुक्तप्रायश्चित्तैर्हिंसाजनितपापं ज्ञानाज्ञानकृतं निर्हरणीयम्। इदानीमभक्ष्यभक्षणप्रायश्चित्तं वक्ष्यमाणं श्रृणुत॥ १४४॥

(४) **राघवानन्दः**। हिंसाप्रायश्चित्तमुपसंहरन् अभक्ष्यभक्षणे तत्प्रतिजानीते **एतैरि**ति षोडशभिः। ज्ञानाज्ञानकृतमेवा**पोह्यं** नाश्यम्। अनाद्यभक्षणे प्रायश्चित्तं श्रृण्वन्त्वित्यन्वयः॥ १४४॥

(५) **नन्दनः**। एतैरुक्तैः अनाद्यमभक्ष्यम्॥ १४४॥

(८) **गोविन्दराजः**। **एतैरि**ति। एभिः प्रायश्चित्तैर्हिंसाजनितं पापं अपनोद्यं स्यादि-दानीं च भक्षणे बुद्धिपूर्वाबुद्धिपूर्वभक्षणजनितमशेषपापं यथापोह्यते तथा श्रुणुत॥ १४४॥

**अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुध्यति॥**
**मतिपूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः॥ १४५॥**

(१) **मेधातिथिः**। मेखलादीनां निषेधादुपनयनं विज्ञायते। तच्च स्मृत्यन्तरात्तप्त-कृच्छ्रसहितम्। एवं हि गौतमः 'अमत्या मद्यपाने पयोघृतमुदकं वायुं प्रति त्र्यहं तप्तानि सकृच्छ्रास्ततोऽस्य संस्कारः' (२३-२)। सुरा चात्र न पैष्टी, किं तर्हि? गौडी माध्वी वा। "कुत एतत्"। स्मृत्यन्तरदर्शनात्। 'प्रमादान्मद्यमसुरां सकृत्पीत्वा द्विजोत्तमः। गो-मूत्रयावकाहारो दशरात्रेण शुध्यति'॥ पैष्ट्याश्च प्रमादपाने प्रत्यवायप्रायश्चित्तात्। व्रतं विधितो विज्ञाय संवत्सरं कणभक्षश्चान्द्रायणाभ्यासो वा। **मतिपूर्वं** तयोरपि पाने एतद-**निर्देश्यम्**। किं तर्हि? येन **प्राणानामन्तो** भवति। किं तत्? यत् मुख्यायाः सुराया उक्तम्। अभ्यासे चैतद्द्रष्टव्यम्। 'सकृत्पाने असुरा मद्यपाने चान्द्रायणमभ्यसेदिति'। इयमत्र व्यवस्था। बुद्धिपूर्वं पैष्ट्याः पाने प्राणान्तमेव तस्या एवाबुद्धिपूर्वं सकृत्पाने कणभक्षणचांद्रायणाभ्यासोऽबुद्धिपूर्वेऽप्यसकृत्पाने बुद्धिपूर्ववत्। अन्येषां तु मद्यानां बुद्धिपूर्वत्वे चांद्रायणमभ्यसेदिति। अबुद्धिपूर्वं सकृत्पाने तप्तकृच्छ्रसंस्कारगोमूत्रयवकद्रव्याणि। अबुद्धिपूर्वमसकृत्पाने पैष्टीवत्॥ १४५॥

(२) **सर्वज्ञनारायणः**। **वारुणीं** गौडीं माध्वीं च क्षत्रियविशौ त्रिविधसुरेतरद्राक्षादिमद्यं च ब्राह्मणः पीत्वेत्यर्थः। संस्कारेणैव पुनः संस्कारैणैव न तु तं विना तच्च गौतमोक्ततप्त-कृच्छ्रप्रायश्चिताचरणं कृत्वा कार्यम्। मतिपूर्वमपि तत्पाने प्राणान्तिकं प्रायश्चित्तम-निर्देश्यं नादेष्टव्यं किंतु स्मृत्यन्तरोक्तप्रायश्चित्तान्तरमेव संस्कारसहितं कार्यम्॥ १४५॥

(३) **कुल्लूकः**। महापातकप्रकरणव्यवधानेनास्याम्नानान्नेदं मुख्यपैष्टीसुराविषयं वचनं किन्तु तदितरविषयम्। तत्र यथा चैका तथा सर्वा गौडीमाध्व्योर्मुख्यसुरासाम्यबोधनमितरमद्या-

पेक्षया ब्राह्मणस्य प्रायश्चित्तगौरवार्थमित्युक्तं तेनाबुद्धिपूर्वकं गौडीं माध्वीं च पीत्वा गौतमोक्तं तप्तकृच्छ्रं कृत्वा पुनः संस्कारेणैव शुध्यति। तथा च गौतमः अमत्या मद्यपाने पयोघृतमुदकं वायुं प्रत्यहं तप्तकृच्छ्रः ततोऽस्य संस्कारः इत्थमेव व्याख्यातं भविष्यपुराणे ॥ अकामतः कृते पाने गौडीमाध्व्योर्नराधिप ॥ तप्तकृच्छ्रविधानं स्याद्गौतमेन यथोदितम् ॥ बुद्धिपूर्वकन्तु पैष्टीतरमद्यपाने प्राणान्तिकमनिर्देश्यमिति शास्त्रमर्यादा तथा गौडीमाध्व्योर्ज्ञानात्पाने मरणनिषेधादितरमद्यापेक्षया गुरुत्वाच्च मानवमेव कणान्वा भक्षयेदब्दमिति प्रायश्चित्तमुक्तम्। अत एव गौडीमाध्व्योः कामतः पानानुवृत्तौ भविष्यपुराणे ॥ यत्राऽस्मिन्नेव विषये मानवीयं प्रकल्पयेत् ॥ कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि ॥ सुरापापापनुत्त्यर्थं बालवासाजटी ध्वजीति पैष्टीगौडीमाध्वीव्यतिरिक्तपुलस्त्योक्तपानसादिनवविधमद्यस्य प्रत्येकं पाने लघुत्वात्संस्कारमात्रमेव केवलमन्यद्वा लघुत्वात्प्रायश्चित्तं ब्राह्मणस्य युक्तं बुद्धिपूर्वं पानसादिमद्यपाने तु ॥ मतिपूर्वं सुरापाने कृते वै ज्ञानतो गुरू ॥ कृच्छ्रातिकृच्छ्रौ भवतः पुनः संस्कार एव होति भविष्यपुराणीयमन्यद्द्विविधं मुन्यन्तरोक्तम् ॥ १४५ ॥

(४) **राघवानन्दः**। तत्रादौ सुरापानादिविषयकमाह षड्भिः। वारुणीं पैष्ट्यतिरिक्तां महापातकप्रकरणोल्लङ्घनात्। तदुक्तं गौतमेन गौडीमाध्व्योरमत्या पाने पय आदि त्र्यहं तप्तकृच्छ्रं कृत्वा पुनः संस्कार इति ॥ भविष्ये तु ॥ अकामतः कृते पाने गौडीमाध्व्योर्नराधिप ॥ तप्तकृच्छ्रविधानं स्याद्गौतमेन यथोदितमिति ॥ अत्र हेतुर्मतिपूर्वमिति ॥ पैष्ट्यतिरिक्तभक्षणे प्राणान्तिकमनिर्देश्यं न प्रायश्चित्तत्वेन कथितमिति ॥ मत्यापाने त्वसुरयोः कृते वै ज्ञानतो-गुरू ॥ कृच्छ्रातिकृच्छ्रौ भवतः पुनः संस्कारमर्हतीति भविष्योक्तेः। असुरयोरनुदराकवदीषत्सुरयोर्गौडीमाध्व्योः ॥ १४५ ॥

(५) **नन्दनः**। **संस्कारेणो**पनयनेन मतिपूर्वं वारुणीपानं अनिर्देश्यं प्रायश्चित्तव्रतोपदेशेन वक्तुमशक्यं तेन प्राणान्तिकमिति प्राणान्तिकं प्रायश्चित्तं युक्तम् ॥ १४५ ॥

(६) **रामचन्द्रः**। वारुणीं पैष्टीं कुशवारि क्वथितोदकं त्र्यहं पिबेत्। मतिपूर्वं प्राणान्तिकं प्रायश्चित्तं अनिर्देश्यं नादेष्टव्यं किंतु स्मृत्यन्तरोक्तं संस्कारसहितं प्रायश्चित्तं भवति ॥ १४५ ॥

(७) **मणिरामः**। अभक्ष्यभक्षणे प्रायश्चित्तमाह ॥ **अज्ञानादि**ति। **वारुणीं** पैष्टीव्यतिरिक्तां गौडीं माध्वीं वा पीत्वा ॥ संस्कारेणैव शुद्ध्यति तप्तकृच्छ्रं कृत्वा पुनः संस्कारेण शुद्ध्यतीत्यर्थः ॥ प्रकामतः कृते पाने गौडीमाध्व्वोर्नराधिप। तप्तकृच्छ्रं विधानं स्याद्गौतमेन यथोदितं भविष्यपुराणात्। मतिपूर्वं तु गौडीमाध्वीपाने प्राणान्तिकं अनिर्देश्यं इति शास्त्रमर्यादा ॥ १४५ ॥

(८) **गोविन्दराजः**। **अज्ञानादि**ति। महापातककरणतारतम्यात्ततो नेदं मुख्यसुराविषयमपि तु गौडीमाध्वीविषयं तेनाबुद्धिपूर्वां गौडीं माध्वीं वा पीत्वा वपनं मेखलादण्ड इत्युपनयनाङ्गनिषेधादुपनयनेनामत्यापाने पयोघृतमुदकं वायुः प्रत्यहं तप्तानि स कृच्छ्रस्ततोऽस्य संस्कार इति गौतमस्मरणात्तप्तकृच्छ्रसहितेन शुध्यति। बुद्धिपूर्वमपि च गौडीमाध्व्योः सकृत्पाने प्राणान्तिकं न निर्दिष्टव्यमिति शास्त्रमर्यादा। सुरां पीत्वेत्येतस्य सर्वप्रकारसुराविषयत्वाशङ्कायामिति पूर्वमनिर्देश्यमित्येतदुक्तम् ॥ १४५ ॥

(९) भारुचिः । तप्तकृच्छ्रसहितेन पुनस्संस्कारेण शुद्ध्यतीत्येतत् गौतमाद्विज्ञायते, न संस्कारेण मात्रेण तस्यात्यन्ताल्पत्वात् । तथा च गौतमः—'अमत्या मद्यपाने पयो घृतमुदकं वायुं प्रति त्र्यहं तप्तानि स कृच्छ्रः 'ततोऽस्य संस्कार'इति । इहापि चाभक्ष्यकरणे कृच्छ्र उक्तः, मूत्रादिप्राशने सप्रत्यये 'मत्या भुक्त्वाचरेत् कृच्छ्रं रेतो विण्मूत्रमेव चे'ति । स च तप्तकृच्छ्रो गौतमीयादेव । अत्र पुनस्संस्कारः सहकारित्वेन प्रायश्चित्ततया विज्ञायते । एवं च सति न मुख्यसुरायाः पैष्ट्या अमत्या पान एतत्प्रायश्चित्तं, किं तर्हि गौडीमाध्व्योरमत्या पाने तत्प्रत्यासक्तेः । तथा न तत्र गौडीमाध्व्योरमत्या पाने कणपिण्याकमब्दं प्रायश्चित्तमुक्तम्, न पैष्ट्यं प्राणान्तिकप्रायश्चित्तवैकल्पिकम् । इतरथा हि समानार्थत्वे को दैवशप्तो लघुप्रायश्चित्तं परित्यज्य कणादिभक्षणमत्यन्ताभिप्रेतमूलहरं प्राणान्तिकं कुर्यात् । तथा च स्मृत्यन्तरम्—'सुरामद्यपाने चान्द्रायणमभ्यसेदि'ति । एवं सति मुख्यसुरापानप्रायश्चित्तस्य प्राणान्तिकाख्यस्यानेन लघुनात्यन्तविप्रकर्षाद्, गौडीमाध्व्योरेवामत्यापान एतत् प्रायश्चित्तम् । न च सप्रत्ययाप्रत्ययव्यतिक्रमप्रायश्चित्तयोरेकविषययोरिवाभेद उपपद्यते । यथान्यत्र । एतच्च सकृत्पाने असुरामद्ययोः प्रायश्चितं सामर्थ्याद्विज्ञायते । तथा च स्मृत्यन्तरम् "प्रमादान्मद्यमसुरां सकृत्पीत्वा द्विजोत्तमः । गोमूत्रयावकाहारो दशरात्रेण शुद्ध्यति' इति । मतिपूर्वं तु गौडीमाध्व्योः पानमभ्यसतः अनिर्देश्यमिदं प्रायश्चित्तम् । किं तर्हि अस्यान्यत्प्राणान्तिकमेव सप्रत्ययाभ्यासदोषाधिक्येन यथा पैष्ट्या इति । एतस्मादेव च सामर्थ्यान्मुख्यसुरापानेऽप्यप्रत्यये सप्रत्ययप्रायश्चित्तादीषदूनं प्रायश्चित्तान्तरमुत्प्रेक्ष्यम् । तथा च वक्ष्यति— 'शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं प्रकल्पयेदि'ति ।। १४५ ।।

**अपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा ।।**
**पञ्चरात्रं पिबेत्पीत्वा शङ्खपुष्पीश्रृतं पयः ।। १४६ ।।**

(१) **मेधातिथिः** । यत्र सुरारसोऽनुभूयते तत्र तद्भाजनस्थानामपां पाने प्रायश्चित्तमेतत् । "ननु च मद्यशब्दस्य सामान्यशब्दत्वान्मद्यभाण्डस्थिता इत्येव सिद्धे अपः सुरेत्यादि न वक्तव्यम् ।" सत्यम् । यदि सुरामद्ययोर्मद्यपानेऽत्यन्तप्रायश्चित्तभेदो न स्यात् । सति तस्मिन् कल्पनायाश्चानुज्ञातत्वात् सुराभाजनस्थानामधिकतरं स्यादतः कल्पनानिवृत्त्यर्थं समप्रायश्चित्तवचनम् **पंचरात्रं शंखपुष्पीश्रृतं पयः** । श्रृतग्रहणा'त्पयः' क्षीरमेव । क्षीरहविषोरेव श्रृतशब्दः साधुः । **शंखपुष्पी**नामौषधिः । तया पिष्टं क्वथितं पंचाहानि पयः पातव्यम् ।। १४६ ।।

(२) **सर्वज्ञनारायणः** । उपलभ्य गन्धसुराभाण्डस्थजलपाने क्षत्रियविशोः ब्राह्मणस्य तु तादृङ्मद्यभाण्डस्थजलपाने शङ्खपुष्पीसंज्ञकौषधिसहितं यत्क्षीरं श्रितं तत्पानं पञ्चरात्रम् ।। १४६ ।।

(३) **कुल्लूकः** । पैष्टीसुराभाण्डे तदितरमद्यभाण्डेऽवस्थिता अपः सुरारसगन्धवर्जिताः पीत्वा शंखपुष्पाख्यौषधिप्रक्षेपेण पक्वं क्षीरं न तूदकं शंखपुष्पीविपक्वेन त्र्यहं क्षीरेण वर्तयेदिति बौधायनस्मरणात् । पञ्चरात्रं पिबेत् सुरामद्ययोः सर्वत्रैव गुरुलघुप्रायश्चित्ताभिधानादि-

ह्यपि ज्ञानाज्ञानादिप्रकारभेदेन विषयसमीकरणं समाधेयम् । वाचनिकमेव प्रायश्चित्तं साध्य-मिति मेधातिथिराह ।। १४६ ।।

(४) **राघवानन्दः** । सुराभाजनस्था सुरात्र पैष्टी शङ्खपुष्पीश्रृतं चोरिकाशङ्खपुष्पी स्यादित्यौषधिस्तस्या श्रृतं पक्वं क्षीरम् ।। १४६ ।।

(५) **नन्दनः** । सुरा पैष्ट्यादिर्गन्यं मदकरद्रव्यम् ।। १४६ ।।

(६) **रामचन्द्रः** । सुराभाजनस्थाः तथा मद्यभाण्डस्थिताः अपः पीत्वा शङ्खपुष्पीश्रितं क्वथितं पयः पञ्चरात्रं पिबेत् ।। १४६ ।।

(७) **मणिरामः** । शंखपुष्प्याख्यौषधिप्रक्षेपेण पक्वक्षीरं न तूदकम् । शंखपुष्पीति पक्वेन क्षीरेण वर्तयेदिति बोधायनस्मरणात् ।। १४६ ।।

(९) **भारुचिः** । **अपः सुराभाजनस्थाः पीत्वा** कस्य तत्र प्रतिषेधः, यथा-सम्भवं द्विजातेः । **पञ्चरात्रं पिबेच्छङ्खपुष्पीश्रितं पयः** । एवं चास्यान्याहारप्रतिषेधः । रसस्य चाग्रहण इदं प्रायश्चित्तम् । रसस्य तु ग्रहणे सुरापानप्रायश्चित्तमेव न्याय्यम् । असुरा-मद्यभाण्डस्थितास्त्वपः पीत्वा तदूनं न्याय्यं प्रायश्चित्तम् । तथा च कृतविभागप्रायश्चित्ते ते मुख्यामुख्यसुरे पूर्वत्र, तत्सामर्थ्यादिहापि प्रायश्चित्तयोः पूर्ववद्गुरुलघुत्वविभागो विज्ञेयः ।। १४६ ।।

**स्पृष्ट्वा दत्वा च मदिरां विधिवत्प्रतिगृह्य च ।**
**शूद्रोच्छिष्टाश्च पीत्वाऽऽपः कुशवारि पिबेत्त्र्यहम् ।। १४७ ।।**

(१) **मेधातिथिः** । **विधिवत्प्रतिगृह्य** स्वस्तिवाचनिकेन । एवं दत्वेत्यपि । व्रीह्यादौ न दोषः । **कुशो** दर्भः ।। १४७ ।।

(२) **सर्वज्ञनारायणः** । **मदिरां** सुरां दत्वा शूद्रायापि पिबेत् कुशवारि । विधिवत्प्रति-गृह्य चेति जन्मान्तरे यत्प्राप्तुमिच्छति तस्य दानार्हत्वात्सुराप्राप्तिकामः सुरामपि विधिवद्ददाति युज्यते । तथा शूद्रपीतोच्छिष्टा अपः पीत्वा विधिवत्सांतपनकुशोदकग्रहणमन्त्रेण संस्कृतं कुशमिश्रितं वारि त्र्यहं पिबेदित्यर्थः ।। १४७ ।।

(३) **कुल्लूकः** । सुरां स्पृष्ट्वा दत्वा च स्वस्तिवाचनपूर्वकं च प्रतिगृह्य शूद्रोच्छिष्टा-श्चापः पीत्वा प्रतिगृह्येत्युपादानात् ब्राह्मणो दर्भक्वथितमुदकं त्र्यहं पिबेत् ।। १४७ ।।

(४) **राघवानन्दः** । किंच **स्पृष्ट्वेति** । स्पृष्ट्वा देवाद्यर्थं दत्वा परस्मै प्रतिगृह्य स्वस्ति-पूर्वकम् । **कुशवारि** कुशोदकम् ।। १४७ ।।

(५) **नन्दनः** । विधिवत्प्रतिगृह्य सौत्रामण्यादौ ।। १४७ ।।

(६) **रामचन्द्रः** । त्र्यहं **कुशवारि** क्वथितोदकं पिबेत् ।। १४७ ।।

(७) **मणिरामः** । **विधिवत् प्रतिगृह्य** च स्वस्तिपूर्वकं सुरां गृहीत्वा ।। १४७ ।।

(८) गोविन्दराजः। स्पृष्ट्वेति। सुरां स्पृष्ट्वा दत्वा च स्वस्तिवाचनादिपूर्वकं च प्रतिगृह्य शूद्रोच्छिष्टाः सर्वाश्चापः पीत्वा प्रतिगृह्येत्युपादानाद्ब्राह्मणो दर्भक्वथितमुदकं त्र्यहं पिबेत् ।। १४७ ।।

(९) भारुचिः। तथा विभागव्याख्यया विधिवच्छब्दः प्रतिग्रहेणैव सम्बद्धयते स्वस्तिवचनादिना। अथवा दानेऽप्येष एव विधिर्विज्ञेयः, ब्राह्मणस्य सुराप्रतिग्रहः। तत्प्रतिषिद्धाचरणे कुशवारिपानं त्र्यहम्। पूर्ववच्चाहारप्रतिषेधः। शूद्रोच्छिष्टानां चापां पान एतदेव स्यात् प्रायश्चित्तम्। अन्नस्य तु शूद्रोच्छिष्टस्यान्यत् प्रायश्चित्तं वक्ष्यति, 'सप्तरात्रं यवान् पिबेदि'ति। न चात्रागमप्रमाणेऽर्थे न्यायावतारोऽस्ति, यतः नातिशङ्क्य एष शूद्रोच्छिष्टप्रायश्चित्तविकल्पः ।। १४७ ।।

**ब्राह्मणस्तु सुरापस्य गन्धमाघ्राय सोमपः ।**
**प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुध्यति ।। १४८ ।।**

(१) मेधातिथिः। सुरापस्य गन्धमिति सुराया एव जाठरेणाग्निना धातुभिश्च संयोगेन गन्धघ्राणे लघीयः। भाण्डान्तरस्थिताया: प्राप्तिरघ्रायैव। अन्ये तु व्याचक्षते। सुरापस्य ब्राह्मणस्य आघ्राणेऽप्येतदेव। सोमप इति वचनाद्दर्शपूर्णमासयाजिनः कल्पे न। घृतं प्राश्येति। अत्रापि न भोजनान्तरनिवृत्तिः। सुराग्रहणान्न 'मद्य'स्य ।। १४८ ।।

(२) सर्वज्ञनारायणः। गन्धं तत्पीतसुरागन्धम्। अप्सु जलान्तः प्राणानायम्याघमर्षणेन। त्रिः त्रिः पाठेन। घृतं घृतमात्रं तद्दिने। असोमपस्य प्राणायाममात्रम् ।। १४९ ।।

(३) कुल्लूकः। ब्राह्मणः पुनः कृतसोमयागः सुरापस्य मुखसंबन्धिनं गन्धं घ्रात्वा जलमध्ये प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुद्धो भवति ।। १४८ ।।

(४) राघवानन्दः। सोमपः सोमोऽत्र यज्ञाविशिष्टः सुरापस्य पुंसः ।। १४८ ।।

(५) नन्दनः। प्राणानप्सु त्रिरायम्याप्सु निमज्य त्रीन्प्राणायामान्कृत्वा ।। १४८ ।।

(६) रामचन्द्रः। सोमपो ब्राह्मणः सुरापस्य गन्धमाघ्राय अप्सु त्रिः प्राणान् आयम्य घृतं प्राश्य विशुध्यति। असोमपस्य द्विजस्य प्राणायाममात्रम् ।। १४८ ।।

(७) मणिरामः। सोमपः ब्राह्मणः कृतसोमयागो विप्रः। प्राणानप्सु त्रिरायम्य जलमध्ये प्राणायामत्रयं कृत्वा ।। १४८ ।।

(८) गोविन्दराजः। ब्राह्मण इति। ब्राह्मणः पुनः कृतसोमयागः सुरापस्य संबन्धिनं मुखनिःश्वासं सुगन्धं घ्रात्वा उदकमध्ये प्राणायामत्रयं कृत्वा घृतप्राशनं च कृत्वा विशुध्यति ।। १४८ ।।

(९) भारुचिः। सुरापस्य सुरागन्धमाघ्राय एतत्प्रायश्चित्तं कुर्यात्, नान्यम्। तच्छरीरगन्धम्। एवं च सुराया अन्यत्रावस्थिताया अपि गन्धोपलब्धावेतदेव प्रायश्चित्तं एतस्मात् सामर्थ्याद्विज्ञायते। सोमपाशब्दविशेषणेन चासोमपानां ब्राह्मणानामत्र लघुतरं प्रायश्चित्तं स्यात्।

**अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च ।।**
**पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ।। १४९ ।।**

(१) **मेधातिथिः । विण्मूत्रग्रहणं** रेतस उपलक्षणार्थम् । स्मृत्यन्तरे 'पुरीषकुणपरेतसां प्राशने चैवमिति. "किंजातीयविण्मूत्रप्राशन एतत्" मनुष्याणामेव । अन्येषां तु वक्ष्यामः अत्रापि तप्तकृच्छ्रं समुच्चीयते । दर्शितश्च हेतुः । द्विजातय इति विवक्षितम् । शूद्रस्यान्यद्वक्ष्यामः । **अज्ञानादित्यनुवादः** । को हि ज्ञात्वा विण्मूत्रमश्नीयात् । तथा मद्यपाने एतदेवोक्तं 'मद्यं भुक्त्वा चरेत्कृच्छ्रमिति', यदि तु संस्कारो भवति तदा वचनात्तुल्यमेव ।। १४९ ।।

(२) **सर्वज्ञनारायणः ।** अज्ञानादपि किं पुनर्ज्ञानतः सुरासंस्पृष्टमनुपलभ्यमानगन्धम् ! पुनः संस्कारः स्मृत्यन्तरोक्तप्रायश्चित्तान्तः । द्विजातय इत्यस्य ब्राह्मणमात्रपरतानिरासार्थं त्रयो वर्णा इति ।। १४९ ।।

(३) **कुल्लूकः ।** विड्वराहादीनां वक्ष्यमाणत्वादबुद्धिपूर्वकं मनुष्यसंबन्धिमूत्रं पुरीषं वा प्राश्य मद्यसुरासंस्पृष्टं च भक्तादिरसं वा प्राश्य द्विजातयस्त्रयो वर्णाः पुनरुपनयमर्हन्ति ।। १४९ ।।

(४) **राघवानन्दः ।** सुरासंस्पृष्टभक्षणेऽपि सुराभक्षणं भवत्येव । अत्र तादृशरसाद्यज्ञानं विवक्षितं अन्यथा पूर्वापरविरोध इति **प्राश्य** भुक्त्वा पुनः संस्कारमर्हतीत्यन्वयः ।। १४९ ।।

(५) **नन्दनः ।** सुरासंसृष्टं द्रव्यमिति शेषः ।। १४९ ।।

(६) **रामचन्द्रः ।** सुरासंस्पृष्टमेव ओदनादि । चकाराद्रेतःस्पर्शात् ।। १४९ ।।

(७) **मणिरामः । पुनः संस्कारं** पुनरुपनयनम् ।। १४९ ।।

(८) **गोविन्दराजः । अज्ञानादिति ।** विड्वराहादीनां वक्ष्यमाणत्वात् अबुद्धिपूर्वं मनुष्यसंबन्धिमूत्रं पुरीषं वा जग्ध्वा सुरासंस्पृष्टं वातिरसास्वादे भुक्त्वा द्विजातयस्त्रयो वर्णाः पुनरूपनयनं मूत्रपुरीषकुणपरेतसां प्राशने चैवमिति गौतमस्मरणात्तप्तकृच्छ्रसंहितमर्हन्ति । भक्षणेऽपि च ब्राह्मणमत्याचरेत्कृच्छ्ररेतो विण्मूत्रमेव च इत्युक्तं तदप्येव गौतमीयसंस्काररहितं द्रष्टव्यं वचनाच्चात्र ज्ञानाज्ञानभक्षणे त्वतुल्यमेव प्रायश्चित्तम् ।। १४९ ।।

(९) **भारुचिः । अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टं** चासति रसग्रहणे विज्ञेयम् । एतस्मिन् व्यभिचारे पुनस्संस्कारः द्विजातीनां स्मृत्यन्तरसामर्थ्याच्च सतप्तकृच्छः । तथा च गौतमीयमत्रोपसंहरणीयम्, "मूत्रपुरीषरेतसां च प्राशनमित्येतत् । एवं च सति तप्तकृच्छ्रपुनस्संस्कारौ समुच्चितौ प्रायश्चित्तं, न पुनस्संस्कारमात्रम् । अत्यन्तलघुत्वादिहापि च "मत्या भुक्त्वाचरेत् कृच्छ्रं रेतो विण्मूत्रमेव चेत्युक्तमभोज्यप्रकरणे । अथ ब्रूयात्तत्र मतिपान उक्तो मूत्रादीनां कृच्छ्रः, इह त्वमत्येति । सत्यमेतत्, कल्पान्तरत्वात्तु सप्रत्ययाप्रत्ययव्यतिक्रमयोरविरोध इति । पुनस्संस्कारग्रहणाच्च सर्वस्मिस्तद्धर्मे प्राप्त इदं नियमार्थमारभ्यते ।। १४९ ।।

**वपनं मेखलादण्डो भैक्ष्यचर्या व्रतानि च ॥**
**निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि ॥ १५० ॥**

(१) **मेधातिथिः।** **व्रतानि** वेदव्रतानि। तदयुक्तम्। ग्रहणार्थत्वात्तेषां कुतः प्राप्तिः। तस्माद्यान्युपनयनकाले 'मा दिवा स्वाप्सीः सायंप्रातः समिधमादध्या आचार्याधीनो भव' इत्येवमादीनि च व्रतानि। तानि **निवर्तन्ते** ॥ १५० ॥

(२) **सर्वज्ञनारायणः।** प्रसंगात्पुनः संस्कारविधिमाह **वपनमिति।** **व्रतानि** वेदव्रतानि मधुमांसवर्जनादीनि च। तेन होममात्रं कार्यमित्यर्थः ॥ १५० ॥

(३) **कुल्लूकः।** शिरोमुण्डनं मेखलाधारणं दण्डधारणं भैक्षाणि **व्रतानि** मधुमांसस्त्रीवर्जनयुतानि प्रायश्चित्तानि पुनरुपनयने द्विजातीनां न भवन्ति ॥ १५० ॥

(४) **राघवानन्दः।** संस्कारान्तर्गततया वपनादेस्तस्थापि प्राप्तौ प्रतिषेधति **वपनमिति।** **व्रतानि** मधुमांसादीनि ॥ १५० ॥

(६) **रामचन्द्रः।** **व्रतानि** वेदाभ्यासादीनि निवर्तंते ॥ १५० ॥

(७) **मणिरामः।** तत्र पुनः संस्कारे ये धर्मा न भवंति तानाह। **वपनमिति** ॥ १५० ॥

(८) **गोविन्दराजः।** **वपनमिति।** शिरोमुण्डनमेखलादण्डभैक्ष्यचरणानि व्रतानि चाग्निकार्यं मधुमांसवर्जनादीनि प्रायश्चित्तार्थमुपनयने द्विजातीनां न भवन्ति ॥ १५० ॥

(९) **भारुचिः।** निगदव्याख्यातः श्लोकः ॥ १५० ॥

**अभोज्यानां तु भुक्त्वाऽन्नं स्त्रीशूद्रोच्छिष्टमेव च ॥**
**जग्ध्वा मांसमभक्ष्यं च सप्तरात्रं यवान्पिबेत् ॥ १५१ ॥**

(१) **मेधातिथिः।** येषामन्नं न भुज्यते तेऽभोज्याः पुरुषाः अश्रोत्रियस्त्रीसंग्रामजीव्ययाज्ययाजकादयः। शूद्रजातिग्रहणादेव जातिनिर्देशात्स्त्रीग्रहणे लब्धे सवर्णार्थं स्त्रीग्रहणं विज्ञेयम्। **उच्छिष्टं** तदास्य पृष्टम्। यच्च 'नित्यमास्यं शुचिः स्त्रीणामिति' तस्य विषयो दर्शितः। **शूद्रोच्छिष्टा**नामपां पाने पूर्वत्र कुशवार्युक्तम्, इह तु **सप्तरात्रं यवानिति।** आगमिकत्वादस्यार्थस्योभयत्र भक्ताद्युच्छिष्टभोजने इदं द्रष्टव्यम्। **अभक्ष्यं मांसं** प्लवहंसचक्राकादीनाम्। इदं तु बुद्धिपूर्वकमभ्यासभक्षणे द्रष्टव्यम्। अन्यत्र 'शेषेषूपवसेदहरिति'। एतदेव पयः पीत्वा, सूकरोष्ट्रादिभ्यो अन्यत्र, तत्र प्रतिपदं प्रायश्चित्तान्तराम्नानात्। सक्तुपानं यवपानं भवत्येव ॥ १५१ ॥

(२) **सर्वज्ञनारायणः।** **अभोज्यानां** राजादीनाम्। स्त्रियः सवर्णाया अप्युच्छिष्टम्। शूद्रोच्छिष्टं चान्नम्। अभक्ष्यं **मांसं** जालपादादीनाम्। **यवान्** यवागूं पिबेत् स्मृत्यन्तरोक्तप्रसृतयावकविधिना। एतच्च कामतः कृतेऽनिन्दिताभोज्यान्नाशने तु द्विगुणादि तत्र तत्रोह्यम् ॥ १५१ ॥

**(३) कुल्लूकः।** अभोज्यानांन्नाश्रोत्रियकृते यज्ञे इत्याद्युक्तानामन्नं भुक्त्वा जलमिश्रितसक्तुरूपेण यवागूरूपेण वा यवान्पानयोग्यान्कृत्वा सप्तरात्रं पिबेत्। अमुष्मिन्नेव विषये मत्या भुक्त्वा चरेत्कृच्छ्रमिति चतुर्थाध्याये प्रायश्चित्तमुक्तं तेन सह वैकल्पितं विकल्पश्च कर्तृशक्त्यपेक्षः तथा द्विजातिस्त्रीणामुच्छिष्टं शूद्रोच्छिष्टं वा भुक्त्वैतदेव कुर्यात्तथा क्रव्यादसूकरोष्ट्राणामित्यादिना यद्विशेषप्रायश्चित्तं तन्निषिद्धमांसं भुक्त्वैदमेव कुर्यात् ।। १५१ ।।

**(४) राघवानन्दः।** कदन्नभक्षणविषयकमाह। अभोज्यानां नाश्रोत्रियहुत यज्ञ इत्यादि चतुर्थाध्यायोक्तानां विशेषतोऽनुक्तनिष्कृतीनां प्रायश्चित्तार्थमनुवादमात्रम्। अभक्ष्यं पूर्वं भक्षणीयत्वेन निषिद्धं विशेषतोऽनुक्तप्रायश्चित्तं च कृच्छ्राशक्तपरं वा। **यवान्** सक्तून् ।। १५१ ।।

**(६) रामचन्द्रः।** जग्ध्वा मांसं च पुनः अभक्ष्यं वस्तु जग्ध्वा सप्तरात्रं **यवान्** यवागूं पिबेत् ।। १५१ ।।

**(७) मणिरामः।** अभोज्यानां अश्रोत्रियकृते यज्ञे ये इत्याद्युक्तानां यवान् जलमिश्रितसक्तुरूपेण यवागूरूपेण वा यवान् पिबेत् ।। १५१ ।।

**(८) गोविन्दराजः। अभोज्यानामिति।** अभोज्यानामश्रोत्रियहुते यज्ञ इत्याद्युक्तानां अन्नं भुक्त्वा शूद्रायाः शूद्रग्रहणेनैवोपसंग्रहणाद्विजातिस्त्रीणामप्युच्छिष्टं च भुक्त्वा मांसं चाभक्ष्यं यत्र क्रव्यादशूकरोष्ट्राणामित्यादि यद्वैकल्पिकं प्रायश्चित्तं नोक्तं तद्भुक्त्वा सप्तरात्रं सक्तुयवागूरूपेण यवान् पिबेत् ।। १५१ ।।

**(९) भारुचिः।** प्रतिग्रहेण च तत्स्त्रीग्रहणे द्विजातिनिर्देशसामर्थ्यादेव सिद्धे पुनस्तद्ग्रहणं सर्ववर्णार्थमिदं विज्ञेयम्। एषु **सप्तरात्रं यवान् पिबेत्।** अत्र च पानोपदेशाद्यवैः पिष्टैः यवागुरुपदिश्यते, येन द्रवद्रव्यसाधना हि पानक्रिया। अभोज्यानां च स्नातकव्रतकाध्याये व्याख्याताः ।। १५१ ।।

**शुक्तानि च कषायांश्च पीत्वा मेध्यान्यपि द्विजः ।।**
**तावद्भवत्यप्रयतो यावत्तन्न व्रजत्यधः ।। १५२ ।।**

**(१) मेधातिथिः। मेध्यानि शुक्तानि** 'दधि भक्ष्यं च शुक्तेष्वि'त्याद्यनुज्ञातानि। दध्नस्तु सत्यपि शुक्तत्वे भक्ष्यताया विहितत्वान्नैष विधिः। पवित्रं हि तदिति स्मरन्ति। **कषाया** वैद्यकप्रसिद्धा अनेकौषधिसंयोगेन ये क्वाथ्यन्ते। **अप्रयतो**ऽशुचिः। **यावद्व्रजत्यधः।** अधोगमनं जीर्णानां मूत्रपुरीषभागेन निष्क्रमणम्। यदि वा पाकाशयप्राप्तिः ।। १५२ ।।

**(२) सर्वज्ञनारायणः। शुक्तान्य**तिकालादिनाम्लतां गतानि। **कषायान्** गुडूच्यादि क्वाथान्। **मेध्यान्यपि** सामान्यतोऽनिषिद्धान्यपि। **अप्रयतः** कर्मानधिकारी **नाधो व्रजति** पुरीषतां न याति ।। १५२ ।।

(३) **कुल्लूकः।** यानि स्वभावतो मधुरादिरसानि कालयोगेनोदकपरिणामादिनाम्लभावं व्रजन्ति तानि शुक्तानि कषायान्विभीतकादीन् क्वथितान्यप्रतिषिद्धान्यपि पीत्वा यावन्नजीर्णानि भवन्ति तावदशुचिः पुरुषो भवति ।। १५२ ।।

(४) **राघवानन्दः। शुक्तानि** हि स्वभावतो मधुराणि कालादाम्लतां गतानि। **कषायाणि** बिभीतकादिक्वाथांसि। **अमेध्यानि** लशुनादीनि तावदप्रयतोऽशुचिः व्रजत्यधः अपानेन भूमौ निःसरति यावत् ।। १५२ ।।

(५) **नन्दनः। शुक्तानि** कालातिपत्यास्वरसंपरित्यज्य रसान्तरापन्नानि द्रव्याणि **अमेध्यानि** लशुनादीनि ।। १५२ ।।

(६) **रामचन्द्रः। शुक्तानि** कालेनाम्लीभूतानि **कषायांश्च** गुडूचीहरीतक्यादिकषायान् पीत्वा द्विजः तावदप्रयतो भवति यावदधो न व्रजति। परिपाकेन ।। १५२ ।।

(७) **मणिरामः। शुक्तानि** स्वभावतो मधुराणि कालांतरेण जलादिसंयोगेन वा अम्लतां गतानि **कषायांश्च** विभीतकादीन् क्वथितानि अप्रसिद्धान्यपि पीत्वा न **व्रजत्य**धः न जीर्णानि भवंति ।। १५२ ।।

(८) **गोविन्दराजः। शुक्तानीति।** यानि प्राप्तस्वरसानि कामपरिवासनद्रव्यान्तरेण संसर्गकालपरिवासाभ्यां चाम्लीभवन्ति तानि शुक्तानि कषायाहरीतक्यादयस्तान्यप्रतिषिद्धान्यपि द्विजातिः पीत्वा तावदशुचिर्भवति यावत्तद्भुक्त्वादि जीर्णं न भवति ।। १५२ ।।

(९) **भारुचिः। मेध्यानि** यानि प्रतिषिद्धानि। अत्र चापकंरणमेवं प्रायश्चित्तं नान्यत ।। १५२ ।।

**विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः ।।**
**प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत् ।। १५३ ।।**

(१) **मेधातिथिः।** विशेषानुपदेशादमत्या वा तुल्यमेव च युक्तं अमत्या लाघवकल्पनात् ।। १५३ ।।

(२) **सर्वज्ञनारायणः। गोमायोः** श्रृगालस्य। अज्ञानात्प्राश्य विण्मूत्रमिति तु नरविण्मूत्राशनेऽपि तदुक्तप्रायश्चित्तान्ते कार्यम्। चान्द्रायणं कामतः ।। १५३ ।।

(३) **कुल्लूकः।** ग्राम्यसूकरखरोष्ट्रश्रृगालवानरकाकानां मूत्रं पुरीषं वा द्विजातिर्भुक्त्वा चान्द्रायणं कुर्यात्। शोधनं यत्तुच्छत्राकं विड्वराहं चेत्यनेन विड्वराहग्रामकुक्कुटयोर्बुद्धिपूर्वकभक्षणे पञ्चमाध्याये प्रायश्चित्तमुक्तं तदभ्यासविषये व्याख्यातम्। इदन्त्वनभ्यासविषये तप्तकृच्छ्रमित्यविरोधः ।। १५३ ।।

(४) **राघवानन्दः। विड्वराहो** ग्रामसूकरः। **गोमायुः** श्रृगालः। एषु प्रत्येकं चान्द्रायणम् ।। १५३ ।।

(५) **नन्दनः।** पूर्वं सामान्येन मूत्रपुरीषप्राशनेषु पुनस्संस्कार उक्तस्तस्येदानीं क्वचिदपवादमाह **विड्वराहखरोष्ट्राणामिति** ।। १५३ ।।

(७) **मणिरामः । गोमायु**: शृगालः ।। १५३ ।।

(८) **गोविन्दराजः ।** विड्वराहखरोष्ट्राणामिति । ग्रामशूकरखरोष्ट्रशृगालवानर-काकानां मूत्रपुरीषाणि द्विजातिर्भुक्त्वा चान्द्रायणं कुर्यात् ।। १५३ ।।

(९) **भारुचिः ।** अमत्या प्राशनमेषां एतदधिकारात् । तथा चोत्तरश्लोके वक्ष्यति, 'अज्ञातं चैव सूनास्थं इति । मति पूर्वे तु शासनम्' एषां गुरुतरं प्रायश्चित्तं प्रकल्प्यं परिषदाम् ।। १५३ ।।

**शुष्काणि भुक्त्वा मांसानि भौमानि कवकानि च ।।**
**अज्ञातं चैव सूनास्थमेतदेव व्रतं चरेत् ।। १५४ ।।**

(१) **मेधातिथिः । शुष्काणि** वल्लूरादीनि । **भौमानीति** कोटरजातानामनिषेधार्थम् । **अज्ञातं** मेषस्य महिषस्येति प्रकृतेरज्ञानात् । **सूना** घातस्थानम् । यत्र विक्रयार्थं पशवो हन्यन्ते । अतोऽन्यत्र स्थितस्य लघुप्रायश्चित्तम् । "ननु 'सूनास्थ' इति वचनादन्यत्र स्थितस्य प्रायश्चित्ताभाव एव युक्तः" । नैतदेवम् । सौनमित्यविशेषेण प्रतिषेधात् । प्रायश्चित्ते तुच्छग्रहणात्तद्रहितस्य गुरुलघुभावो युक्ततरः । तदेव चान्द्रायणम् । ज्ञाते तु जातिविशेषेऽभ्यासे सप्तरात्रं यावकपानम् । 'शेषेषूपवसेदहः' इति ।। १५४ ।।

(२) **सर्वज्ञनारायणः । शुष्काणि** नीरसानि । **भौमानि** भूम्युद्भवानि **कवकानि** छत्राकानि । काष्ठछत्राके तु स्मृत्यन्तरोक्तमल्पप्रसृतप्रायश्चित्तम् । तथा **अज्ञातम**ज्ञातप्रकृतिमांसम् । तथा **सूनास्थं** प्राणिघातस्थानस्थमेव यत्क्रीतं लब्धभागं अंशम् । एतदेव चान्द्रायणं कामतो भक्षणे ।। १५४ ।।

(३) **कुल्लूकः ।** वाय्वादिना शोषितानि मांसानि भुक्त्वा भूम्यादि प्रभवाणि छत्राकानि भुक्त्वा भूमिजं वा वृक्षजं वा छत्राकं भक्षयन्ति ये ब्रह्मघ्नांस्तान्विजानीयादिति यमेन वृक्षस्यापि निषेधात् हरिणमांसं वा रासभमांसमिति भक्ष्याभक्ष्यतया यन्नज्ञातं तथा हिंसास्थानं सूना ततो यदानीतं तद्भुक्त्वा चान्द्रायणमेव कुर्यात् ।। १५४ ।।

(४) **राघवानन्दः । किं च शुष्काणीति ।** मांसपदं मत्स्योपलक्षकं **भौमानि** छत्राकादिनि । **कवकानि** वार्क्षाणि । भूमिजं वृक्षजं वापि छत्राकं भक्षयन्ति ये । ब्रह्मघ्नांस्तान्विजानीयादिति यमोक्तेः । सूनास्थं व्याधविक्रीतम् एतदेव चान्द्रायणमेव ।। १५४ ।।

(५) **नन्दनः ।** विपरिणामः तद्वियोगादिकस्य प्राणिविशेषस्येदमित्यविज्ञातं **सूनास्थं** सूनास्थानस्थितं मांसं च एतद्व्रतं चान्द्रायणम् ।। १५४ ।।

(६) **रामचन्द्रः । सूनास्थं** प्राणिहिंसास्थानस्थितं **कवकानि** छत्राकानि वर्जयेत् एतदेव व्रतं चान्द्रायणं चरेत् ।। १५४ ।।

(७) **मणिरामः । भौमानि** भूम्युत्पन्नानि **कवकानि** छत्राकादीनि । **सूनास्थं** पशुघातस्थानस्थं एतदेव चांद्रायणमेव ।। १५४ ।। १५५ ।।

(८) **गोविन्दराजः । शुष्काणीति ।** वाप्यादित्यादिसंशोषितानि **मांसानि** वल्लू-

रादीनि भुक्त्वा भूम्युद्भवानि च कवचानि जग्ध्वा आघातस्थानं च मांसमबुद्धिपूर्वं भुक्त्वा चान्द्रायणमेव कुर्यात् ।। १५४ ।।

(९) **भारुचिः ।** द्विजश्चान्द्रायणं चरेदिति द्विजग्रहणात् प्रकरणाच्चात्र शूद्रस्य व्यतिक्रमे प्रायश्चित्ताभावः । ब्राह्मणाश्रितशूद्रस्य हि 'यथा यथा हि सद्वृत्तनातिष्ठत्यनसूयकं' इति वचनात् पाक्षिकं स्यात् प्रायश्चित्तं प्रतिषेधात् ।। १५४ ।।

**क्रव्यादसूकरोष्ट्राणां कुक्कुटानां च भक्षणे ।।**
**नरकाकखराणां च तप्तकृच्छ्रं विशोधनम् ।। १५५ ।।**

(१) **मेधातिथिः ।** चेति पूर्वश्लोकोऽत्राकृष्यते । तेन विड्वराहादीनां भक्षण एतदेव । द्वितीयेन चशब्देन क्रव्यादादीनां विण्मूत्रप्राशने यदेव विड्वराहादीनाम् । स्मृत्यन्तरे च नरमात्राधिकारेणेह द्विजग्रहणमविवक्षितं 'द्विजश्चान्द्रायणमिति' । एवमियं द्विश्लोकी बिडालकाकेत्यत्रापेक्ष्यते । अतश्चैतेषामप्युच्छिष्टप्राशने बिडालादिवत् । ततोऽस्यां त्रिश्लोक्यां समुद्दिष्टं मूत्रपुरीषं च सर्वेषां प्रतिषिद्धम् । अतश्च यत्क्रव्यादीनां मूत्रपुरीषप्राशने तद्बिडालादीनामपि ।। १५५ ।।

(२) **सर्वज्ञनारायणः । क्रव्यादाः** आममांसादाः व्याघ्रादयः **कुक्कुटानां** ग्राम्याणाम् । **भक्षणे** मांसस्य । तप्तकृच्छ्रं ज्ञानतः ।। १५५ ।।

(३) **कुल्लूकः ।** आममांसभक्षिणां ग्राम्यसूकरोष्ट्रग्राम्यकुक्कुटानां तथा मानुषकाकगर्दभानां प्रत्येकं बुद्धिपूर्वकं मांसभक्षणे वक्ष्यमाणं तप्तकृच्छ्रं प्रायश्चित्तं ग्राम्यशूकरकुक्कुटयोर्बुद्धिपूर्वकभक्षणे पञ्चमाध्याये पातित्यमुक्तं तदभ्यासविषये व्याख्यातं इदं तु नाभ्यासविषये तप्तकृच्छ्रमित्यविरोधः ।। १५५ ।।

(४) **राघवानन्दः । क्रव्यादः** गृध्रादिः । अज्ञातमित्यन्वेति । खरान्तसप्तभक्षण तप्तकृच्छ्रं पावनं धीपूर्वभक्षणे तु विड्वराहकुक्कुटयोः पातित्यमिति भेदः ।। १५५ ।।

(५) **नन्दनः । भक्षणे** मांसभक्षणे ।। १५५ ।।

(८) **गोविन्दराजः । क्रव्यादशूकरोष्ट्राणामिति ।** आममांसभक्षिणां गृध्रादीनां ग्रामसूकरोष्ट्रग्राम्यकुक्कुटमनुष्यकाकखराणां भक्षणे तप्तकृच्छ्रं वक्ष्यमाणं विशोधनम् ।। १५५ ।।

(९) **भारुचिः । क्रव्यादा** गृध्रादयः, **सूकरो** विड्वराह, खरादिसाहचर्याद् गम्यते । एवं कुक्कुटो ग्रामकुक्कुटो विज्ञेयः । तस्य प्रतिषेधात् पूर्वत्र, खरादिसाहचर्याद्वा । एवं च मांसभक्षणप्रतिषेधो विज्ञेयः । तत्र मूत्रपुरीषं प्रतिषिद्धं विड्वराहश्लोके । येषामपि क्रव्यादप्रभृतीनां तत्र मूत्रपुरीषमप्रतिषिद्धम्, तेषामपीह खरादिसाहचर्यात् प्रतिषिद्धं तद्विज्ञेयम् ।। १५५ ।।

**मासिकान्नं तु योऽश्नीयादसमावर्तको द्विजः ।।**
**स त्रीण्यहान्युपवसेदेकाहं चोदके वसेत् ।। १५६ ।।**

(१) **मेधातिथिः । मासिकमेकोद्दिष्टश्राद्धम्** । 'अकृते सपिण्डीकरणे प्रतिमासं तु वत्सरम्' इति । आमावास्यस्य तु मासिकव्यपदेशेऽप्यनुज्ञातत्वात् 'काममभ्यर्थितोऽश्नीयात्' इति । कुतः प्रायश्चित्तम् । अन्ये त्वभ्यर्थितस्यानुज्ञानादनभ्यर्थ्यमानस्योक्तमेवेत्याहुः । **असमावर्तको** गुरुकुले तिष्ठन्नर्थाद् ब्रह्मचार्युच्यते । त्र्यहादन्यतरस्मिन्नहन्युदके **वसेत्** त्र्यहस्यैव बुद्धौ स्थितत्वात्तर्हि चतुर्थमहस्तद्दिवसः ।। १५६ ।।

(२) **सर्वज्ञनारायणः । मासिकार्थं** प्रेतश्राद्धार्थम् । क्वचिन्मासिकान्नमिति पाठः । तत्र मासिकश्राद्धार्थोद्दिष्टमित्यर्थः । असमावर्तको द्विजो ब्रह्मचारी । उदके वसेदुपवाससबन्धि त्रिरात्रप्रथमदिने ।। १५६ ।।

(३) **कुल्लूकः** । यो ब्रह्मचारी ब्राह्मणो मासिकश्राद्धसबन्ध्यन्नमश्नाति एतच्च सपिण्डीकरणात्पूर्वमेकोद्दिष्टश्राद्धार्थोपलक्षणं स त्रिरात्रमुपवसेत्त्रिरात्रमध्य एकस्मिन्नहनि जलमावसेत् ।। १५६ ।।

(४) **राघवानन्दः** । मासिकान्नं प्रेतोद्देशेन मासि मासि क्रियमाणं श्राद्धम् । असमावृत्तिकः ब्रह्मचारी । एकाहे एव दिनत्रयान्तर्गतम् ।। १५६ ।।

(५) **नन्दनः** । आवर्तकोऽब्राह्मणचारी ।। १५६ ।।

(६) **रामचन्द्रः** । मासिकस्यार्थं मासिकश्राद्धार्थम् योऽश्नीयात् असमावर्तको द्विजः ।। १५६ ।।

(७) **मणिरामः । मासिकान्नं** मासिकश्राद्धसंबंध्यन्नं **असमावर्तकः** ब्रह्मचारी ।। १५६ ।।

(८) **गोविन्दराजः** । **मासिकार्थमिति** । काममभ्यर्थितोऽश्नीयादित्यमावास्याश्राद्धभोजनाभ्यनुज्ञानान्मासिकोद्दिष्टं सपिण्डीकरणादर्वाग्यो ब्राह्मणो ब्रह्मचारी भुञ्जीत । स त्रिरात्रमुपवसेत्त्र्यहादनन्तरस्मिंश्चाग्न्युदकमध्ये वसेत् ।। १५६ ।।

(९) **भारुचिः** । स्वयम्प्रार्थनया प्रार्थितस्यैतत् प्रायश्चित्तं **मासिकान्नभोजने** । यस्मादुक्तम् 'काममभ्यर्थितोऽश्नीयात्' इत्येवमादि इतरथा हि विहितप्रतिषेधः प्रसज्येत । तथा चोक्तम्–'व्रतस्थमपि दौहित्रं कामं श्राद्धं नियोजयेदि'ति । एवं सत्यस्मात् प्रायश्चित्तोपदेशात विशेषप्रतिषेधोऽयं विज्ञेयः । नात्यन्तप्रतिषेधः ।। १५६ ।।

**व्रतचारी तु योऽश्नीयान्मधु मांसं कथंचन ।।**
**स कृत्वा प्राकृतं कृच्छ्रं व्रतशेषं समापयेत् ।। १५७ ।।**

(१) **मेधातिथिः । व्रतचारी** प्रयुक्तो ब्रह्मचर्याश्रमस्थ एव । **कथंचन** आपद्यपीत्यर्थः । 'प्राणानामेव चात्यय' इत्यापदिविधानात् असति दोषे न तन्निर्घातार्थमेतत्प्रायश्चित्तम् । किं तर्हि ? निमित्तमात्रपर्यवसायि वचनात्क्रियते । **प्राकृतं** प्राजापत्यं प्रकृतौ भवं प्राकृतम् । सर्वकृच्छ्राणां प्रकृतित्वादेवमुच्यते । **व्रतशेषं समापयेत्** अकृतप्रायश्चित्तस्यावशिष्टव्रतसमाप्तावनधिकारमाह ।। १५७ ।।

(२) **सर्वज्ञनारायणः । व्रतचारी** ब्रह्मचारी वनस्थविधवाभिक्षुप्रभृतिः । **कथंच-नाज्ञानात् । प्राकृतं** प्रकृतिः प्राजापत्यं तद्रूपं कृच्छ्रम् । स्वार्थेऽण् । **व्रतशेषं** व्रतं निःशेषं कार्यम् ॥ १५७ ॥

(३) **कुल्लूकः ।** यो ब्रह्मचारी माक्षिकं मांसं वाऽनिच्छात आपदि वाऽश्नीयात्स प्राजापत्यं कृत्वा प्रारब्धब्रह्मचर्यव्रतशेषं समापयेत् ॥ १५७ ॥

(४) **राघवानन्दः ।** किं च **ब्रह्मचारी**ति । **प्राकृतं** प्राजापत्यम् । व्रतशेषं प्रारब्ध-वेदाध्ययनादि अकृतप्रायश्चित्तस्य वेदसमाप्तावनधिकारात् ॥ १५७ ॥

(५) **नन्दनः । व्रतचारी** ब्रह्मचारी कथंचनाकामतोऽप्यप्राकृतं निरुपपदं प्राजापत्य-मिति यावत् व्रतविशेषं समापयेद्ब्रह्मचर्यशेषं समापनयोग्यो भवेत् समावृत्तस्यापि व्रतस्थस्य मधुमांसभक्षणे प्रायश्चित्तमेतदिति केचित् ॥ १५७ ॥

(६) **रामचन्द्रः ।** व्रतचारी योऽज्ञानान्मधुमांसं सः प्राकृतं प्राजापत्यं कृच्छ्रं कृत्वा ॥ १५७ ॥

(७) **मणिरामः । कथंचन** अनिच्छातः आपदि वा । प्राकृतं कृच्छ्रं प्राजापत्यम् । **व्रतशेषं** ब्रह्मचर्यव्रतशेषम् ॥ १५७ ॥

(८) **गोविन्दराजः ।** व्रतचारीति । यो ब्रह्मचारी माक्षिकमांसं वानिच्छात आपदि वाश्नीयात्स प्राजापत्यं कृच्छ्रं कृत्वा ततो ब्रह्मचर्यैकान्तस्य व्रतस्य यदवशिष्टं तत्समापयेत ॥ १५७ ॥

(९) **भारुचिः ।** श्राद्धेऽन्यत्र वा ॥ १५७ ॥

**बिडालकाकाखूच्छिष्टं जग्ध्वा श्वनकुलस्य च ॥**
**केशकीटावपन्नं च पिबेद्ब्रह्मसुवर्चलाम् ॥ १५८ ॥**

(१) **मेधातिथिः । आखुर्मूषकः । अवपन्नमेतत्संपर्कदूषितम् । ब्रह्मसुवर्चलां** पिष्ट्वो-दकेन सह पिबेदेकाहमविशेषात्तेनैव शास्त्रार्थस्य कृतत्वात् ॥ १५८ ॥

(२) **सर्वज्ञनारायणः । केशकीटावपन्नं** केशकीटसहसिद्धम् । **ब्रह्मसुवर्चलां** श्वेत-सुवर्चलां तत्क्वाथं जलं पिबेदेकाहम् । एतत् श्वकाकोच्छिष्टाशनेऽकामकृते अन्येषु तु कामकृतेषु ॥ १५८ ॥

(३) **कुल्लूकः ।** बिडालकाकमूषिककुक्कुरनकुलानामुच्छिष्टं केशकीटरूपसंसर्ग-दुष्टं वाऽकृतमृत्क्षेपविशुद्धिकं ज्ञात्वा भुक्त्वा ब्रह्मसुवर्चलां क्वथितमुदकं पिबेत् ॥ १५८ ॥

(४) **राघवानन्दः ।** ब्राह्मीं सुवर्चलां तत्क्वथितमुदकं श्वेतपुष्पा सूर्यप्रिया सुवर्चलेति भारते धृतत्वात् ॥ १५८ ॥

(५) **नन्दनः ।** ब्रह्मसुवर्चलां ब्रह्मसुवर्चला रक्तपुष्पाश्च दंष्ट्रा ॥ १५८ ॥

(६) **रामचन्द्रः ।** कीटकेशावपन्नं तत्सह पक्वं अन्नं ब्राह्मीं सुवर्चलां पिबेत् ॥ १५८ ॥

(७) **मणिरामः**। ब्रह्मसुवर्चलां ब्रह्मसुवर्चला क्वथितमुदकम्।। १५८।।

(८) **गोविन्दराजः**। **बिडालकाकाखूच्छिष्टमिति**। बिडालकाकमूषकश्वनकुलानामुच्छिष्टं केशकीटसंसर्गदुष्टं चाकृतमुत्प्रक्षेपशुद्धिमन्नं भुक्त्वा ब्रह्मसुवर्चलां प्रक्वाथ्य तद्रसमवशेषादेकाहं पिबेत्।। १५८।।

(९) **भारुचिः**। एकाहमविशेषोपदेशात्। एतेषामुच्छिष्टभक्षण एतत् प्रायश्चित्तम्। एवं च काकादीनां प्रतिषिद्धं धर्मशास्त्रे उच्छिष्टमूत्रपुरीषमांसभक्षणानि श्लोकत्रयेण। विड्वराहश्लोके मूत्रपुरीषप्रतिषेधः, क्रव्यादसूकरश्लोके मांसभक्षणस्य, **बिडालकाकाखूच्छिष्टमि**त्यत्रोच्छिष्टस्य। एवं च सति य एकत्रोपदिष्टा अन्यत्र श्लोके नोपदिश्यन्ते कुक्कुटादयस्तेषां साहचर्याच्छ्लोकत्रयेऽपि ग्रहणं विज्ञेयम्। तच्चैतदेवमतः।। १५८।।

## अभोज्यमन्नं नात्तव्यमात्मनः शुद्धिमिच्छता।।
## अज्ञानभुक्तं तूत्तार्यं शोध्यं वाप्याशु शोधनैः।। १५९।।

(१) **मेधातिथिः**। आद्योऽर्धः श्लोकोऽनुवादः। **अज्ञातभुक्त**शुद्धयर्थमित्येतद्विधीयते। समनन्तरं **तूत्तार्यं** वमितव्यमित्यर्थः। क्षिप्रं वा **शोधनैः** प्रायश्चित्तैः **शोध्यम्**। अन्ये तु शोधनानि हरीतक्यादीनि रेचनान्याहुः, गौतमीयं चेदमुदाहरन्ति 'अभोज्यभोजने पुरीषाभाव' (२३-२३) इति। तदेतदसाधकम्। उपवासेनापि निष्पुरीषत्वोपपत्तेः। तस्मादवान्तौ यथाश्रुतप्रायश्चित्तमेव वेदितव्यम्।। १५९।।

(२) **सर्वज्ञनारायणः**। संदिह्यमानभोज्यत्वमपि। अज्ञाने भुक्तं पश्चादभोज्यत्वेन ज्ञातं उत्तार्यं वमनेन। शोध्यं चाप्याशु न त्वतिचिरेण शोधनैः ब्रह्मसुवर्चलापानादिभिः। शोध्यं वाप्याशुशोधनैरिति पाठे वमनाशक्तौ बहुभिः शोधनैः शीघ्रं शोध्यमित्यर्थः।। १५९।।

(३) **कुल्लूकः**। आत्मनः शुद्धिकामेन प्रतिषिद्धमन्नं नादनीयम्। प्रमादात्तु भुक्तं वमितव्यं तदसंभवे प्रायश्चित्तैः क्षिप्रं शोधनीयम्। वमनपक्षे तु लघुप्रायश्चित्तं भवत्येव ज्ञानतः पुनः पूर्वोक्तं प्रायश्चित्तम्।। १५९।।

(४) **राघवानन्दः**। किं च **अभोज्येति**। शुद्धिं प्रायत्यम्। दैवाद्भुक्तं चेत्पुनरुत्तार्यम्। उद्वमितव्यं **आशुशोधनैः** प्राणायामादिभिः।। १५९।।

(५) **नन्दनः**। प्रायश्चित्तं करिष्यामीति निश्चित्याभोज्यमन्नमदनीयन्नात्तव्यं तथाकृते प्रायश्चित्तगौरवमस्तीत्यभिप्रायेणोक्तमात्मनः शुद्धिमिच्छतेत्युद्धार्यमुद्गार्यं शोध्यं विरेच्यं **शोधनै**र्विरोचनद्रव्यैः।। १५९।।

(६) **रामचन्द्रः**। **नात्तव्यं** न भक्षणीयम् अज्ञातभुक्तं **तूत्तार्यं** वमितव्यम्।। १५९।।

(७) **मणिरामः**। **उत्तार्यं** वमितव्यं अथवा **शोधनैः** प्रायश्चित्तैः आशुशोध्यम्।।१५९।।

(८) **गोविन्दराजः**। **अभोज्यमिति**। आत्मनः शुद्धिकामेन प्रतिषिद्धमन्नं हठान्न भक्षणीयं प्रमादभुक्ते पुनर्वमितव्यं तदसंभवे प्रायश्चित्तैः क्षिप्रं शोधनीयम्। यत्तु वमनप्रक्षेपेऽपि लघुप्रायश्चित्तं भवति।। १५९।।

**एषोऽनाद्यादनस्योक्तो व्रतानां विविधो विधिः ।।**
**स्तेयदोषापहर्तॄणां व्रतानां श्रूयतां विधिः ।। १६० ।।**

(१) **मेधातिथिः ।** **व्रतानामनाद्यादनस्या**भक्ष्यभक्षणस्य । **स्तेयं** तद्दोषशमस्तमपहरन्ति यानि व्रतानि तेषामिदानीं **विधिरुच्यते** ।। १६० ।।

(२) **सर्वज्ञनारायणः ।** **स्तेयदोषापहर्तॄणां** महापातकेतरस्तेयदोषहराणाम् ।। १६१ ।।

(३) **कुल्लूकः ।** अभक्ष्यभक्षणे यानि प्रायश्चित्तानि तेषामेतन्नानाप्रकारविधानमुक्तं स्तेयपापहारिणां विधानमधुना श्रूयताम् ।। १६० ।।

(४) **राघवानन्दः ।** अभोज्यान्नभक्षणप्रकरणमुपसंहरंस्तेयप्रायश्चित्तं प्रतिजानीते एषेत्यष्टभिः । (स्तेयदोषापहर्तॄणां स्तेयकृतदोषनाशकानां व्रतानाम् । स्तेयमत्र सुवर्णनिक्षेपाभ्यामतिरिक्तद्रव्यहरणम् । तेषां **विधिः** प्रकारः ।। १६० ।।

(५) **नन्दनः ।** अनाद्यभक्ष्यम् ।। १६० ।।

(६) **रामचन्द्रः ।** **अनाद्यदनस्य** अभक्ष्यभक्षणस्य एषः विधिः उक्तः । **अपहर्तॄणां** अन्नाद्यपहराणां **व्रतानां** नियमानां स्तेयदोषविधिः श्रूयताम् ।। १६० ।।

(७) **मणिरामः ।** **अन्नाद्यादनस्य** अभक्ष्यभक्षणस्य ।। १६० ।।

(८) **गोविन्दराजः ।** **एष** इति । अभक्ष्यभक्षणे यानि प्रायश्चित्तानि तेषामेतन्नानाप्रकारं विधानमुक्तम् । अधुना चौर्यपापापहारिणां प्रायश्चित्तानां विधानं श्रूयताम् ।। १६० ।।

(९) **भारुचिः ।** निगदव्याख्यातः श्लोकः ।। १६० ।।

**धान्यान्नधनचौर्याणि कृत्वा कामाद्द्विजोत्तमः ।।**
**स्वजातीयगृहादेव कृच्छ्राब्देन विशुध्यति ।। १६१ ।।**

(१) **मेधातिथिः ।** **द्विजोत्तम**ग्रहणं प्रदर्शनार्थं क्षत्रियादीनामपि । **द्विजोत्तम**शब्दसन्निपाताच्च **स्वजातीयगृहादिति** ब्राह्मणगृहाद्विज्ञायते । तेनैतदुक्तं भवति । सर्व एव वर्णा ब्राह्मणगृहात् धनं हृत्वा **कृच्छ्राब्देन** शुध्येयुः । धनग्रहणात्सर्वस्मिन् धने सिद्धे 'धान्यान्न' ग्रहणं सद्धान्यार्थम् । अल्पसाराणामन्यं विधिं वक्ष्यति । अतः सारभूतप्रधानद्रव्यापहरणे इदं विज्ञायते । "तेषां हि परस्परद्रव्यापहरणे ब्राह्मणस्य तदीयधनापहारे कतरत्प्रायश्चित्तम् । उच्यते । हिंसाप्रायश्चित्तवत्तुर्याष्टमादिभागकल्पना कर्तव्या । क्षत्रियस्य धने त्रीन् वैश्यस्य सार्धं, शूद्रस्य द्वाविंशतिरात्रं वा । "कियत्परिमाणे धान्येऽपहृते" । दशभ्यः कुंभेभ्यः किंचिदूने, महत्त्वात्प्रायश्चित्तस्य । धनमप्येवं कालं न कल्पनेति विज्ञेयम् । **कामादिति** श्लोकपूरणम् । न ह्यकामस्य परधनहरणसंभवः । **धान्यं** व्रीह्यादि तदेवापहृतम् । अन्नं सिद्धम् । धान्यादीनां प्रत्येकं हरणे त्र्यब्दं कृच्छ्रम् । केचिच्च समुदायहरणे प्रायश्चित्तमिच्छन्ति, गरीयो ह्येतत् ।। १६१ ।।

(२) **सर्वज्ञनारायणः**। **अन्नं** सिद्धान्नम्। धनं वृत्तिहेतु यथा ब्राह्मणानां निबन्धः क्षत्रवृत्तीनां शरादि वैश्यवृत्तीनां लाङ्गलादीनि। **स्वजातीयगृहात्** ब्राह्मणगृहात्। ब्राह्मण इत्यादि क्रमेण। कामतोऽत्यन्ताभ्यासेन करणे कृच्छाब्देन वत्सरकृतैः प्राजापत्यैरेव।। १६१।।

(३) **कुल्लूकः**। ब्राह्मणो ब्राह्मणगृहाद्धान्यभक्ताद्यन्नरूपाणि धनचौर्याणीच्छातः कृत्वा न त्वात्मीयभ्रान्त्या नीत्वा संवत्सरं प्राजापत्यव्रताचरणेन शुध्यति एतच्च देशकालद्रव्यपरिमाणस्वामिगुणाद्यपेक्षया महत्त्वादि बोद्धव्यं एवमुत्तरत्रापि।। १६१।।

(४) **राघवानन्दः**। **धान्यं** व्रीह्यादिः। **अन्नं** सिद्धान्नम्। **कृच्छ्राब्देन** कृच्छ्रं च तदब्दं व्यपितेन। **द्विजोत्तम** इति अन्योन्यतज्जातीयपरम्।।१६१।।

(५) **नन्दनः**। **कामादनापदि** अनेनापदि प्रायश्चित्तस्य लाघवं सूचितं **कृच्छ्राब्देन** संवत्सरचरितेन कृच्छ्रेण।। १६१।।

(६) **रामचन्द्रः**। स्वजातीयगृहादेव चौर्याणि कृत्वा।। १६१।।

(७) **मणिरामः**। इदानीं स्तेयदोषप्रायश्चित्तमाह। **धान्येति**। **धान्यान्नानि** भक्ताद्यरूपाणि। **कृच्छ्राब्देन** प्राजापत्यव्रतेन।। १६१।।

(८) **गोविन्दराजः**। **धान्यान्नधनचौर्याणीति**। ब्राह्मणो। ब्राह्मणगृहाद्धान्यरूपाणि भक्ताद्यन्नरूपादि धनचौर्याणि इच्छातः कृत्वा न त्वात्मीयभ्रान्त्या नीत्वा संवत्सरं प्राजापत्यकृच्छ्राचरणेन शुध्यति। इति कालदेशपरिणामद्रव्यस्थानगुणदौर्गत्यापेक्षया इदं प्रायश्चित्तमहत्वात्कल्पनीयमेवमुत्तरत्रापि गृहादौ बोद्धव्यम्।। १६१।।

(९) **भारुचिः**। **धान्यं** व्रीह्यादि। **अन्नं** तदेव संस्कृतं भोजनीयं, **धनं** सुवर्णमन्यद् वस्त्रादि। धनशब्देनैव च सर्वगृहीतत्वाद् धान्यादिनिर्देशो गोबलीवर्दवदेव। एतदुक्तं भवति, 'यत्किञ्चिदपहृत्येति'। **कामादिति** चाविवक्षितमेव। न ह्यन्यत्र विनियोगोऽस्ति, यथा सुरापानप्रायश्चित्ते। **द्विजोत्तम**शब्दश्च ब्राह्मणनिर्देशार्थः, अपि शब्दश्चात्र सामर्थ्याल्लुप्तनिर्देशो द्रष्टव्यः, ब्राह्मणोऽपि ब्राह्मणगृहादपहृत्येत्यर्थः। एवं च सति दण्डेनापूपो व्याख्यत इति। क्षत्रियादीनामप्येतत् प्रायश्चित्तं भवति। इतरथा हि **स्वजातीयगृहादिति** क्षत्रियादीनां क्षत्रियादिगृहेभ्य एवैतत् प्रायश्चित्तं स्यात्, ब्राह्मणगृहात्तु सामान्यविहितं प्रायश्चित्तं चान्द्रायणादि स्यात्। न चैतदिष्टं, महत्त्वात् कृच्छ्राब्दप्रायश्चित्तस्य। तस्मादिदं प्रायश्चित्तं सर्वेषामेव ब्राह्मणादीनां ब्राह्मणस्वहरणे स्यात्, ब्रह्महत्याप्रायश्चित्तवत्। एवमितरत्रापि विज्ञेयम्।। १६१।।

**मनुष्याणां तु हरणे स्त्रीणां क्षेत्रगृहस्य च ।।**
**कूपवापीजलानां च शुद्धिश्चांद्रायणं स्मृतम् ।। १६२ ।।**

(१) **मेधातिथिः**। **मनुष्याणां** दासानाम्। **स्त्रीणां** दासीनाम्। **क्षेत्रं** भूभागो व्रीह्यादिधान्योत्पत्तिस्थानम्। **कूपवाप्योर्जल**शब्दः प्रत्येकमभिसंबध्यते। उद्धृतोदकस्ये-

रणादिस्थस्यापहरणे एतद्भवति। जलग्रहणाच्छुष्कयोः कूपवाप्योर्विध्यन्तरम्। **वापी** खाततडागे च।। १६२।।

(२) **सर्वज्ञनारायणः। मनुष्याणां** पुंसाम्। कूपवापीजलानां परकीयानां स्वक्षेत्रे सेकादिसिद्ध्यर्थं हरणे चान्द्रायणमज्ञानात् ।। १६२।।

(३) **कुल्लूकः।** पुरुषस्त्रीक्षेत्रगृहाणामन्यतमहरणे कूपजलस्य वापीजलस्य वा समस्तस्य वा हरणे चान्द्रायणं प्रायश्चित्तं मन्वादिभिः स्मृतम्।। १६२।।

(४) **राघवानन्दः।** कूपवापीजलानामिति स्वक्षेत्राद्यर्थं तडागानामिति पाठे तेषाम्। हरणं ममेदमिति मिथ्यात्वेन। शुध्यत्यनयेति शुद्धिः।। १६२।।

(५) **नन्दनः। मनुष्याणां** दास्यादीनाम्।। १६२।।

(६) **रामचन्द्रः।** कूपवापीजलानां हरणं स्वक्षेत्रार्थम्।। १६२।।

(८) **गोविन्दराजः।** मनुष्याणामिति।। १६२।।

(९) **भारुचिः।** जलाहरणमात्मोपभोगार्थं प्रसिद्धम्। कूपवाप्यादेस्त्वाहरणं परोपभोगार्थमपि। अतस्तयोः स्वकाभिसम्बन्धमात्रत्वादेवापहरणदोष इत्येतस्माद्वैलक्षण्यात् पृथग्ग्रहणम्। अन्यो वा समाधिर्वक्तव्यः।। १६२।।

**द्रव्याणामल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मनि।।**
**चरेत्सान्तपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये।। १६३।।**

(१) **मेधातिथिः। अल्पसाराणि** न चिरमवतिष्ठन्ते, स्वल्पमूल्यानि च मृन्मयानि स्थालीपिठरादीनि दारुमयानि द्रोणाढकादीनि अयोमयानि लेपनीकुद्दालकादीनि। **वेश्मनीति** गृहस्थितापहारे भूयान् दोषः। न तथा खलक्षेत्रादिगते। **निर्यात्य** दत्वा। सर्वशेषश्चायं, विशेषाभावात्। यत्र त्वपहृतं दातुमशक्यं तत्र द्विगुणं प्रायश्चित्तम्।। १६३।।

(२) **सर्वज्ञनारायणः। अल्पसाराणामल्पो**पायानां पलालादीनाम्। **अन्यवेश्मतो** समहीनवर्णगृहात्। **सांतपनं** त्र्यहसाध्यम्। तन्निर्यात्य हृतं द्रव्यं स्वामिने समर्प्य तन्मूल्यद्वारापि।। १६३।।

(३) **कुल्लूकः।** द्रव्याणामल्पार्घाणामल्पप्रयोजनानां चानुक्तप्रायश्चित्तविशेषाणां त्रपुसीसकादीनां परगृहाच्चौर्यं कृत्वा तदपहृतं द्रव्यं स्वामिने दत्वा सांतपनं कृच्छ्रं प्रायश्चित्तं वक्ष्यमाणं चात्मशुद्धये कुर्यात्स्वामिनेऽपहृतं द्रव्यं निर्यात्येति सर्वस्तेयप्रायश्चित्तशेषः।। १६३।।

(४) **राघवानन्दः। अल्पसाराणां** सीसकादीनां तन्निर्यात्यायदपहृतं द्रव्यं तस्य स्वामिनं प्रति निर्यात्यादानेन स्तेयप्रायश्चित्ताधिकारो सर्वत्रेति ज्ञेयम्।। १६३।।

(५) **नन्दनः। द्रव्याणामल्पसाराणामल्पमूल्यानां** तन्निर्यात्य तद्द्रव्यं प्रतिपाद्य अत्राल्पसाराणामिति विशेषणात्पूर्वत्र धान्यादिग्रहणं बहुसारविषयमित्यनुसन्धातव्यम्।। १६३।।

(६) **रामचन्द्रः।** तन्निर्जित्य हृतं द्रव्यं स्वामिने दत्वा आत्मविशुद्ध्यर्थं सान्तपनं कृच्छ्रम् ।। १६३ ।।

(७) **मणिरामः।** अल्पसाराणां अनुक्तप्रायश्चित्तविशेषाणां त्रपुसीसकादीनां तन्निर्यात्य स्वामिने तद् द्रव्यं दत्त्वा ।। १६३ ।।

(८) **गोविन्दराजः।** द्रव्याणामिति। द्रव्याणामल्पार्घाणामल्पप्रयोजनानां अनुक्त-प्रायश्चित्तविशेषाणां त्रपुसीसादीनां परगृहाच्चौर्यं कृत्वा तदपहृतं द्रव्यं स्वामिने दत्वा सान्तपनं कृच्छ्रं वक्ष्यमाणात्मशुद्ध्यर्थं कुर्यान्निर्यात्येति शेषः ।। १६३ ।।

(९) **भारुचिः।** अल्पसाराणामल्पमूल्यानामल्पभोगानां वा। भक्ष्यभोज्यादिष्वन्यस्य द्रव्यजातस्य गृहीतत्वात् त्रपुसीसादीनामिदं ग्रहणं विज्ञेयम् ।। १६३ ।।

**भक्ष्यभोज्यापहरणे यानशय्यासनस्य च ।।**
**पुष्पमूलफलानां च पञ्चगव्यं विशोधनम् ।। १६४ ।।**

(१) **मेधातिथिः।** **यानं** गन्त्र्यादि। **शय्या** खट्वादि। **आसनं** बृस्यासंदीपट्टादि। भक्ष्यभोज्ययोः खरविशदतद्वैपरीत्येन भेदो विज्ञेयः। **भक्ष्यं** मोदकशष्कुल्यादि। **भोज्यं** याव-कादि। **पंचगव्यं** प्रसिद्धम्। अत्राप्येकाहमेव ।। १६४ ।।

(२) **सर्वज्ञनारायणः।** **भक्ष्यं** फलादि। **भोज्यं** सक्त्वादि। **यानं** रथादि। **फलोद्भवानां** तैलादीनां पुष्पोद्भवादीनां कुङ्कुमादीनां हरणे **पञ्चगव्यं** पञ्चगव्योपलक्षितं महासांतपनम्। एतच्चाज्ञानाद्धरणे ।। १६४ ।।

(३) **कुल्लूकः।** **भक्ष्यस्य** मोदकादेर्**भोज्यस्य** पायसादेर्**यानस्य** शकटादेः **शय्याया** आसनस्य च पुष्पमूलफलानां च प्रत्येकमपहरणे पञ्चगव्यपानं विशोधनम् ।। १६४ ।।

(४) **राघवानन्दः।** **भक्ष्यस्य** मोदकादेः। **भोज्यस्य** पायसादेः। भक्ष्यादिसप्तानां **पञ्चगव्यं** पञ्चगव्यपानं कृत्वा तदहरुपोषणम्। **शोधनं** प्रायश्चित्तम् ।। १६४ ।।

(५) **नन्दनः।** इतः प्रभृतिनिर्यात्येत्यनुवर्तते पुष्पमूलफलानाञ्चापहरण इति संबन्धनीयं **पञ्चगव्यप्राशनम्** ।। १६४ ।।

(६) **रामचन्द्रः।** **भक्ष्यं** फलादि ।। १६४ ।।

(७) **मणिरामः।** **भक्ष्यस्य** मोदकादेः। **भोज्यस्य** पायसादेः ।। १६४ ।।

(८) **गोविन्दराजः।** **भक्ष्यभोज्यापहरण** इति। **भक्ष्यस्य** मोदकादेर्**यानस्य** गन्त्र्यादेः **शय्यायाः** खट्वादेः **आसनस्य** च पीठादेः पुष्पाणां मूलानां चापहरणे गोमूत्रं गोमयं क्षीरं दधि सर्पिरित्येतत्पञ्चगव्यं विशोधनम् ।। १६४ ।।

(९) **भारुचिः।** अन्नाञ्च संख्या भक्ष्यभोज्यादीनामावृत्त्यपेक्षया सप्रत्ययाप्रत्य-यतो वा ।। १६४ ।।

**तृणकाष्ठद्रुमाणां च शुष्कान्नस्य गुडस्य च ॥**
**चेलचर्मामिषाणां च त्रिरात्रं स्यादभोजनम् ॥ १६५ ॥**

(१) **मेधातिथिः** । तृणादीनां पूर्वस्मात् यानादेरधिकहरणे प्रायश्चित्तमेतत् । **काष्ठम**-घटितं वंशस्तंभादि, द्रुमसाहचर्यात् । **द्रुमो** वृक्षः । **शुष्कान्नं** तण्डुलादि भ्रष्टयवा वा । **गुडग्रहणं** स्वविकारार्थम् । तेन खण्डनत्स्यण्डिकादेर्ग्रहणम् । **चैलं** वस्त्रं बहूनां 'उत्तमानां च वाससाम्' । प्रागुक्तेन धनग्रहणेन कृच्छ्रादेः । **चर्म** कवचम । **मांसमामिषम्** ॥ १६५ ॥

(२) **सर्वज्ञनारायणः** । **द्रुमाणां** जीवताम् । **शुष्कान्नस्य** तण्डुलादेः । त्रिरात्रमज्ञानाद्धरणे ॥ १६५ ॥

(३) **कुल्लूकः** । तृणकाष्ठवृक्षाणां शुष्कान्नस्य च तण्डुलादेर्वस्त्रचर्ममांसानां मध्य एकस्याप्यहरणे त्रिरात्रमुपवासं चरेत् ॥ १६५ ॥

(४) **राघवानन्द** । किंच **तृणेति** । **शुष्कान्नस्य** पृथुकादेः । **आमिषाणां** मांसानाम् । तृणाद्यष्टानां हरण इति शेषः ॥ उपोषणत्रयम् ॥ १६५ ॥

(५) **नन्दनः** । अत्राप्यपहरण इत्येव ॥ १६५ ॥

(६) **रामचन्द्रः** । चैलचर्मामिषाणां हरणे त्रिरात्रं अभोजनम् ॥ १६५ ॥

(७) **मणिरामः** । **शुष्कान्नस्य** तंदुलादेः । **चेलं** वस्त्रम् ॥ १६५ ॥

(८) **गोविन्दराजः** । **तृणकाष्ठद्रुमाणामिति** । तृणकाष्ठवृक्षगुडवस्त्रचर्ममांसानां शुष्कान्नस्य च तण्डुलादेरपहरणं त्रिरात्रमुपवासः स्यात् ॥ १६५ ॥

(९) **भारुचिः** । तृणादीनां सारापेक्षया प्रायश्चित्तम् । सत्यपि **च** पेयत्वे पय आदीन्यपि भक्ष्यभोज्यान्तर्भूतानि दृष्टव्यानि । **शुष्कान्नं** पर्पटकादि । **गुडग्रहणं** सर्वगुडविकारार्थम् । **चेलग्रहणं** शाणक्षौमदुकूलाद्यर्थम् । कार्पासादीनां त्वन्यत् प्रायश्चित्तं वक्ष्यति ॥ १६५ ॥

**मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च ॥**
**अयःकांस्योपलानां च द्वादशाहं कणान्नता ॥ १६६ ॥**

(१) **मेधातिथिः** । स्वल्पबहुत्वापेक्षया च कालह्रासः सकृदावृत्तौ च ॥ १६६ ॥

(२) **सर्वज्ञनारायणः** । अयः पदं रूप्यताम्रकांस्येतरलोहग्रहणार्थम् । **उपलः** प्रस्तरः । **कणान्नता** कणास्तण्डुलसूक्ष्मावयवास्तन्मात्रान्नता । एतच्चानापदि अन्यत्राल्पहरणे कणानां नात्यल्पलक्षणम् ॥ १६६ ॥

(३) **कुल्लूकः** । मणिमुक्ताविद्रुमताम्ररूप्यलोहकांस्योपलानां च प्रत्येकमपहरणे द्वादशाहं तण्डुलकणभक्षणं कुर्यात्सर्वत्र चात्र सकृदभ्यासदेशकालद्रव्यस्वामिगुणादौ शक्त्यपेक्षया उत्कृष्टापकृष्टद्रव्यापहारिविषयसमीकरणं समाधेयम् ॥ १६६ ॥

(४) **राघवानन्दः** । मण्याद्यष्टानां हरणे **कणान्नता** कणमेवान्नं भक्षणीयं यस्यापहर्तुः स कणान्नः तस्य भावः ॥ १६६ ॥

(५) **नन्दनः**। अपहरण इत्येव **कणान्नता** कणभक्षणं स्यादित्येव ।। १६६ ।।

(६) **रामचन्द्रः**। अयस्कान्तस्य उपलानां हरणे कणान्येवान्नं कणान्नं तस्य भावः **कणान्नता** तण्डुलसूक्ष्मावयवास्तद्भुङ्क्तः ।। १६६ ।।

(७) **मणिरामः**। **कणान्नता** कणभक्षणम् ।। १६६ ।।

(८) **गोविन्दराजः**। **मणिमुक्ताप्रवालानामिति**। मणिमुक्ताविद्रुमताम्ररूप्यायःकांस्यपाषाणानां चापहरणाद्द्वादशाहं तण्डुलफलभक्षणं कार्यम्। सर्वत्रात्र सकृदभ्यासदेशकालद्रव्यस्वामिदौर्गत्याद्यपेक्षयोत्कृष्टद्रव्यापहारविषयमसमीकरणं परिहरणीयम् ।। १६६ ।।

(९) **भारुचिः**। अत्रापि सारासारापेक्षया सकृद्धरणे आवृत्तौ च ।। १६६ ।।

**कार्पासकीटजोर्णानां द्विशफैकखुरस्य च ।।**
**पक्षिगन्धौषधीनां च रज्ज्वाश्चैव त्र्यहं पयः ।। १६७ ।।**

(१) **मेधातिथिः**। **कीटजाः** पट्टाः। **द्विशफा** गवादयः। **एकखुरा** अश्वादयः। **पक्षिणः** शुकश्येनादयः। **रज्जुः** कूपादेरुदकोदंचनी ।। १६७ ।।

(२) **सर्वज्ञनारायणः**। **कार्पासजास्तन्तवः**। **कीटजाः** कौशेयाद्याः। ऊर्णा मेषादिरोमाणि **द्विशफा** अजाद्याः। **एकशफाः** खराद्याः। **गन्धाः** कस्तूरिकादयः। **ओषध्यः** औषधानि दशमूलादीनि। **रज्जुः** पटादिकृतः। एषामापद्यत्यल्पानां हरणे त्र्यहं क्षीरं **पयः** पिबेदिति शेषः ।। १६७ ।।

(३) **कुल्लूकः**। कार्पासकृमिकोशजोर्णानां वस्त्राणां **द्विशफैकशफस्य** गोरश्वादेः **पक्षिणां** शुकादीनां **गन्धानां** च चंदनप्रभृतीनां रज्ज्वाश्च प्रत्येकं हरणे त्र्यहं क्षीराहारः स्यात् अत्रापि पूर्ववद्विषयसमीकरणपरिहारः स्वामिनश्चोत्कृष्टापकृष्टद्रव्यसमर्पणादपि वचनादेकरूपप्रायश्चित्ताविरोधः ।। १६७ ।।

(४) **राघवानन्दः**। **कीटजं** पट्टादिसूत्रं **ऊर्णा** मेषलोमानि एषाम्। **द्विशफो** गवादिः **एकशफोऽश्वादिः**। द्विखुर इति पाठे स एवार्थः। कार्पासादिनवानामपहरणे प्रत्येकं त्र्यहं केवलं उदकपानम्। कार्पासादिपदं तन्निर्मितवस्त्राद्युपलक्षकं प्रायश्चित्ताकरणे श्वित्रादिरोगः ।। १६७ ।।

(५) **नन्दनः**। रज्ज्वाश्चापहरण इत्येव पयःपानम् ।। १६७ ।।

(६) **रामचन्द्रः**। **कीटजोर्णानां** कीटजतंतूनां क्षौमादीनां पक्षगन्धः सुगन्धः **औषधीनां** दशमूलादीनां रज्ज्वाहरणे त्र्यहं **पयः** पिबेत् ।। १६७ ।।

(७) **मणिरामः**। **त्र्यहं पयः** दिनत्रयं दुग्धाहारः ।। १६७ ।।

(८) **गोविन्दराजः**। **कर्पासकीटजोर्णानामिति**। कार्पासपट्टोर्णानां **द्विशफस्याश्वादेः पक्षिणां** च शुकादीनां **गन्धप्रधानानां** चागरुप्रभृतीनामौषधानां गुडूच्यादीनां रज्ज्वाश्च मुञ्जादिकृताया अपहरणे त्र्यहं क्षीराहारः स्यात् ।। १६७ ।।

(९) भारुचिः। पूर्ववदत्राप्यपेक्षा योजनीया। हस्त्यादीनां च सामान्यविहितिमन्यद्‌ष्टव्यम् ।। १६७।।

**एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः ।।**
**अगम्यागमनीयं तु व्रतैरेभिरपानुदेत् ।। १६८।।**

(१) **मेधातिथिः**। उक्तार्थः श्लोकः।। १६८।।

(२) **सर्वज्ञनारायणः। अगम्यागमनीयं** महापातकेतरागम्यागमनसंबन्धि:।। १६८।।

(३) **कुल्लूकः। एतैरुक्तैः** प्रायश्चित्तैः स्तेयजनितपापं द्विजातिरपानुदेत्। अगम्यागमननिमित्तं **पुनरेभिर्वक्ष्यमाणैर्व्रतैर्निर्हरेत्** ।। १६८।।

(४) **राघवनानन्दः**। अपहरणप्रकरणमुपसंहरन् अगम्यागमनप्रायश्चित्तमाह **एतैरिति** दशभिः। **एभिर्वक्ष्यमाणैः**।। १६८।।

(५) **नन्दनः। एतैरुक्तैरेभिर्वक्ष्यमाणैः**।। १६८।।

(६) **रामचन्द्रः। एतैर्व्रतैः** स्तेयकृतं पापं **अपोहेत** नाशयेत।। १६८।।

(७) **मणिरामः। एतैर्पूर्वोक्तैः। एभिः** वक्ष्यमाणैः।। **अपानुदेत्** पापं दूरी कुर्यात्।। १६८।।

(८) **गोविन्दराजः। एतैरिति। एभिरुक्तैः** प्रायश्चित्तैः चौर्यजनितं पापं द्विजातिरपनुदेत्। अगम्यागमननिमित्तं पुनरेभिर्वक्ष्यमाणैः प्रायश्चित्तैर्निर्हरेत्।। १६८।।

**गुरुतल्पव्रतं कुर्याद्रेतः सिक्त्वा स्वयोनिषु ।।**
**सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च ।। १६९।।**

(१) **मेधातिथिः। गुरुतल्पव्रत**मित्यविशेषवचनेऽपि, न तेन 'सुप्यादि'त्येवमाद्यतिदिश्यते, अपि तु 'प्राजापत्यं चरेदब्दम्' इति महापातकत्वात्। न हि महापातकेभ्योऽन्यत्र मरणांतं प्रायश्चित्तमस्ति। अभ्यासे तु स्यादिति। **स्वयोनयो** भगिन्यः सोदराः। **सख्युः स्त्रीषु** सुहृद्भार्यासु। सुहृत्त्वमेवात्र कारणं, न यौनादिविशेषः, नापि श्रोत्रियत्वादिगुणः। एवं **पुत्रस्य स्त्रीषु** स्नुषासु। असमानजातीयास्वपि **कुमारीषु** पित्रादिभिरदत्तासु। स्वयं संप्रीत्यानुपनतास्वेतदेव बलाद्गमने। अत्रापि न सत्यपेक्षा। यद्यप्यतिदेशे विशेषो नास्ति तथापि प्रायश्चित्तद्वयं स्यादिति, दृष्टत्वात्। तथा च गुरुलघुभावाद्धीनजातीयासु कृच्छ्राब्दाच्चांद्रायणं मासत्रयं लघीय आदेश्यम्।

**अन्त्यजाश्**चाण्डालम्लेच्छादिस्त्रियः। चण्डालादिस्त्रीषु च स्मृत्यन्तरे ज्ञानाज्ञानकृतो विशेष उक्तः। 'अन्त्यावसायागमने कृच्छ्रार्धमन्यासु द्वादशरात्रम्'।। १६९।।

(२) **सर्वज्ञनारायणः। गुरुतल्पव्रतं** द्वादशाब्दव्रतम्। **स्वयोनिष्वेक**योनिषु सापत्न-भगिनिषु। **सख्युर्मित्रस्य। पुत्रस्य** गूढजादेः। औरसादिपुत्रत्रयभार्यागमनं त्वतिपातकम्। **कुमारीष्व**परिणीतासु। **अन्त्यजासु** चाण्डालीतरविलोमजशूद्रादिस्त्रीषु।। १६९।।

(३) **कुल्लूक। स्वयोनिषु** सोदर्यभगिनीषु तथा मित्रभार्यासु पुत्रपत्नीषु चाण्डालीषु प्रत्येकं रेतः सिक्त्वा गुरुदारगमनप्रायश्चित्तं कुर्यात्। अत्रापि ज्ञानाभ्यासाद्यनुबन्धापेक्षया। मरणांतिकं अत एव। रेतः सिक्त्वा कुमारीषु चाण्डालीष्वन्त्यजासु च। सपिंडापत्यदारेषु प्राणत्यागो विधीयत इति यमेन मरणान्तिकमुपदिष्टं अज्ञानात्तद्व्रतम्।। १६९।।

(४) **राघवानन्दः।** तत्रादावनुपातकप्रायश्चित्तमाह **गुरुतल्पेति। स्वयोनिषु** सोदर्यासु। **पुत्रस्यौरसस्य। कुमारीषु** ब्राह्मणजातासु इदं तु ज्ञाताभ्यासापेक्षया। रेतः सिक्त्वा कुमारीषु स्वयोनिष्वन्त्यजासु च। सपिण्डापत्यदारेषु प्राणत्यागो विधीयत इति यमवचनात्। अज्ञानात्तु प्राजापत्यं चान्द्रायणं वा तथोक्तं खट्वाङ्गीत्यत्र। प्राजापत्यं चरेत्कृच्छ्रं समा वा गुरुतल्पगः। चान्द्रायणं वा त्रीन्मासानभ्यस्यन्वेदसंहितामिति याज्ञवल्क्यः।। १६९।।

(५) **नन्दनः। स्वयोनिषु** स्वदुहितृषु स्त्रीषु सख्युस्त्रीषु पुत्रस्य च स्त्रीषु।। १६९।।

(६) **रामचन्द्रः। स्वयोनिषु** भगिन्यादिषु रेतः सिक्त्वा गुरुतल्पव्रतं कुर्यात् पुत्रस्य गूढजादेः स्त्रीषु अन्त्यजासु।। १६९।।

(७) **मणिरामः। स्वयोनिषु** सोदर्यभगिनीषु अत्रापि ज्ञानाऽभ्यासाद्यनुबंधापेक्षया मरणांतिकम्। अज्ञानात्तु व्रतरूपं कुर्यादिति ज्ञेयम्।। १६९।।

(८) **गोविन्दराजः। गुरुतल्पव्रतमिति।** भगिनीषु सोदर्यासु च मित्रभार्यासु स्नुषा-कुमारीषु चाण्डालाद्यन्त्यजासु चोपगमनं कृत्वा गुरुदारगमनप्रायश्चित्तं कुर्यात्। अभ्यासाद्यपेक्षया तत्र तत्र गुरुतल्पप्रायश्चित्तं विज्ञेयम्। रेतःसेकः स्वयोनिष्विति अनेनास्य पौनरुक्त्यं तत्र वोक्तपरिहारार्थम्।। १६९।।

(९) **भारुचि।** अकुमारीष्वपि चण्डालादिस्त्रीषु चान्यदपि प्रायश्चित्तं वक्ष्यति, 'चण्डालान्त्यस्त्रियो गत्वे'त्येवमादि।। १६९।।

**पैतृष्वसेयीं भगिनीं स्वस्त्रीयां मातुरेव च।।**
**मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरेत् ।। १७० ।।**

(१) **मेधातिथिः।** पितृष्वसुर्दुहिता **पैतृष्वसेयी भगिनी। मातृष्वस्त्रीया** मातृष्वसुर्दुहिता। **मातुश्च** भ्रातुर्मातुलस्य दुहिता। **आप्तस्य** सोदर्यस्येत्यर्थः।। १७०।।

(२) **सर्वज्ञनारायणः।** पितृष्वसृसुतां भगिनीम्। मातुः स्वस्रेयीं मातुर्या स्वसा तस्या दुहितरम्। मातुश्च य आप्तः सोदरो भ्राता तस्य सुतामिति शेषः। एता अपरिणीता अज्ञानाद्गत्वा चान्द्रायणम् ।। १७० ।।

(३) **कुल्लूकः** । पितृष्वसुर्मातृष्वसुश्च दुहितरं भगिनीं मातुश्च सोदर्यभ्रातुर्दुहितरं सोदर्यभगिनीमिव निषिद्धगमनां गत्वा चान्द्रायणं कुर्यात् सकृदज्ञानव्यभिचरिता विषयमल्पत्वात् ।। १७० ।।

(४) **राघवानन्दः** । **पैतृष्वस्रेयीं** पितृष्वसुर्दुहितरम् । तथा मातृष्वसुरपि मातृर्भ्रातुराप्तस्य सहोदरस्य दुहितरमिति शेषः । अन्यथैतास्तिस्र इत्यनुपपत्तिः । स्वभगिनीमिवैता इत्यर्थः ।। १७० ।।

(५) **नन्दनः** । पैतृष्वसेयीं पितृष्वसुः पुत्रीं स्वस्त्रीयां मातृष्वसुः पुत्रीं मातुर्भ्रातुर्मातुलस्याप्ताम् । दुहितरमेतास्तिस्रो गत्वा चान्द्रायणञ्चरेत् । भगिनीं तिस्नामिति त्रिसृणामेता सां धारणम् ।। १७० ।।

(६) **रामचन्द्रः** । पैतृष्वसेयीं मातुः स्वस्त्रीयां मातुलस्य पत्नीं मातुः साक्षात् आप्तसोदरस्य अज्ञानात् गत्वा चान्द्रायणं चरेत् ।। १७० ।।

(७) **मणिरामः** । पैतृस्वस्त्रेयीं भगिनीं स्वस्त्रीयां मातुरेव च पितृभगिन्या मातुर्भगिन्याश्च दुहितरम् । मातुश्च भ्रातुः मातृसोदर्य भ्रातुर्दुहितरम् । आप्तस्य दुहितरम् ।। १७० ।।

(८) **गोविन्दराजः** । **पितृष्वस्रेयीमिति** । पितृष्वसृमातृष्वसृदुहितरं मातुः स्वभ्रातुः सोदरस्य दुहितरं गत्वा चान्द्रायणं चरेत् ।। १७० ।।

(९) **भारुचिः** । ऋज्वर्थः श्लोकः यतश्चैतदेवमतः ।। १७० ।।

**एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत्तु बुद्धिमान् ।।**
**ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः ।। १७१ ।।**

(१) **मेधातिथिः** । "ननु च सपिण्डा चेत्यनेनैवैतासामविवाह्यत्वे सिद्धे किमर्थमिदं नोपयच्छेतेति" । केचिदाहुः । अन्यासां पक्षेऽभ्यनुज्ञानार्थं सपिण्डश्लोके प्रतिषिद्धानाम् । तदयुक्तम् । **पतति ह्युपयन्नध** इति प्रायश्चित्ताविधानात् । एतस्मिंश्च प्रयोजने संभवति सपिण्डश्लोकस्य पाक्षिको बाधोऽयुक्तोऽगत्या हि विकल्प आश्रीयते । **ज्ञातित्वेन** बन्धुत्वेनेत्यर्थः । **अनुपेयाः** अविवाह्या अगम्याश्च । **उपयन्**विवाहयन् । **अधः पतति** नरकं प्राप्नोतीति यावत् । अथवा जातितो भ्रश्यति हीनजातीयः संपद्यते । यद्यपि जातेर्जीवत्पिण्डानपायः, तथापि तत्कर्मानधिकारादेवमुच्यते ।। १७१ ।।

(२) **सर्वज्ञनारायणः** । अथ तासां स्वयं परिणयनं निषेधति **एता** इति । भार्यार्थे भार्यानिष्पाद्यकर्मार्थे **नोपयच्छेत्** नोद्वहेत् । **ज्ञातेयेन** एकबीजिना । चाज्ञातेयेनेति त्वन्यासामपि तादृशीनामपरिणेयत्वार्थमुक्तम् । **अधःपतति** द्विजकर्मतो हीयते प्रायश्चित्तं तु स्मृत्यन्तरोक्तम् ।। १७१ ।।

(३) **कुल्लूकः** । तिस्र एताः पैतृष्वसेय्याद्याभार्यार्थे प्राज्ञो नोद्वहेत् **ज्ञातित्वेन** बान्धवत्वेन ता नोपेतव्याः । यस्मादेता **उपयन्नु**पगच्छन्नरकं याति असपिंडा च या मातुरित्यनेन निषेधसिद्धौ दाक्षिणात्याचारदर्शनेन निषेधदार्ढ्यार्थं पुनर्वचनम् ।। १७१ ।।

**(४) राघवानन्दः।** अत एवासां विवाहोऽपि निषिद्ध इत्याह **एता** इति। ज्ञातेयो बन्धुजनतेत्यभिधानाद्बान्धवैः **अनुपेयाः** अविवाह्या ता **उपयन्नु**द्वहन्नधःपतती-त्यन्वयः।। १७१।।

**(५) नन्दनः।** अविवाह्याश्चैतास्तिस्र इत्याह **एतास्तिस्रस्तु भार्यार्थे** इति। ज्ञायते ज्ञातित्वेन।। १७१।।

**(६) रामचन्द्रः।** एतास्तिस्रः एताः काः तत्र उच्यते पैतृष्वस्रेयीं मातृष्वसारं मातुलानीं सोदरस्य स्त्रीं अज्ञानाद्गत्वा चान्द्रायणं चरेत् बुद्धिमान् न उपयच्छेत्। ज्ञातित्वेन सापिण्डचे गताः अनुमेयाः। **उपयन्** गच्छन् अधःपतति।। १७१।।

**(७) मणिरामः।** **एतास्तिस्रः** पैतृस्वस्रेय्याद्याः। **न उपयच्छेत्** नोद्वहेत्। **ज्ञातेयेन** बांधवत्वेन। **ताः अनुपेयाः** नोपगंतव्याः। हि यस्मात् एताः **उपनयन्** उपागच्छन् **अधःपतति** नरकं याति। असपिंडा च या मातुरित्यनेन निषेधे सिद्धावपि पुनर्वचनं दाक्षिणात्याचार-दर्शननिषेधदाढर्च्यार्थमित्यपौनरुक्तिः।। १७१।।

**(८) गोविन्दराजः।** **एता** इति। **तिस्र** **एताः** पितृष्वस्राद्याः भार्यार्थं प्राज्ञैः नोद्वहनीयाः। ज्ञातित्वादेता नोढव्याः यस्मादेता उपगच्छन् नरकं व्रजति। असपिण्डा तु या मातुरित्यनेनैव निषेधसिद्धौ दाक्षिणात्याचारदर्शनेन दार्ढ्यार्थं पुनर्वचनम्।। १७१।।

**(९) भारुचिः।** मातृष्वसृमातुलदुहित्रोस्त्वसपिण्डाश्च याः मातुरित्यनेन सिद्धे प्रतिषेधे पैतृष्वस्रेयाः प्रतिषेधार्थं पुनरिह ग्रहणम्। अनुवादार्थो वायं श्लोको वर्णनीयः, "असपिण्डा च या मातु" रित्यनेनैव सिद्धत्वादिति।। १७१।।

**अमानुषीषु पुरुष उदक्यायामयोनिषु।।**
**रेतः सिक्त्वा जले चैव कृच्छ्रं सांतपनं चरेत्।। १७२।।**

**(१) मेधातिथिः।** **अमानुष्यो** वडवाद्याः। गोरमानुषीत्वेऽपि 'सखिसयोनिसगोत्रा-शिष्याभार्यासु स्नुषायां गवि च तल्पसमः। अवकर' (गौ० २३। १२-१३) इति विशेष-विहितमेव। अनयोर्गुरुतल्पावकीर्णप्राश्चित्तयोरबुद्धिपूर्वभेदेन व्यवस्था। तल्पशब्देन प्रसिद्ध-सम्बन्धादत्र शास्त्रे गुरुतल्पमेवोच्यते। 'अवकरो'ऽवकीर्णीनिमित्तम्। निमित्ते चातिदिष्टे तत्कार्यातिदेशः। 'सखी' चात्र या पुरुषवन्मैत्रीमागता, न तु या सख्युः स्त्री। न ह्यत्र पुंयोगा-त्प्रवृत्तिः। न च भार्यासंबन्धेन संबन्धोऽस्ति, सयोनिपदेन व्यवधानात्। तथा च वसिष्ठो 'गुर्वी सखी न च पात्रांगत्वात्कृच्छ्राब्दपातं न च पात्रकुमारी अनयोस्तूपस्थादन्यत्र'। **उदक्यायां** च मासिकेन रजसाभिप्लुतो'दक्या'। पाठान्तरं 'पीत्वाधरं पुरुष इति **उदक्यायामयोनिषु**'। एक एवार्थः। **अयोनिः** स्त्रीलिङ्गादन्यत्र स्थाने। तथान्ये 'जले खे च' इति पठन्ति। "ननु चायोनिग्रहणादेव सिद्धं 'ख' इति न पठितव्यम्। आकाशः खशब्देनोच्यते। योनेरन्यश्च सः"। नैष दोषः। योनिशब्देन साहचर्यात् अन्यदङ्गमेवोच्यत इति मन्यन्ते। **जले** साक्षात्।। १७२।।

(२) **सर्वज्ञनारायणः । अमानुषीषु** वडवादिषु गवि तु गवि च तत्तुल्यमिति गुरुतल्पप्रायश्चित्तस्य गौतमेनोक्तत्वादधिकं प्रायश्चित्तम्। **उदक्यायां** रजस्वलायाम्। **अयोनिषु** योनिदेशादन्यत्र मुखादौ। **जले** जलमध्ये। सांतपनं कामतः ।। १७२ ।।

(३) **कुल्लूकः । अमानुषीषु** वडवाद्यासु न गवि गोष्ववकीर्णीसंवत्सरं प्राजापत्यं चरेदिति। शंखलिखितादिभिर्गुरुप्रायश्चित्ताभिधानात्। तथा रजस्वलायां योनितश्चान्यत्र स्त्रियां जले रेतःसेकं कृत्वा पुरुषः सान्तपनं कृच्छ्रं कुर्यात्।। १७२ ।।

(४) **राघवानन्दः । किंच अमेति। अमानवीषु** मेष्यादिषु गवातिरिक्तासु गोष्ववकीर्णी संवत्सरं प्राजापत्यं चरेदिति शङ्खोक्तेः पुरुष इत्यनुवादमात्रम्। **अयोनिषु** गुदादिषु स्वस्त्रिया एव। केवले जले। **कृच्छ्रं** सान्तपनाख्यं वक्ष्यमाणम् ।। १७२ ।।

(६) **रामचन्द्रः ।** न मानुषीषु च उदक्यासु उदक्यायाम् ।। १७२ ।।

(७) **मणिरामः । अमानुषीषु** वडवाद्यासु। न तु गवि। गोष्वप्रकीर्णः संवत्सरं प्राजापत्यं चरेदिति शंखेन गुरुप्रायश्चित्तस्य तत्रोक्तत्वात्। **उदक्यायां** रजस्वलायाम्। **अयोनिषु** योनिव्यतिरिक्तेषु स्थलेषु हस्तादि व्यापारेण।। १७२ ।।

(८) **गोविन्दराजः । अमानुषीष्वनङ्गष्विति ।** अमानुषीषु वडवाद्यासु न गवि गौतमीये गवि च तल्पसम इत्यतिगुरुप्रापश्चित्तदर्शनादनङ्गे वाविद्यमानस्त्रीपुल्लिङ्गे नपुंसके रजस्वलायां च योनितश्चान्यत्र स्थितायां जले च रेतःसेकं कृत्वा सान्तपनं कृच्छ्रं कुर्यात् ।। १७२ ।।

(९) **भारुचिः ।** 'अमानुषीष्वनङ्गे च पैशाच्यां चैव योषिती'त्यपरः पाठः अस्य श्लोकार्धस्य । खे च इत्यपरे पठन्ति। **अमानुषीषु** बन्धबाह्यासु **पुरुषे** चानङ्गे। **उदक्या** प्रसिद्धा। **अयोनौ च जले च रेतः सिक्त्वा ।** व्यवहितेषु वक्ष्यत्यनन्तरश्लोके नौप्रभृतिषु। **कृच्छ्रं सान्तपनं** चरेत्। तच्च वक्ष्यति। वडवादिवद् गवि प्रायश्चित्तमन्यमेतत्। अतस्तस्यानुक्तत्वात् स्मृत्यन्तराद्वर्णनीयम्। स्नुषायां गवि च गुरुतल्पसमं इति।। १७२ ।।

**मैथुनं तु समासेव्य पुंसि योषिति वा द्विजः ।।**
**गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत् ।। १७३ ।।**

(१) **मेधातिथिः । मैथुनेषु ।** समनन्तरं सवाससः स्नानम् । **गोयाने** गन्त्र्यादावप्सु चापि ।। १७३ ।।

(२) **सर्वज्ञनारायणः । पुंसि** तस्य मुखादौ । **योषिति** स्वयोषित्यपि यदि **गोयाने** गोयुक्तरथादौ संविष्टायाम् । **अप्सु याने** नौकायाम् । तथा दिवागमने । स्नानेन शुद्धिरकामतः । कामतस्तु प्रायश्चित्तं स्मृत्य तत्रोक्तम् ।। १७३ ।।

(३) **कुल्लूकः ।** यत्र देशे क्वापि **पुरुषे मैथुनं** सेवित्वा स्त्रियां गोयाने शकटादौ जले दिवाकाले मैथुनं च सेवित्वा सवस्त्रश्च स्नायात् ।। १७३ ।।

(४) **राघवानन्दः**। किन्न मैथुनमिति गोयानेत्याद्यधिकरणं पुंसि गुदादिषु योषिति स्वयोनिष्विति।। १७३।।

(५) **नन्दनः**। पुंसि योषिति पुंसो योषितश्चोपर्यन्यथा सह मैथुनं समाप्येत्यर्थः। एवं गोयानामपि वियोज्यम्।। १७३।।

(६) **रामचन्द्रः**। पुंसि वा योषिति वा मैथुनं **समासेव्य** गत्वा गोयाने नौकायां मैथुनं दिवा चैव।। १७३।।

(७) **मणिरामः**। **सवासाः** सवस्त्रः।। १७३।।

(८) **गोविन्दराजः**। **मैथुनमिति**। पुंस्यूरुमध्यकक्षादेर्मैथुनं कृत्वा स्त्रियां गोयुक्ते याने वा गन्त्र्यादावप्सु याने वा नावादौ दिवा च कृत्वा सचैलस्नानं कुर्यात्।। १७३।।

(९) **भारुचिः**। पुंस्युपरिभोग्ये पूर्वश्लोक उक्तं प्रायश्चित्तं गुरु। इदं त्वन्यदन्यत्र प्रदेशे लघुप्रायश्चित्तम्। **योषिति वा द्विज** इति द्विजग्रहणं विशेषार्थम्। तत्स्त्रीपुंसयोर्मैथुन विशेषयति। **गोयानेऽप्सु च** याने **दिवा चैवा** यानेऽपि **सवासाः स्नानमाचरेत्**। सवस्त्रस्नानोपदेशाच्च नित्यादधिकं विशिष्टमिदं नैमित्तिकं स्नानमुच्यते।। १७३।।

## चंडालांत्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।।
## पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति ।। १७४।।

(१) **मेधातिथिः**। **चण्डाला** म्लेच्छा दिगन्तवासिनः। तत्स्त्रीगमने प्रायश्चित्तं तदन्नभोजने प्रतिग्रहे च। **पततीति** वचनात्कृच्छ्राब्दादधिकं प्रायश्चित्तं, न पुनः पातित्यमेव भोजने। 'अभोज्यानां तु भुक्त्वाऽन्नम्' इतिप्राप्ते वचनमिदं कृच्छ्राब्दप्रायश्चित्तार्थम्। एवं प्रतिग्रहेऽपि 'मासं गोष्ठे पयः' इति प्राप्ते तदर्थमेव। **ज्ञानात् साम्यमिति**। कामकारकृतेऽपि प्रायश्चित्तविधानार्थेऽर्थवादोऽयम्। यत्स्मृत्यन्तरेऽब्दशब्देन ज्ञाताज्ञातयोः प्रायश्चित्तमुक्तं तच्च दर्शितम्। अतः कुतोऽधिकप्रायश्चित्तार्थता। **"भुक्त्वा** चेति केन संबध्यते"। चाण्डालान्त्येत्यनेन। "ननु च गुणीभूतमेतत्"। गुणीभूतस्याप्यपेक्षायां संबन्धो दर्शितः। 'भुक्त्वा' 'कस्ये'त्याकांक्षायां अन्यस्याश्रुतत्वात्साम्यवचनाच्च चाण्डालान्त्यानामेव सम्बन्धः। अतोऽयमर्थो भवति चाण्डालस्त्रीम्लेच्छानामन्नमशित्वा तेभ्यः **प्रतिगृह्य च** स्त्रियं गत्वा सकृद्गमनात्प्रायश्चित्तम्। अभ्यासे तु साम्यमेव युक्तमनधिकारप्रायश्चित्तेन। यतः प्रतिनिमित्तं नैमित्तिकेन भवितव्यं न च तान्येकेन जन्मना शक्यन्तेऽनुष्ठातुम्।। १७४।।

(२) **सर्वज्ञनारायणः**। चाण्डालानां स्त्रियस्तथा तदन्ये अन्त्यावसायिनो बाह्याः सूताद्याः तेषां स्त्रियः सकृदपि गत्वा तथा तेषामेवान्नं चिरकालं भुक्त्वा तेभ्यः प्रतिगृह्य चात्यन्ताभ्यासेन बहुधनं महापातकितुल्यो भवति। ज्ञानात् कामात् साम्यं च तज्ज्वलितप्रवेशमत्यन्तान्नाशे न तत्र प्रायश्चित्तमित्यर्थः।। १७४।।

(३) **कुल्लूकः**। चण्डालस्यान्त्यजानां च म्लेच्छशबरादीनामज्ञानतो ब्राह्मणः स्त्रियो गत्वा तेषां चान्नं भुक्त्वा तेभ्यः प्रतिगृह्य पतति। पतितस्य प्रायश्चित्तं कुर्यात् एतच्च गुरु-

त्वाच्चाभ्यासतो भोजनप्रतिग्रहविषयम्। ज्ञानात्तु तेषां स्त्रीगमनं कृत्वा समानतां गच्छति एतच्च प्रायश्चित्तगौरवार्थम्।। १७४।।

(४) **राघवानन्दः**। चण्डालश्चान्त्यो यवनादिस्तयोः स्त्रियं गत्वा संभोग्यत्वेन। गोविन्दराजस्तु पानाशनादूर्ध्वं पतति याजनादिभिस्तु ततोऽर्वागिति। अन्ये तु पानाशनादिभिरब्देन न तु सद्यः याजनादिभिस्तु सद्यः। तथा च देवलबौधायनौ। याजनं योनिसंबन्धं स्वाध्यायं सहभोजनम्। कृत्वा सद्यः पतन्त्येते पतितेन समं नराः। संवत्सरेण पतति पतितेन सहाचरन् याजनाध्यापनाद्यौनान्नसद्यः शयनासनात्। **भुक्त्वा** तेषामन्नं प्रतिगृह्य तेषामेव सुवर्णादि पतति पतितप्रायश्चित्तं कुर्यात्। अज्ञानतोऽभ्यस्य। ज्ञानतोऽभ्यासे तु साम्यमिति प्रायश्चित्तगौरवार्थम्। न ह्यन्यजातेरन्यजातित्वं वस्तुतो घटते।। १७४।।

(५) **नन्दनः**। अन्त्यः पुल्कसादिभिर्भुक्त्या चण्डालादीनां भोजनं तेभ्य एव। प्रत्यगृह्य गमनभोजनप्रतिगृहेषु समुच्चितेष्वेतदित्यत्र प्रायश्चित्तमूह्यम्।। १७४।।

(६) **रामचन्द्रः**। अज्ञानतः पतति असकृद्भोजनप्रतिग्रहौ कृत्वेत्यर्थः सकृद्विप्रः ज्ञानात्साम्यं गच्छति।। १७४।।

(७) **मणिरामः**। भुक्त्वा च चंडालादीनां अन्नं भुक्त्वा तेभ्य एव प्रतिगृह्य च। पतति पतितस्य यत्प्रायश्चित्तं तत्कुर्यात्।। १७४।।

(८) **गोविन्दराजः**। **चाण्डालस्येति**। चाण्डालम्लेच्छस्त्रियं गत्वा अज्ञानतो भुक्त्वा च तेभ्यश्च प्रतिग्रहं ज्ञानतः कृत्वा अभ्यासे सति पतति। अतश्च पतितप्रायश्चित्तमस्य भवतीत्येतत्पुनरेतदभ्यासतः कृत्वा तत्तुल्यतां याति। अतश्चास्य प्रायश्चित्ताभावः।। १७४।।

(९) **भारुचिः**। चाण्डालोऽन्त्यो येषामायोगवादीनां शूद्रप्रभवानां त इमे चण्डालान्त्याः। तेषां स्त्रीप्रतिषेधः। प्रायश्चित्तं तु वक्ष्यामः। पतनसाम्ययोः को विशेषः। प्रायश्चित्तेन प्रत्याहारः पतने प्रायश्चित्ताभावस्तु साम्ये विज्ञयः।। १७४ ।।

**विप्रदुष्टां स्त्रियं भर्ता निरुन्ध्यादेकवेश्मनि ।।**
**यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम् ।। १७५ ।।**

(१) **मेधातिथिः**। **विशेषेण प्रदुष्टां निरुन्ध्यात्**पत्नीकार्येभ्यो निर्वर्तयेत् 'अर्थस्य संग्रहे चैनाम्' इत्यादिभ्यः। **एकवेश्मनीति** निगडबन्धे कर्तव्या। न स्वैरं भर्तृगृहे विहर्तुं लभेत। तत्र निरुद्धां प्रायश्चित्तं कारयेत्। किं पुनः। **यत्पुंसः परदारेषु** प्रायश्चित्तमुपपातकं ब्राह्मणस्य तत्समानहीनजातीयासु पारदार्यमिति। वर्णान्तराणां तदेव। उत्तमागमने तु द्विगुणं वैश्यस्य त्रिगुणं ब्राह्मण्यां क्षत्रियस्य। तथाऽयं विशेषो द्वे परदारे त्रीणि श्रोत्रियस्येति। शूद्रस्य ब्राह्मणीगमने महापातकप्रायश्चित्तम्। वैश्यस्य क्षत्रियागमने उपपातकं द्विगुणं त्रिगुणम्। केचित्तूत्तमागमने शूद्रस्य ब्राह्मणीवदिच्छन्ति। 'प्रातिलोम्ये वधः पुंसाम्' (याज्ञ० २।२८६) इति लिङ्गदर्शनादेतदुक्तम्। दण्डेष्वपि विशेषो दर्शितः। यथैवोत्तमागमने पुंसां व्यवस्था तथैव स्त्रीणां हीनजातीयपुरुषसंपर्के चेति। दोषेऽपि स्त्रीणामर्धं प्रायश्चित्तम्। 'प्रायश्चित्तार्द्ध-

मर्हन्ति स्त्रियो रोगिण एव च। बालश्चाषोडशाद्वर्षादशीतिपरतः पुमान्।।' तथा दृष्टव्यभिचारायां गमने लघीयः। स्वैरिण्यां वृषल्यामवकीर्णः सचैलस्नानादुदकुंभं दद्याद्ब्राह्मणाय। वैश्यायां चतुर्थकालाहारो ब्राह्मणं भोजयेत्। क्षत्रियायां त्रिरात्रोपोषणं यवाढकं दद्यात्। वैश्यवदित्यपि स्मर्यते। तद्वच्छूद्रभार्यायां द्रष्टव्यम्। ऋतौ वा गच्छतो गर्भमादधतो वा। 'ब्राह्मणक्षत्रियविशां स्त्रियः शूद्रेण संगताः। अप्रजाता विशुध्येयुः प्रायश्चित्तेन नेतरा।।' अथवा या एता न केनचिदूह्यन्ते, वेश्येन चरन्ति, तद्गमनेऽस्ति प्रायश्चित्तं नेति संदेहः। "कुतः संशयः"। दारशब्दस्य संस्कारशब्दत्वात्। असति विवाहे न ता अस्य दारा इति व्यपदेशमर्हन्ति। पारदार्ये च प्रायश्चित्तम्। अतो नास्तीत्यवगच्छामः। यतस्तु 'स्वदारनिरत' इति नियमो विहितोऽतो भवतीति मन्यामहे। "किं पुनरत्र युक्तम्"। अस्तीति। कुतः? नियमस्य विहितत्वात्। 'अकुर्वन्विहितमि'त्यादि, तदतिक्रमे प्रायश्चित्तस्मरणात्। माभून्नामोपपातकम्। न तावता प्रायश्चित्ताभावः प्रायश्चित्तार्थमुपपातकजातिभ्रंशकरादि परिगणितम्। सामान्यं तु निमित्तं सर्वत्राकुर्वन्विहितमित्यादि। उक्तं च प्राक् 'स्वैरिणीत्यादि'। "ननु च मृतभर्तृपक्षेण पितृपक्षेण वा संबद्धैव परदारव्यपदेश्या। अधिकामविहारित्वात् स्वैरिण्यः"। सत्यम्। वेश्यास्वपि स्वातन्त्र्यावलंबनः स्वैरिशब्दो न विरुध्यते। अतश्च तासां सचैलस्नानोदकुंभादिदानम्। तत्र केचिदाहुः। व्रतमेतत्। 'तस्य व्रतं' इत्युपक्रम्य 'व्रतानीमानि धारयेदिति' च यानि विहितानि तानि स्नातकव्रतानि, न सर्वपुरुषधर्मः।। १७५।।

(२) **सर्वज्ञनारायणः। विप्रदुष्टां** विशेषेण महापातकादन्येन प्रायश्चित्तापनोद्यदोषपरपुरुषगमनेन प्रदुष्टां **निरुन्ध्यात्** गृह्यकर्मादिभ्यो निवर्तयेत्। **एकवेश्मनि** स्वनिवासगृहे भूयो व्यभिचारनिरासार्थम्। यत्पुंसस्तत्तदुपाधिविशेषनिबन्धनं परदारेषु गमने व्रतमुक्तं तदेनां चारयेत्। एतच्च सवर्णागमने। उत्तमाधमवर्णगमने तु क्रमादल्पं महच्च प्रायश्चित्तं स्मृत्यन्तरसिद्धं ग्राह्यम्।। १७५।।

(३) **कुल्लूकः।** विशेषेण प्रदुष्टामिच्छया व्यभिचारिणीमित्यर्थः। भर्ता निरुन्ध्यात्पत्नीकार्येभ्यो निवर्त्य निगडबद्धामिवैकगृहे धारयेत् यच्च पुरुषस्य सजातीयपरदारगमने प्रायश्चित्तं तदेवैनां कारयेत्ततश्च स्त्रीणामर्धं प्रदातव्यमिति यद्वसिष्ठादिभिरुक्तं तदनिच्छया व्यभिचारे च कर्तव्यम्।। १७५।।

(४) **राघवानन्दः।** किंच **विप्रेति। विप्रदुष्टाम्**इच्छातो व्यभिचारिणीम्। एके मुख्यान्यकेवला इत्यभिधानादन्य आत्मवेश्मनि। परदारेषु यद्व्रतं सजातीयेषु **एनां** व्यभिचारिणीं तद्व्रतं कारयेत्। तथा च विष्णुः। अविद्यमाने सर्वस्वमित्युपक्रम्य एतदेवव्रतं कुर्युरुपपातकिनो नरा इत्युपसंहृत्य स्त्रीणामर्धं प्रदातव्यमित्याह अतः सर्वस्वार्धं व्रतम्।। १७५।।

(६) **रामचन्द्रः। विप्रदुष्टां** व्यभिचारिणीम्। यद्व्रतं पुंसः परदारेषु तद्व्रतमेनां संचारयेत्।। १७५।।

**[ब्राह्मणक्षत्रियविशां स्त्रियः शूद्रेऽपसङ्गताः।।**
**अप्रजास्ता विशुध्येयुः प्रायश्चित्तेन नेतराः।। १।।]**

(७) मणिरामः। विप्रदुष्टां विशेषेण प्रदुष्टां इच्छया व्यभिचारिणीम् ।। १७५ ।।

(८) गोविन्दराजः। विप्रदुष्टामिति। विप्रदुष्टां स्त्रियं निरून्ध्य प्रायश्चित्तान्तं यावत् स्थापयेत्। यच्च पुंसः समानजातीयपरदारगमने उपपातकप्रायश्चित्तं तदेवैनां कारयेत् ।। ।। १७५ ।।

**सा चेत्पुनः प्रदुष्येत्तु सदृशेनोपमंत्रिता ।।**
**कृच्छ्रं चांद्रायणं चैव तदस्याः पावनं स्मृतम् ।। १७६ ।।**

(१) मेधातिथिः। प्रार्थिता समानजातीयेन पुनः संसर्गे चांद्रायणमुपपातकत्वात्सिद्धम्। गोघ्ननिवृत्त्यर्थं पुनश्चांद्रायणविधानं साकल्यविधानार्थम्। यत्त्वैवमुक्तम्—'माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा। पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा। दुहिता चार्यभार्या च सगोत्रा शरणागता। राज्ञी प्रव्रजिता साध्वी धात्री वर्णोत्तमा च या ।।' अत्र सत्यप्यतिदेशे न तुल्यप्रायश्चित्तता, दण्डविशेषदर्शनात्। तत्र मातर्युक्तमेव। मातृष्वसृप्रभृतीनां दुहित्रन्तानां कृच्छ्राब्दः। अवशिष्टानां चान्द्रायणाभ्यासः। तत्र या उक्तास्ताः सगोत्रा उच्यन्ते यज्जातीयास्तेन व्यपदिश्यन्ते, उत यस्मै दत्तास्तद्गोत्रा इति। उभयेनेत्याह, उभयथालिङ्गदर्शनात्। 'गोत्रं' वंशः पित्रादिरभिजनः, तत्सम्बन्धाच्च पितृष्वसृग्रहणमनर्थकं, सगोत्रा हि सा। अथ येनैकतां गतास्तद्भावमनुभवन्ति, तदा भर्तृगोत्रव्यपदेशार्हाः, तस्मिन् पक्षे पितृव्यस्त्रीग्रहणमनर्थकं भवति हि सा सगोत्रा। नन्वियं कस्येति लिङ्गाभावादुभयोरपि युक्ता। सर्वेषां तु दर्शनं भर्तृगोत्राः 'सगोत्राः'। यत्तु कैश्चिदुच्यते 'श्राद्धविधौ कुर्वन्तु पैत्रिकं गोत्रमिति' तत्तत्रैवास्ति। अथवाऽप्यस्तिवचनात्तथा क्रियेत ।। १७६ ।।

(२) सर्वज्ञनारायणः। सा चेत्पुनर्द्वितीयवारे प्रदुष्येत् सदृशेन सवर्णेन उपमन्त्रिता प्रापिता। एतेनाकामकृतामुपलक्षयति। कृच्छ्रं प्राजापत्यं तथा चान्द्रायणं पूर्वोक्तप्रायश्चित्तकरणान्तरमधिकं कार्यमित्यर्थः ।। १७६ ।।

(३) कुल्लूकः। सा स्त्री सजातीयगमने सकृद्दुष्टा कृतप्रायश्चिता यदि पुनः सजातीयेनाभ्यर्थिता सती तद्गमनं कुर्यात्तदास्याः प्रायश्चित्तं प्राजापत्यं कृच्छ्रचान्द्रायणं च मन्वादिभिः स्मृतम् ।। १७६ ।।

(४) राघवानन्दः। सा कृतप्रायश्चित्तापि। उपयन्त्रिता निरुद्धापि। पुनर्दुष्टा कुर्यात् कृच्छ्रचान्द्रायणे सकृदसकृदपेक्षे ।। १७६ ।।

(५) नन्दनः। सदृशेन समानवर्णेन उपयन्त्रितोपहूता ।। १७६ ।।

(६) रामचन्द्रः। सदृशेन सवर्णेन पुरा सा चेत्पुनः उपयन्त्रिता प्रार्थिता ।। १७६ ।।

(७) मणिरामः। सदृशेनोपयंत्रिता सजातीयेन मैथुनार्थं प्रार्थिता सती पुनश्चेत्प्रदुष्येत् तदा कृच्छ्रं प्राजापत्यं चांद्रायणं च अस्याः पावनं स्मृतम् ।। १७६ ।।

(८) गोविन्दराजः। सेति। सा स्त्री सजातियगमनेन सकृत्प्रदुष्टा कृतप्रायश्चित्ता यदि पुनस्तेनैव सजातिना अभ्यर्थिता सती तद्गमनं कुर्यात् तदा प्राजापत्यं कृच्छ्रं चान्द्रायणं च तस्याः शुद्ध्यर्थं द्वयमपि स्यात्। ।। १७६ ।।

(९) **भारुचिः**। ऋज्वर्थः श्लोकः। एतावांस्तु विशेषः। यत्पुंसः स्त्रीसम्पर्के तदेव तस्या अपि स्त्रियाः पुरुषसंपर्के। तद्यथा यच्छूद्रस्य ब्राह्मणीगमने, तदेव ब्राह्मण्या अपि शूद्रसम्पर्के। एवं सर्वसम्पर्के व्याख्येयम्॥ १७६॥

**यत्करोत्येकरात्रेण वृषलीसेवनाद्द्विजः॥**
**तद्भैक्षभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति॥ १७७॥**

(१) **मेधातिथिः**। **वृषल्यत्र** चण्डाल्यभिप्रेता, महत्त्वात्। द्विरभ्यासे नेदबुद्धिपूर्वं द्रष्टव्यम्। अन्यथा कृच्छ्राब्द एव वा। एकरात्रग्रहणात्। सर्वां रात्रिं शयानस्य तया सह गच्छतश्चैतद्विज्ञेयम्। **सेवनं** संभोगः। वृषलीशब्दो निन्दया प्रयुक्तो न जातिशब्दः। **यत्करोति** यत्पापं जनयति **तत्त्रिभिर्वर्षैर्व्यपोहति** विनाशयति। भैक्षाहारो **जपन्निति** अविशेषचोदनायां भावि आसु परं च नास्तीत्याहुः। अन्ये तु यथाश्रद्धमन्यानि मन्त्रब्राह्मण-वाक्यानि, न तु लौकिकं वाक्यम्। अविशेषेण मन्त्रजपस्य शुद्ध्यर्थं विहितत्वाद् 'कसंहिता-मित्यादि'। यत्तु 'त्रिभिर्मासैः सेवित्वा वृषलीं, शूद्रामेवाचक्षते, तदप्ययुक्तम्। शूद्राविवाह-स्याविहितत्वात्, स्वैरिण्याश्च लघुप्रायश्चित्तरोपदेशादन्यस्याश्चोपपातकत्वाद्गुरुतरमिद-मयुक्तम्॥ १७७॥

(२) **सर्वज्ञनारायणः**। यत्करोति पापम्। **वृषली** शूद्रा शूद्रायाः सेवने द्विज इति पुराणे वसिष्ठेनोक्तत्वाच्च। अत्र च सेवमान इत्यत्रोत्पन्नगुणं गर्भाधानकारणं मैथुनमुक्तं वृषलीमभिप्रजातस्त्रीणि वर्षाणीति स्मृत्यन्तरात्। भैक्षभुक् चतुर्थकाल इति स्मृत्यन्तरात्। जपन् गायत्रीम्॥ १७७॥

(३) **कुल्लूकः**। **वृषल्यत्र** चण्डाली प्रायश्चित्तगौरवात् चण्डालीगमने यदेकरात्रेण ब्राह्मणः पापमर्जयति **तद्भैक्षाशी** नित्यं सावित्र्यादिकं जपन् त्रिभिर्वर्षैरपनुदति। तथा चापस्तम्बः यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानः चतुर्थकाल उदक आत्म-जापी भैक्षचारी त्रिभिर्वर्षैस्तद्व्यपोहति पापम्। मेधातिथिस्तु इत्थमेव व्याख्यातवान्। गोविन्दराजस्तु अक्रमपरिणीतशूद्रागमनप्रायश्चित्तमिदमाह॥ १७७॥

(४) **राघवानन्दः**। किंचान्यदपि। **वृषली** गोघ्नी चाण्डाली प्रायश्चित्तगौर-वात्। जपन् सावित्रीम्। तथा चापस्तम्बः। यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानः अम्भोधिवासे न चतुर्थभक्तस्त्रिभिर्वर्षैस्तदपोहन्ति पापमिति। गोविन्दराजेन तु अक्रमपरिणीतशूद्रागमनविषयकमुक्तं वृषलीफेनपीतस्येत्याद्यपि तथैव व्याख्यातम्॥ १७७॥

(५) **नन्दनः**। यत्पापं आप्या अब्दैवत्य आपोहिष्ठेत्यादिकाः॥ १७७॥

(६) **रामचन्द्रः**। वृषलीसेवनं गर्भजनकं तत् भैक्ष्यभुक् चतुर्थकाले भिक्षान्नभुक् गायत्रीं जपन्नित्यम्॥ १७७॥

(७) **मणिरामः**। **वृषली** अत्र चांडाली। प्रायश्चित्तगौरवात्। चांडालीगमनेन

यत् एकरात्रेणे द्विजः ब्राह्मणः पापमर्जयति तत् पापं भैक्षभुक् भिक्षाशी भूत्वा सावित्र्यादिकं जपन् त्रिभिर्वर्षैः व्यपोहति ।। १७७ ।।

(८) **गोविन्दराजः । यदिति ।** शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् । शूद्रावेदी पतत्यत्रेरिति निन्दातिशयश्रवणादकमोढाशूद्रासेवनेन । यदेकरात्रेण पापमर्जयति तद्भैक्षाशी नित्यं जपं कुर्वन् स्त्रिभिर्वर्षैरपनुदति । यत्तु चाण्डाल्यत्र वृषलीति व्याचक्षते तदसत् अप्रसिद्धेस्तथा चापस्तंबोऽनार्याशयने बिभ्रदित्युपक्रम्य यदेकरात्रेण करोति पापं कृष्णवर्णं ब्राह्मणः सेवमानश्चतुर्थकाल उदकाभ्यधायैस्त्रिभिर्वर्षैः तदपहन्ति पापमित्याह ।। १७७ ।।

(९) **भारुचि ।** चण्डालान्त्यस्त्रीगमने प्रायश्चित्तस्याविधानात्, शूद्रायाः वृषल्याः पक्षे गम्यत्वादनधिकृतत्वाच्च, चण्डालान्त्यस्त्रीगमनमिदं प्रायश्चित्तं द्रष्टव्यम्, अधिकृतत्वात्तस्या इति । अपरे त्वक्रोधां शूद्रां वृषलीमाहुः । पाठान्तरं च कुर्वन्ति 'त्रिभिर्मासैरि'ति । तत्पुनर्न न्यायमनधिकृतत्वात्तस्या इति अपरे त्वक्रमो वेति च विचारणीयम् ।। १७७ ।।

**एषा पापकृतामुक्ता चतुर्णामपि निष्कृतिः ।।**
**पतितैः सम्प्रयुक्तानामिमाः श्रृणुत निष्कृतीः ।। १७८ ।।**

(१) **मेधातिथिः ।** ऋज्वर्थः श्लोकः ।। १७८ ।।

(२) **सर्वज्ञनारायणः ।** चतुर्णामपीत्यपि शब्द उपपातकसंग्रहाय । निष्कृतीर्निष्कृतय उक्ताः ।। १७८ ।।

(३) **कुल्लूकः ।** इयं हिंसाऽभक्ष्यभक्षणस्तेयागम्यागमनकारिणां चतुर्णामपि पापकृतां विशुद्धिरुक्ता इदानीं साक्षात्पापकृद्भिः सह संसर्गिणामिमा वक्ष्यमाणाः संशुद्धीः श्रृणुत ।। १७८ ।।

(४) **राघवानन्दः ।** अगम्यागमनप्रायश्चित्तमुपसंहरन्संसर्गजप्रायश्चित्तमाह **एषेति** त्रिभिः । निष्कृतिरुक्ता । संप्रयुक्तानां यौनादिसबन्धिनां निष्कृतीः श्रृणुतेत्यन्वयः । तत्र द्वितीयेन पातित्यकारणं ज्ञापयन् संबन्धानुवदनं तृतीयेन प्रायश्चित्तव्यवस्थितिरिति भेदः ।। १७८ ।।

(५) **नन्दनः ।** चतुर्णां वर्णानां विप्रादीनां पतितैरेतैश्चतुर्भिः संसर्गिणां **इमा** वक्ष्यमाणाः ।। १७८ ।।

(६) **रामचन्द्रः । एषा** निष्कृतिः चतुर्णां वर्णानां **पापकृतां** उक्ता । पतितैः सह युक्तानां **इमाः** वक्ष्यमाणलक्षणा निष्कृतीः श्रृणुत ।। १७८ ।।

(७) **मणिरामः ।** पापकृतां हिंसा अभक्ष्यभक्षणस्तेय अगम्यागमनकारिणां चतुर्णामप्येषा **निष्कृतिः** शुद्धिः उक्ता । इदानीं **पतितैः** साक्षात्पापकृद्भिः संप्रयुक्तानां संसर्गिणां **इमाः** वक्ष्यमाणाः संशुद्धीः शृणुत ।। १७८ ।।

(८) **गोविन्दराजः । एषेति ।** हिंसा अभक्ष्यभक्षणस्तेयागमनकारिणां चतुर्णामपि महापातकिनामितरेषां चैषा संशुद्धिरुक्ता । इदानीं पतितसयोगिनां **चेमा** वक्ष्यमाणाः संशुद्धीः श्रृणुत ।। १७८ ।।

**संवत्सरेण पतति पतितेन सहाचरन् ।।**
**याजनाध्यापनाद्यौनान्न तु यानासनाशनात् ।। १७९ ।।**

(१) **मेधातिथिः ।** द्विजातिकर्मभ्यो हानिः पतत्यर्थः । **पतति** भ्रश्यति, हीयतेऽधिकारात् । **पतिताश्चत्वारो** ब्राह्मणादयः । तैः **सहाचरन् संवत्सरेण पतितो भवति** तत्तुल्यो भवतीत्यर्थः । किमाचरन् । **यानासनाशनात् ।** संलापगात्रस्पर्शादिना सह गमनम् । 'यान'मासनं तादृशमेव । एकस्यां शय्यायामेकस्मिन्नासने, एकपात्रे भोजनम् । **याजनाध्यापनाद्यौनान्न** त्विति विच्छेदः । किं याजनादिभिर्नैव पातित्यमथार्वाक्संवत्सरादूर्ध्वं वेत्येतद्वक्तव्यम् । स्मृत्यन्तरदर्शनादिभिः सद्यः । **याजनाध्यापन**मिति द्वितीयान्तः पाठो युक्तः । आचरन्निति शत्रा हेत्वर्थस्य गमितत्वात् ।। १७९ ।।

(२) **सर्वज्ञनारायणः ।** **संवत्सरेण** संवत्सरकृतेन सहाचरणेनेत्यर्थः । **पतति** पातकितुल्यो भवति । **सहाचरन्** संसर्गेण प्रवर्तमानः । **याजनाध्यापनादिति** तं याजयति तेन वा याज्यते एवं तमध्यापयति तेन वाध्याप्यते । तथा पतितया स्त्रिया पतितेन पुंसा वा सह मैथुनेन पुमान् स्त्री वा संगृह्यत इत्यर्थः । केचित्तु ब्राह्मणयौनांश्च संबन्धानिति विवाहेऽपि **यौन**पदप्रयोगात्तस्याप्यत्र यौनपदेन संग्रहमिच्छन्ति तत्र च संवत्सरेणेति तत्कृत्वा **अकृतप्रायश्चित्तस्य** वासेनावस्थानेनेत्यर्थः । न तु यानेति । सहयानसहासनाभ्यां सहाशनेन **चैकपंक्तिभोजनेन** संवत्सरं क्रियमाणेन **न पतति** न तत्तुल्यो भवति किंतु चतुरोवत्सरांस्तत्करणेनैवेत्यर्थः । चतुर्वत्सरनियमश्च बलाद्गृहीतो म्लेच्छाद्यैरित्यादिदेवलस्मृतिदर्शनादुन्नेयः ।। १७९ ।।

(३) **कुल्लूकः ।** पतितेन सह संसर्गमाचरन्नेकयानगमन एकासनोपवेशन एकपङ्क्तिभोजनरूपान्संसर्गानाचरन्संवत्सरेण पतति ।। न तु याजनाध्यापनाद्यौनात्संवत्सरेण पतति किन्तु सद्य एवेत्यर्थः । **अध्यापनम**त्रोपनयनपूर्वकं सावित्रीश्रावणम् । याजनादीनां च सद्यः पातित्यमाह देवलः ।। **याजनं** योनिसंबन्धं स्वाध्यायं सहभोजनम् । कृत्वा सद्यः पतन्त्येते पतितेन न संशयः ।। विष्णुः ।। आसंवत्सरात्पतति पतितेन सहाचरन् । सहयानासनाभ्यासाद्यौनात्तु सद्य एव हि ।। बौधायनः ।। संवत्सरेण पतति पतितेन सहाचरन् । याजनाध्यापनाद्यौनात्सद्यो न शयनासनादिति ।। गोविन्दराजस्तु याजनादीनां त्रयाणां संवत्सरेण पातित्यहेतुत्वं सहासनादीनां लघुत्वान्न संवत्सरेण किंतु तस्मादूर्ध्वमपीति व्याचष्टे । अस्मदीयमनुव्याख्या मुनिव्याख्यानुसारिणीं नैनां गोविन्दराजस्य कल्पनामनुरुन्ध्महे ।। १७९ ।।

(४) **राघवानन्दः ।** ननु संवत्सरा [न्तरे पतति । तदाहतुर्देवलबौधाय नौ । **याजनं** योनिसंबन्धं स्वाध्यायं सहभोजनम् । कृत्वा सद्यः पतन्त्येते पतितेन समं नरा इति ।] अत्र सहभोजनमेकपात्राभ्यासपरम् । एतत्समुदितानां प्रत्यहमभ्यासे । मनूक्तं त्वसमुदितान्तरायपरम् । अन्यथा मनुविरोधे सर्वाः स्मृतयोऽप्रमाणम् ।। १७९ ।।

(५) **नन्दनः ।** याजनादीनि संवत्सरमाचरन् पतति ।। १७९ ।।

(६) **रामचन्द्रः ।** पतितेन सह यानाशनानि कुर्वन् संवत्सरेण पतितो भवति । याजनाध्यापनात् यौनात् विवाहसंबन्धात् संवत्सरेण न पतति किंतु सद्य एव पतति ।। १७९ ।।

(७) **मणिरामः**। पतितेन सह आचरन् एकयानगमन-एकासनोपवेशन-एकपंक्तिभोजन-रूपान् संसर्गान् **आचरन्** कुर्वन् संवत्सरेण पतति नतु याजनाध्यापनात् यौनात् संवत्सरेण पतति किंतु सद्य एव पतितो भवतीत्यर्थः ॥ तथा च देवलः। याजनं योनिसंबंधः स्वाध्यायं सह-भोजनम्। कृत्वा सद्यः पतंत्येते पतितेन न संशयः ॥ १७९ ॥

(८) **गोविन्दराजः**। **संवत्सरेणे**ति। महापातककारिणं याजयेद्यस्तेन वा याजि-तस्तमध्यापयेस्तेन वाध्यापितस्तस्मै कन्यां ददंस्तस्माद्दत्तामुद्वहन् संवत्सरेण पतति। द्विजाति-कर्मभ्यो हानिः पतनमिति गौतमस्मरणात् अदृष्टार्थकामाधिकाराद्धीयते। सहगमनभोजना-वस्थानानि पुनः पतितेन सह कुर्वन्संवत्सरेण पतति अपि तु तत उर्ध्वं तेषां लघुत्वात्। ।१७९ ॥

(९) **भारुचिः**। यानाशनासनैर्न **संवत्सरेण**, किं तर्हि सद्य एव! ऊर्ध्वं तस्मात् कालाद-र्वाग्वा संवत्सराद् यानाशनासनमात्रेणेति सामर्थ्यादिदं वचनीयम्। अथवास्यान्योऽर्थः स्मृत्यन्तरादुच्यते। व्यवहितकल्पनया **संवत्सरेण पतति यानाशनासनात्। न तु याजनाध्या-पनाद्यौनात्**; किं तर्हि एभिर्याजनादिभिः सद्यः पतति। स्मृत्यन्तरदर्शनात्। सम्पर्कसादृश्येन च पतनं कल्पयितव्यम्। तदीयं न तस्य प्रायश्चितम्। तथा च दर्शयति ॥ १७९ ॥

**यो येन पतितेनैषां संसर्गं याति मानवः।**
**स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये ॥१८०॥**

(१) **मेधातिथिः**। । यस्य पतितस्य यद्विहितं तत्प्रायश्चित्तं कुर्यात्तत्संसर्गस्य शुद्धये।

**एषामिति** निर्धारणे षष्ठी। **एषां** पतितानां **येन पतितेन यः संसर्गं याति** पूर्वोक्तसंसर्गं गच्छति **स तस्यैव** पतितस्य यद्विहितं प्रायश्चित्तं **तत्कुर्यात्**। तत्संसर्गाद्यो दोष उत्पन्नस्त**द्विशुद्धये** तद्विनाशाय। अनुवादोऽयं श्लोकपूरणः। अथ यदिदमुच्यते पतितात्याग्यपतितात्यागीत्या-दिनिन्दितकर्माभ्यासेन पतनं तत्र यदेतत्पतितत्ववचनं तत्किमुपदिश्यत आहोस्विदतिदिश्यते। यदि तावदुपदिश्यते पंच पातकानीति प्रसिद्धेर्मूलं वाच्यम्। अथ पंचानामौपदेशिकमन्ये-षामातिदेशिकैर्व्यवहारे भेदे न कश्चिदर्थः। तान्येव प्रायश्चित्तानि त एव धर्मा यस्मा उप-दिश्यन्ते, अतिदेशेन व्यवहारेण कोऽर्थः। अथोच्यते। "न व्यवहाराः प्रयोजन एव भिद्यन्ते अपि त्वन्यतोऽपि निमित्तात्, इह चास्ति प्रमाणतो भेदः। यत्र पतितत्वमभिधाय द्विजातिक-र्मभ्यो हानिः 'पतितस्योदकं कार्यमि'त्याद्यभिधीयते सकृत्स्वधर्माभिधाना'दुपदेशः', यत्र तु तत्संबन्धवचनान्नाम्ना लिङ्गसंयोगाद्वा तद्धर्मप्राप्तिः सो'ऽतिदेशः'। सूर्याग्निपदयोर्न हि सौर्ये कश्चिद्धर्मः श्रुतो येनातिदेशे सत्ययं विशेषो लभ्य इति निश्चीयते"। तदसत्। यतः सूर्या-दिशब्दस्यैव प्रभुता, अकृतत्वाद्वेदस्य। अयं पौरुषेयो ग्रन्थः। पुरुषश्चासति भेदे किमिति व्यवहारं नवं प्रवर्तयति। या तु प्रत्यक्षानुमानाभ्यां बाधकाभावात्सिद्धिः सात्र कदाचिदु-पलभ्यते। योऽप्यभ्यासः सोऽपि द्विरावृत्तिस्तत्र ततः प्रवृत्तिः आवृत्तिशतेष्वभ्यासरूपतयैक एवेति। लोके तावदावृत्तिमात्रमभ्यासः। तत्र योऽपि द्विरपवादः योऽपि शतकृत्वः तौ द्वावपि प्रायश्चित्ते समौ स्याताम्। निन्दितं च कर्म प्रतिषिद्धम्। तत्र योऽपि द्विर्दिवा सुप्या-

योऽपि गा असकृद्धन्यात्तत्र निन्दितकर्माभ्यासेऽविशेषेण पतनप्राप्तिः। तस्माद्विचिन्त्यमेतत्। किमत्र चिन्त्यते। पंचानां तावत्पातकित्वं सर्वस्मृतिकारैरुच्यते, अन्येषां केषांचित्तत्समत्वम्। तदुभयमपि बाधितुं तत्र विशेषो नास्तीति संकल्पयिष्यते 'शक्तिं चावेक्ष्य पापं च' इति। न हि तस्य तत्सदृशस्येति वा एकत्वं युक्तं, गार्गवधस्येव। अथ केषांचिद्धर्माणां भेदः केषांचिदेकत्वे सादृश्यं भवति। तस्मात्तत्समानां पतितत्वं भवति। अतः किंचिदूनं तत्समानां पतितप्रायश्चित्तम्। अधिकारापगमे केचिद्विशेषमाहुः। श्रौतेऽवधिकारो निवर्तते साक्षात्, न स्मार्तेषु। यदप्युक्तं "द्विरावृत्तौ शतक्रतवश्च भेदो न स्यादिति" तत्राप्यभ्यासानां भेदः। कथं तुल्यप्रत्यवायता। यदपि दिवा स्वप्नगोवधयोर्निन्दितत्वाविशेषात्तदभ्यासे तुल्यं पतितत्वमिति, कथमविशेषो निंदायाः, यत्रार्थवादेषु प्रत्यवायविशेषः श्रूयते, प्रायश्चित्तबहुत्वं बाहुल्येऽपि प्रतिषेधे। तत्रायं विधिः। 'निन्दितकर्माभ्यासे पतनमिति' न प्रतिषिद्धमात्रे, तथा च 'पूर्णेवानसीति'। सत्यपि निन्दितकर्माभ्यासे नैव पातित्यमस्ति ॥ १८० ॥

(२) **सर्वज्ञनारायणः**। संवत्सरादिना तत्साम्यापत्तौ प्रायश्चित्तमाह **यो येनेति**। **येन** यत्पातकवता **संसर्ग**स्तत्साम्यापत्तिहेतुकालपर्यन्तं व्रतं दानद्वादशवार्षिकादि न तु मरणमपि। अतः कामकृते संसर्गे येन यत्पातकिनापि संसृज्यते तत्तुल्यो भवति। अकामतोऽर्धम् ॥१८०॥

(३) **कुल्लूकः**। **पतित**शब्दोऽयं पापकारिवचनः सकलपापिनामविशेषपाठात् **एषां** पतितानां मध्ये **यो येन** पापकारिणा सह पूर्वोक्तं संसर्गं करोति स तस्यैव **व्रत**रूपं प्रायश्चित्तं कुर्यान्न तु मरणान्तिकमित्यभिहितं तदपि व्रतं संसर्गिणा क्रियमाणं ब्रह्महा द्वादशसमा इत्यादिकं पादहीनं कर्तव्यम्। तथा च व्यासः। यो येन संसृजेद्वर्षं सोऽपि तत्समतामियात् ॥ पादन्यूनं चरेत्सोऽपि तस्य तस्य व्रतं द्विजः ॥ १८० ॥

(४) **राघवानन्दः**। **तस्यैव** ब्रह्महत्यादेः। **व्रतं** द्वादशवार्षिकादिकम् ॥१८०॥

(५) **नन्दनः**। **तेषां** पातकिनां मध्ये येन **तस्य** पतितस्यैव व्रतप्रायश्चित्तम् ॥१८०॥

(६) **रामचन्द्रः**। **एषां** पतितानां मध्ये येन पतितेन संसर्गमानयति **सः** संसर्गी **तस्यैव** पतितस्य व्रतं कुर्यात् तस्य संसर्गस्य शुद्धये ॥ १८० ॥

(७) **मणिरामः**। **एषां** पतितानां मध्ये **यः** मानवो **येन** पतितेन न्यायकारिणा सह संसर्गं याति सः तत्संसर्गविशुद्धये तस्यैव व्रतं कुर्यात् ॥ १८० ॥

(८) **गोविन्दराजः**। **य** इति। एषां ब्रह्महाप्रभृतीनां चतुर्णां पतितानां अध्यापनादि पतितेन सह पूर्ववाक्योक्तं संसर्गं यो मनुष्यः करोति स तस्य प्रायश्चित्तमुक्तं ब्रह्महा द्वादशसमा इत्यादि तदेतत्संपर्कपापजनितं कुर्यात् ॥ १८० ॥

(९) **भारुचिः**। इदमपि च प्रायश्चित्तं महापातकिभिरेव सम्बन्धे स्यात्, गोघातादिसम्बन्धे तु सामान्यविहितं कल्प्यम् ॥१८०॥

**पतितस्योदकं कार्यं सपिण्डैर्बान्धवैर्बहिः ॥**
**निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ॥ १८१ ॥**

(१) **मेधातिथिः**। जीवत एव पतितस्य प्रायश्चित्तमनिच्छतो घटोदकदानं मृतस्येव कर्तव्यमुच्यते। **सपिण्डाः** सप्तमपुरुषावधयः एकवंश्याः। ततोऽन्ये **बान्धवाः** सगोत्राश्च। **निन्दितेऽहनि** चतुर्दश्यादौ। **सायाह्ने**ऽस्तमिते रवौ। **ज्ञात्यृत्विक्**। ज्ञात्यादयः कर्तॄणां, तथा पतितस्य ॥ १८१ ॥

(२) **सर्वज्ञनारायणः**। **पतितस्योदकं** पातित्येन संबन्धात्प्रच्युतस्य पृथक्करणार्थं वैधं कर्म। **बान्धवैः सपिण्डैः** संबन्धिभिः। **निन्दिते** विष्टयादौ **सायाह्ने**ऽपराह्णे। **ज्ञातिः** समानोदकादिः **गुरु**रुपाध्यायादिः पतितस्य **तत्संनिधौ** तैः सह संभूयेत्यर्थः ॥ १८१ ॥

(३) **कुल्लूकः**। महापातकिनो जीवत एव प्रेतस्योदकक्रियावक्ष्यमाणरीत्या सपिण्डैः समानोदकैश्च ग्रामाद्बहिर्गत्वा ज्ञात्यृत्विक्गुरुसन्निधाने रिक्तायां नवम्यां तिथौ दिनान्ते कर्तव्या ॥ १८१ ॥

(४) **राघवानन्दः**। तत्संसर्गभीरूणां कर्तव्यमाह **पतितस्ये**ति चतुर्भिः। जीवत एव संबन्धत्यागात्प्रेतस्य। **निन्दिते** नवम्यादितिथौ। **सपिण्डैः** पुत्रादिभिः ज्ञात्यादिसन्निधौ ॥ १८१ ॥

(५) **नन्दनः**। अथ पतितेषु सपिण्डैः कर्तव्यमाह **पतितस्ये**ति ॥ १८१ ॥

(६) **रामचन्द्रः**। **सपिण्डा** एकवंश्याः ततोऽन्ये बान्धवाः **निन्दिते** वृष्ट्यादियुक्ते पतितस्य निराकरणार्थं उदकं कार्यं **ऋत्विग्गुरुसंनिधौ** ॥ १८१ ॥

(७) **मणिरामः**। **पतितस्य** महापातकिनः जीवत एव **उदकं** प्रेतस्योदकक्रिया। वक्ष्यमाणरीत्या ॥ १८१ ॥

(८) **गोविन्दराजः**। **पतितस्योदक**मिति महापातकिनो जीवतः स एव प्रेतस्यैवोदकक्रियां वक्ष्यमाणनीत्या सपिण्डैः समानोदकैः समेत्य ज्ञात्यृत्विग्गुरुसंनिधाने रिक्तायां नवम्यादौ तिथौ दिनान्ते कर्तव्या ॥ १८१ ॥

(९) **भारुचिः**। जीवत एवेत्यर्थः तस्यायं विधिरुच्यते ॥ १८१ ॥

**दासी घटमपां पूर्णं पर्यस्येत्प्रेतवत्पदा ॥**
**अहोरात्रमुपासीरन्नशौचं बान्धवैः सह ॥ १८२ ॥**

(१) **मेधातिथिः**। **प्रेतवदिति**। कर्तव्यतोपदेशोऽयम्। **दासी** प्रेष्योदकुंभम्। **पदा** पादेन। **पर्यस्येत्** क्षिपेदिदममुष्मा इति। क्षिप्ते तस्मि**न्नहोरात्रमाशौचं** युक्तम्। **बान्धवैः सह** तथासीरन्नेकत्र स्थाने निवसेयुस्तदहः। दासीग्रहणात् स्वयंकरणं निषेधति। "यद्येवं ज्ञात्यृत्विग्गुरुसन्निधावित्यस्वयंकरणपक्षे ज्ञातीनां सपिण्डानां च को विशेषो येनोच्यत एतेषां संनिधान एतेन कर्तव्यमिति। यावता सर्व एव सन्निधानमात्रेणोपकुर्वन्ति। तस्यासन्निपात्योपकारत्वात्"। नैतदेवम्। सपिण्डादयः प्रयोजकत्वेन कर्तारः। ज्ञात्यादयस्तु सन्निधाप्यन्ते केवलमदृष्टायेति ॥ १८२ ॥

(२) **सर्वज्ञनारायणः**। घटं पुराणं अग्रे नवमिति वक्ष्यमाणत्वात्। **अयामशुद्धानाम्**। **पर्यस्येदावर्तयेत्**। **प्रेत्यवत्** प्रेतार्हजलदानवत् दक्षिणामुखत्वादिधर्मेण। प्रेतवदिति क्वचित्पाठः। तदा सव्येन स्मृत्यन्तरात्। **अशौचं** कर्मानधिकारम्। **बान्धवैः सहेत्यत्र** सपिण्डानामन्येषां च तुल्याशौचार्थम्॥ ५८२॥

(३) **कुल्लूकः**। सपिण्डसमानोदकप्रयुक्ता दास्युदकपूर्णं घटं प्रेतवदिति दक्षिणाभिमुखीभूय पादेन क्षिपेत् यथा स निरुदको भवति तदनु ते सपिण्डाः समानोदकैः सहाहोरात्रमशौचमाचरेयुः॥१८२॥

(४) **राघवानन्दः**। **पर्यवस्येत्** पदा वामेन क्षिपेत्। **प्रेतवद्**दक्षिणाभिमुखा भूत्वेत्यर्थः। **उपासीरन्** कुर्युः। **बान्धवै**र्मातुलादिभिः॥१८२॥

(५) **नन्दनः**। **प्रेतवत्**प्रेतस्येव अनेन दक्षिणापवर्गादिकं गृह्यते **उपासीरन्**नङ्गीकुर्युः **बान्धवा** ज्ञातयः॥१८२॥

(६) **रामचन्द्रः**। अपां पूर्णं दासी घटं दास्याः शिरसि घटं आदाय **प्रेतवत्** प्रेतार्हजलदानवत् **पर्यस्येत्** आवर्जयेत्। सा दासी वेगेन ग्रामाद्बहिर्गत्वा तत्कुंभस्य जलेन तर्पणं बान्धवैः कार्यम्। योगीश्वरः॥ दासीकुम्भं बहिर्ग्रामान्निनयेरन्स्वबान्धवाः। पतितस्य बहिः कुर्युः सर्वकार्येषु चैव तम्॥ बान्धवैः सहाहोरात्रमासीरन्॥१८२॥

(७) **मणिरामः**। उदककरणप्रकारमाह॥ **दासीति**॥ सपिंडसमानोदकैः प्रेरिता दासी अपां संपूर्णघटं **प्रेतवत्** दक्षिणाभिमुखीभूय **पदा** चरणेन **पर्यस्येत्** क्षिपेत्। यथा तत् घटं निरुदकं भवति। तदनंतरं ते सपिंडाः बांधवैः समानोदकैः सह अहोरात्रं आशौचं **उपासीरन्** चरेयुः॥१८२॥

(८) **गोविन्दराजः**। **दासीति**। सपिण्डसमानोदकप्रयुक्ता दास्युदकपूर्णं घटममुमनुदकं करोमीति नामग्राहमिति गौतमस्मरणादेवमुक्त्वा **प्रेतस्येव** दक्षिणमुखं पादेन प्रक्षिपेत्तदनु च ते सपिण्डाः समानोदकैः सह शौचमाश्रयेयुः॥१८२॥

**निवर्तेरंश्च तस्मात्तु संभाषणसहासने॥**
**दायाद्यस्य प्रदानं च यात्रा चैव हि लौकिकी॥ १८३॥**

(१) **मेधातिथिः**। कृतोदके यथा वर्तितव्यं तथेदानीमुच्यते। **संभाषणमितरेतर**मुक्तिप्रत्युक्तिरूपो व्यवहारः। **दायाद्यं** धनं तदपि तस्मै न दातव्यम्। **लौकिकी यात्रा** संगतयोः कुशलप्रश्नादिका। विवाहादौ नैमित्ते गृहानयनं भोजनं चेत्येवमादि ( "ननु च संभाषणप्रतिषेधादेवैषु निवृत्तिः सिद्धैव"। अभ्युत्थानासनत्यागस्यापि निवृत्तिरूपस्य संभवात्। संभाषणं तु शब्दात्मकमेव॥ १८३॥

(२) **सर्वज्ञनारायणः**। **निवर्तेरन्** निवर्तयेयुः। न कुर्वीतेति क्वचित्पाठः। **लौकिकीं यात्रां** तद्गृहगमनादि॥ १८३॥

(३) **कुल्लूकः। तस्मात्पतितात्सपिण्डादीनां** संभाषणमेकासनोपवेशनं च तस्मै ऋक्थप्रदानं सांवत्सरिकादौ निमन्त्रणादिरूपो लोकव्यवहार एतानि निवर्तेरन् ॥ १८३ ॥

(४) **राघवानन्दः। दायाद्यस्यांशस्य।** लौकिकी गुरूं परिचरेदित्याद्युक्ता ॥ १८३ ॥

(५) **नन्दनः। तस्मात्कृतोदकात्पतितात्** आद्यशब्देन प्रेतपिण्डादिकमुच्यते ॥ १८३ ॥

(७) **मणिरामः। तस्मात्** पतितात् सपिंडादयः संभाषणादिकं निवर्त्तेरन्। लौकिकी यात्रा संवत्सरादौ निमंत्रादि रूपा ॥ १८३ ॥

(८) **गोविन्दराजः। निवर्तेरन्निति।** दायाद्यस्य प्रदानं च यात्रामेव च लौकिकीम्। तेन च पतितेन सह संभाषणसहावस्थाने न कर्तव्ये न च तस्मै रिक्थदेयं नाप्युत्सवादौ निमन्त्रणादि तस्य लोकव्यवहारः कार्यः ॥ १८३ ॥

**ज्येष्ठता च निवर्तेत ज्येष्ठावाप्यं च यद्वसु ॥**
**ज्येष्ठांशं प्राप्नुयाच्चास्य यवीयान्गुणतोऽधिकः ॥ १८४ ॥**

(१) **मेधातिथिः। ज्येष्ठावाप्यं च यद्वसु।** अत्रापि चोद्यते। "दायाद्यदाननिषेधाज्ज्येष्ठप्राप्यवसुनो धनस्य सिद्ध एव निषेधः"। केचिदाहुर्गुणतोऽधिकस्य यवीयसस्तदंशप्राप्त्यर्थमनूद्यते। अन्ये तु मन्यन्ते। दायाद्यशब्देन धनमात्रमुच्यते नान्वयागतमेव। तथा चाभिधानकोशे 'दायाद्यं धनमिष्यत' इति स्मर्यते। अतो यत्तस्मात्केनचिदृणत्वेन गृहीतं तेनापि तन्न दातव्यम्। किं तर्हि कर्तव्यम्? पुत्रभ्रात्रादिरिक्थहारिणामर्पणीयम्। अन्ये तु मन्यन्ते अविभक्तधनानां दायाद्यधननिषेधः, कृते तु विभाग उद्धारस्यैव ज्येष्ठांशस्यैवोच्छेदः। सत्स्वपि पुत्रेषूद्धारं वर्जयित्वाऽन्यस्य पुत्रा एवेशते ॥ १८४ ॥

(२) **सर्वज्ञनारायणः।** ज्येष्ठावाप्यस्याप्राप्तनिषेधानुवादस्तदव्यवहितकनिष्ठस्य तत्प्राप्त्यर्थः ॥ १८४ ॥

(३) **कुल्लूकः।** ज्येष्ठस्य यत्प्रत्युत्थानादिकं कार्यं तत्तस्य न कार्यं ज्येष्ठलभ्यं च तस्य विंशत्युद्धारादिकं धनं न देयम्। यद्यपि ऋक्थप्रदानप्रतिषेधादेवाप्युद्धारप्रतिषेधः सिद्धस्तथापि यवीयसस्तत्प्राप्त्यर्थमनूद्यते तस्यैव ज्येष्ठस्य संबन्धिधनं सोद्धारांशं तदनुजो गुणाधिको लभते ॥ १८४ ॥

(४) **राघवानन्दः।** ज्येष्ठावाप्यं तमुद्धारमेतदनुवदन् मनुजस्य ज्येष्ठत्वविधानार्थम् ॥ १८४ ॥

(६) **रामचन्द्रः।** च पुनः ज्येष्ठावाप्यं च यद्वस्तु तत्प्राप्नोति ॥ १८४ ॥

(७) **मणिरामः। ज्येष्ठावाप्यं** ज्येष्ठलभ्यमुद्धारादिधनम् ॥ १८४ ॥

(८) **गोविन्दराजः। ज्येष्ठतेति।** ज्येष्ठकार्यं प्रत्युत्थानादि तस्य न कार्यं ज्येष्ठलभ्यं चोद्धारधनं नास्य देयम्। एतच्च पूर्वसिद्धमेव यवीयसः प्राप्त्यर्थमनूद्यते। तस्य च ज्येष्ठसंबन्धिनमुद्धारांशं तदनुजो गणाधिको लभते ॥ १८४ ॥

**प्रायश्चित्ते तु चरिते पूर्णकुम्भमपां नवम् ।।**
**तेनैव सार्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये ।। १८५ ।।**

(१) **मेधातिथिः**। कृतप्रायश्चित्तस्येदानीमुदकक्रियोच्यते। **तेनैव सार्धं स्नात्वा जलाशये** पुण्यस्रवन्त्यां महाह्रदे वा प्रभासमानसादौ वा तीर्थविशेषे कृतस्नानोऽपां **कुंभं नवं** स्वयं प्रास्येदुः। नवकुंभग्रहणाद्दासीग्रहणाच्चात्र पूर्वत्रोपयुक्तस्य क्रियासु कुंभस्य ग्रहणम्। उदकेन पूरयित्वा हरणमुक्तम् ।। १८५ ।।

(२) **सर्वज्ञनारायणः**। पतितसर्वाकारविधिमाह **प्रायश्चित्ते** त्विति। **तेनैव** कृतप्रायश्चित्तेन। जलाशये स्नात्वा **प्रास्येयुः** क्षिपेयुः ।। १८५ ।।

(३) कुल्लूकः। कृते पुनः पतितेन प्रायश्चित्ते सपिण्डसमानोदकास्तेनैव कृतप्रायश्चित्तेन सह पवित्रे जलाधारे स्नात्वा जलपूर्णं नवं घटं क्षिपेयुः। इह नवघटग्रहणाद्दासीघटमित्यत्र कृतोपयोगिघटः प्रतीयते ।। १८५ ।।

(४) **राघवानन्दः**। कृतप्रायश्चित्तं प्रति कर्तव्यमाह **प्रायश्चित्तेति**। **प्रास्येयुः** क्षिपेयुः पुत्राद्याः। अत्र **नवमिति** विशेषणात्पूर्वं पुरातनं ज्ञेयम् ।। १८५ ।।

(५) **नन्दनः**। **तेन** चीर्णप्रायश्चित्तेन प्रास्येयुः ज्ञातयः ।। १८५ ।।

(६) **रामचन्द्रः**। प्रायश्चित्ते **चरिते** कृते पुण्ये जलाशये स्नात्वा अपां पूर्णं कुम्भं नवं आदाय **तेनैव** कृतप्रायश्चित्तेन सार्धं प्रास्येयुः ।। १८५ ।।

(७) **मणिरामः**। पतितेन पुनः प्रायश्चित्ते चरिते सपिंडादयः **तेनैव** कृतप्रायश्चित्तेनैव सार्धं पुण्ये जलाशये स्नात्वा अपां नवं कुंभं **प्रास्येयुः** प्रक्षिपेयुः ।। १८५ ।।

(८) **गोविन्दराजः**। **प्रायश्चित्त** इति। कृते पुनः पतितेन प्रायश्चित्ते उदकपूर्णं नवं **तेनैव** प्रायश्चित्तेन सह पवित्रे जलाधारे स्नात्वा तेन सपिण्डसमानोदकाः प्रक्षिपेयुः। इह नवग्रहणाद्दासीघटमित्यत्रोपयुक्तघटग्रहणं गम्यते ।। १८५ ।।

पुनरसौ घटः प्रक्षेप्तव्य इत्याह

**स त्वप्सु तं घटं प्रास्य प्रविश्य भवनं स्वकम् ।।**
**सर्वाणि ज्ञातिकार्याणि यथापूर्वं समाचरेत् ।। १८६ ।।**

(१) **मेधातिथिः**। यास्वप्सु स्नातास्तास्वेव घटः प्रक्षेप्तव्यः। ततस्तं पुरस्कृत्य तदीयं **भवनं** प्रविशेयुः। ततो **यथापूर्वं** संभोजनादीनि **ज्ञातिकार्याणि** प्रवर्तयेयुः। अन्ये तु स कृतप्रायश्चित्त इति संबध्नन्ति। घटप्रासनं तेनैव कर्तव्यम्। एषा चास्य पतितोदकक्रिया नान्यस्य त्याज्यस्य, 'त्यजेच्चेत्पितरं राजघातकं शूद्रयाजकम्' इत्यादेः ।। १८६ ।।

(२) **सर्वज्ञनारायणः**। **ज्ञातिकार्याण्येक**ज्ञातिषु कर्तव्यान्यभिवादनादीनि ।। १८६ ।।

(३) **कुल्लूकः**। **स** कृतप्रायश्चित्तस्तं पूर्वोक्तघटं जलमध्ये क्षिप्त्वा ततः स्वकीयभवनं प्रविश्य यथापूर्वं सर्वाणि ज्ञातिकर्माणि कुर्यात् ।। १८६ ।।

(४) **राघवानन्दः।** ततः किं नु कुर्यादित्याह **स** त्विति। **स्वकमि**त्युपलक्षणं दाया-दादेतदवाप्यानि **सर्वाणि ज्ञातिकार्याणि** सहभक्षणादीनि **समाचरे**त्कुर्यात् ।। १८६ ।।

(६) **रामचन्द्रः। सः** पुरुषस्तं घटमप्सु प्रास्य स्वकं भवनं प्रविश्य यथापूर्वं ज्ञाति-कार्याणि समाचरेत् ।। १८६ ।।

(७) **मणिरामः।** सः कृतप्रायश्चित्तः। तं पूर्वोक्तं घटम्।। १८६ ।।

(८) **गोविन्दराजः। स** इति। **स** कृतप्रायश्चितः **तं** पूर्वोक्तं घटमुदकमध्ये क्षिप्त्वा ततः स्वगृहं प्रविश्य पूर्ववत् सर्वाणि बन्धुकार्याणि कुर्यात् ।। १८६ ।।

(९) **भारुचिः।** इमे अपि पात्रविपर्यासोद्धरणे षट्श्लोकोक्ते महापातकसम्बन्ध एव स्यात्। तच्चोक्तम् 'पतितस्योदकं छेद्यमि'त्येवमादि। स्मृत्यन्तरे तु 'त्यजेत्पितरमि'-त्येवमादि केषांचिदेव ।। १८६ ।।

**एतमेव विधिं कुर्याद्योषित्सु पतितास्वपि ।।**
**वस्त्रान्नपानं देयं तु वसेयुश्च गृहान्तिके ।। १८७ ।।**

(१) **मेधातिथिः। योषित्सु** स्त्रीष्वपि **पतितास्वेष एव विधिः।** 'पतितास्व'कृत-प्रायश्चित्तासु च। ताभ्यस्तु कृतोदकाभ्योऽपि वस्त्रान्नं दातव्यम्। दानग्रहणात् **वस्त्रान्ने** शरीरस्थितिमात्रसंपादिनी दातव्ये, न भोगादयः। **पान**मौचित्यादुदकम्। तच्च प्राचुर्याद-दत्तमपि लभ्यते। वचनं तु परानुरोधात् प्रीत्या तदपि स्वातन्त्र्येण तासां न देयम्। यादृशं च पानं तादृशे एव वस्त्रान्नेऽतो निकृष्टं वस्त्रं चान्नं दातव्यम्। तथोक्तं (याज्ञ. स्मृ.-१।७०) 'हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम्। परिभूतामधःशय्यां वासयेद् व्यभिचारिणीम्'।। पातित्यहेतवश्च स्त्रीणां ये एव मनुष्यस्य। यत्तु भ्रूणहनि हीनवर्ण-सेवायां 'न च स्त्रीणामधिकं भ्रूणहनीति' तत्तुल्यतार्थं न तु परिसंख्यार्थम्। तथा च याज्ञ-वल्क्यः (प्रायश्चित्ते ३।२९८)। 'नीचाभिगमनं गर्भपातनं भर्तृहिंसनम्। विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम्'। **वसेयुः स्वगृहान्तिके** प्रधानगृहान्निष्कास्य कुटीगृहे वासयितव्ये'-त्यन्तिक'ग्रहणम्। केचिदाहुः—प्रायश्चित्तं तु कुर्वतीनामेतद्देयं न त्वन्यथा। तदयुक्तम्। वस्त्रान्नदानव्यवहारस्य तत्र योगत्वात्। प्रायश्चित्ते भिक्षाहारता पयोव्रतं चांद्रायणविधि-श्चेत्यादि। न च भैक्षाहारता चानेन विवर्तयितुं शक्या। वृत्तिविधानेन चरितार्थत्वात्। तस्माद्यस्याः प्रायश्चित्तेष्वनधिकारः अशक्ततयाऽतिपुष्टतया वा तस्या अपि वस्त्रादिदानं कर्तव्यमिति श्लोकार्थः ।। १८७ ।।

(२) **सर्वज्ञनारायणः। गृहान्तिके** वासः पुनः पापप्रसंगनिवृत्त्यर्थः ।। १८७ ।।

(३) **कुल्लूकः।** स्त्रीष्वपि **पतितास्वे**वमेव पतितस्योदकं कार्यमित्यादि **विधिं** भर्त्रा-दिसपिण्डसमानोदकवर्गः कुर्यात् ग्रासाच्छादनानि पुनराभ्यो देयानि गृहसमीपे चासां वासार्थं कुटीर्दद्युः ।। १८७ ।।

(४) राघवानन्दः। पुंस्युक्तं प्रकारं स्त्रीष्वतिदिशति एतमिति। स्त्रीणां प्रायश्चित्तगनिच्छन्तीनाम्। आवश्यकमाह वस्त्रेत्यादि ॥ १८७ ॥

(५) नन्दनः। व्रतं दासीघटप्राशनादिकं कुर्यात् वसेयुर्योषितः ॥ १८७ ॥

(६) रामचन्द्रः। योषित्सु पतितासु एवमेव विधिं कुर्यात् ॥ १८७ ॥

(७) मणिरामः। एतमेव विधिं घटप्रक्षेपविधिं गृहांतिके गृहसमीपे ॥ १८७ ॥

(८) गोविन्दराजः। एतदेव व्रतमिति। यदेव पुंसः पातित्यनिमित्तं तदेव स्त्रीणां विशेषं याज्ञवल्क्यः प्राह। नीचाभिगमनं गर्भपातनं भर्तृहिंसनम्। विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम्। इत्येवं स्त्रीषु पतितासु पतितस्योदकं कार्यमित्यादि यदुक्तं किंतु कुर्यात्किंतु ग्रासाच्छादनान्नपानादीनि गृहसमीपे च शीर्णगृहकादि निवासार्थमासां देयम् ॥ १८७ ॥

(९) भारुचिः। निगदव्याख्यातः श्लोकः ॥ १८७ ॥

**एनस्विभिरनिर्णिक्तैर्नार्थं किंचित्सहाचरेत् ॥**
**कृतनिर्णेजनांश्चैतान्न जुगुप्सेत कर्हिचित् ॥ १८८ ॥**

(१) मेधातिथिः। एनस्विनः प्रकृतत्वात्पातकिनः। तैरनिर्णिक्तैरशुद्धैरकृतप्रायश्चित्तैर्नार्थं किंचिदृणदानक्रयविक्रययाजनाद्युक्तम्। निर्णेजनं शोधनं पापापनोदनम्। तस्मिन् कृते। नैनां जुगुप्सेत कृतप्रायश्चित्तान्न कुत्सयेत् ॥१८८॥

(२) सर्वज्ञनारायणः। अनिर्णिक्तैरकृतप्रायश्चित्तैः। अर्थं कार्यं दानप्रतिग्रहादि ॥ १८८ ॥

(३) कुल्लूकः। पापकारिभिरकृतप्रायश्चित्तैः सह दानप्रतिग्रहादिकमर्थं किंचिन्नानुतिष्ठेत् कृतप्रायश्चित्तान्नैव कदाचिदपि पूर्वकृतपापत्वेन निन्देत्किंतु पूर्ववद्व्यवहरेत् ॥ १८८ ॥

(४) राघवानन्दः। अत्रार्थवादमाह एनस्विभिरिति। अनिर्णिक्तैः अकृतप्रायश्चित्तैः। कृतनिर्णेजनान् चरितप्रायश्चित्तान् ॥ १८८ ॥

(५) नन्दनः। अनिर्णिक्तैरकृतप्रायश्चित्तैः एनस्विभिः पतितैः ॥ १८८ ॥

(६) रामचन्द्रः। एवं एभिर्व्रतैः अनिर्णिक्तैः अकृतप्रायश्चित्तैः ॥ १८८ ॥

(७) मणिरामः। एनस्विभिः पापकारिभिः। अनिर्णिक्तैः प्रकृतप्रायश्चित्तैः। कृतनिर्णेजनान् कृतप्रायश्चित्तान् ॥ १८८ ॥

(८) गोविन्दराजः। एनस्विभिरिति। पापकारिभिरकृतप्रायश्चित्तैः सह दानप्रतिग्रहादिकमनर्थकं च नानुतिष्ठेत्। कृतप्रायश्चित्तानां चैषां न कदाचिदपि किंचित्संभावयेत् अस्यायं चार्थवादः ॥ १८८ ॥

(९) भारुचिः। 'सर्वाणि ज्ञातिकार्याणि' इति महापातकेभ्योऽनुज्ञानात् गोवधार्थं प्रकल्प्यते। 'न संसर्गं व्रजेत् सद्भिः प्रायश्चित्ते कृते सती'त्युभयत्रापि शक्यः सम्पर्को ज्ञापयितुम् ॥ १८८ ॥

**बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः ।।**
**शरणागतहंतॄंश्च स्त्रीहंतॄंश्च न संवसेत् ।। १८९ ।।**

(१) **मेधातिथिः । शरणागतः ।** यः शत्रुभिरभिहन्यमानो बलवताऽन्येन वोपद्रूयमानः परित्राणार्थं कंचिदन्यमभिधावेत् 'त्रायस्व मामिति' । एवं कृतदोषो विद्वान् समुपधावेत् 'उद्धर मां देहि प्रायश्चित्तमिति' **शरणागतः । कृतघ्नः** कृतमुपकारं विस्मृत्य योऽपकाराय यतते यो वा कृतोपकारं पुर्नविनाशयति तस्यैवोपकृतस्यापकारं उद्यच्छति । यद्यप्येषा शब्दव्युत्पत्तिस्तथापि लोकप्रसिद्धेर्यतोपकर्तुरपकारे वर्तते स 'कृतघ्नः' । अत्र जातिर्नापेक्ष्यते बालादिस्वरूपमेव कारणम् । **स्त्रियो** व्यभिचारिण्योऽपि । यद्यपि तासां स्वल्पं प्रायश्चित्तं तथापि वाचनिकः संवासप्रतिषेधः । संवासः संगतिस्तद्गृहनिवासश्च ।। १८९ ।।

(२) **सर्वज्ञनारायणः । कृतघ्नानुपकारहन्तॄन् । धर्मतो** धर्माचरणेन प्रायश्चित्तक्रियया । न संवत्सरं स्वसमीपे वासयेत् ।। १८९ ।।

(३) **कुल्लूकः ।** अस्यापवादमाह **बालघ्नानिति ।** बालं यो हतवान् कृतोपकारमपकाराचरणेन यो विनाशितवान् प्राणरक्षार्थमागतं यो हतवान् स्त्रियं च यो व्यापादितवान् एतान्यथावत्कृतप्रायश्चित्तानपि संसर्गितया न परिवसेत् ।। १८९ ।।

(४) **राघवानन्दः ।** एनो हि द्विविधमेकमात्मगतं प्रायश्चित्तादिनाश्यमपरं देहगतं यावद्देहस्थायि तत्रात्मगतस्य प्रायश्चित्तैर्निरासेऽपि देहगतस्यानिरासतो वाचनिकीमाह **बालघ्नांश्चेति । कृतघ्नान्** कृतोपकारहन्तॄन् । **धर्मतः** धर्मशास्त्रोक्तप्रायश्चितेन व्यपगतात्मपापान् । न चैतदर्थवादमात्रमुक्तप्रकारान्तरेण स्वार्थपरत्वोपपत्तौ तस्य जघन्यत्वात् । **शरणागत**बालस्त्रीहिंसकान्न संपिबेत् एतैः सह पानादीन्न कुर्यादित्यर्थः । चीर्णव्रतानपि सदा कृतघ्नसहितानिमानिति याज्ञवल्क्यसंवादात् । अत एव वेनदेहात्पापपुरुषनिर्गमनं देहस्य पापान्तरे लिङ्गमिति ।। १८९ ।।

(५) **नन्दनः । विशुद्धानपि धर्मतः** कृतप्रायश्चित्तानपि संवसेत् ।। १८९ ।।

(६) **रामचन्द्रः ।** एतैः सह न संवसेत् ।। १८९ ।।

(७) **मणिरामः ।** अस्यापवादमाह ।। **बालेति ।।** बालघ्नादीन् **धर्मतः विशुद्धानपि** कृतप्रायश्चित्तानपि संसर्गितया न परिवसेत् ।। १८९ ।।

(८) **गोविन्दराजः । बालघ्नानिति ।** बालं यो हतवान् यश्च कृतमुपकाराचरणेन नाशितवान् यश्च त्राणार्थिनमागतं हतवान् स्त्रियं च यो हतवान् तान् प्रायश्चित्ततपसोत्पन्नशुद्धिकानपि सहवासं परिहरेत् ।। १८९ ।।

(९) **भारुचिः ।** सम्पर्कापवादार्थोऽस्यारंभः । अथवा प्रत्यवायातिशयज्ञापनार्थः ।।

**येषां द्विजानां सावित्री नानूच्येत यथाविधि ।।**
**तांश्चारयित्वा त्रीन्कृच्छ्रान्यथाविध्युपनाययेत् ।। १९० ।।**

(१) **मेधातिथिः।** 'आ षोडशाद्ब्राह्मणस्य' इत्यादिनोपनयनकालनियमः कृतः। तदतिक्रमे प्रायश्चित्तमिदम्। गर्भाष्टमात्प्रभृति यावत्षोडशवर्षं ब्राह्मणस्य **सावित्री नानूच्येत।** सावित्र्यनुवचनेनोपनयनाख्यसंस्कारो लक्ष्यते। अस्मिन् काले यद्युपनयनं न क्रियेत। एवं 'आ द्वाविंशात् क्षत्रियस्य, आ चतुर्विंशतेर्विशः'। अत ऊर्ध्वं **त्रीन् कृच्छ्रांश्चारयितव्यः।** निरुपपद'कृच्छ्र'श्रवणे प्राजापत्यप्रत्यय इति स्मृतितन्त्रसिद्धिः। अन्ये तु कृच्छ्रातिकृच्छ्रानाहुः। कृच्छ्रेषु कृतेषूपनेतव्याः। **यथाविधी**त्यनुवादः ॥ १९० ॥

(२) **सर्वज्ञनारायणः।** **यथाविधि** स्वगृह्योक्तप्रकारेण परमतेन स्वमतेनाप्यसंपूर्णविधिना वा नानूच्येतेत्यर्थः। **कृच्छ्रान्** प्राजापत्यानिति ॥ १९० ॥

(३) **कुल्लूकः।** **येषां** ब्राह्मणक्षत्रियविशामानुकल्पिककाल उपनयनं यथाशास्त्रं न कृतवान्तान्प्राजापत्यत्रयं कारयित्वा यथाशास्त्रमुपनयेत्। यत्तु याज्ञवल्क्यादिभिर्व्रात्यस्तोमादिप्रायश्चित्तमुक्तं तेन सहास्य गुरुलाघवमनुसंधाय जातिशक्त्याद्यपेक्षो विकल्पो मन्तव्यः ॥ १९० ॥

(४) **राघवानन्दः।** संस्कारकालोत्तीर्णानां द्विजानां प्रायश्चित्तानि दर्शयन् तेषामेवोपनयनाधिकारितामाह **येषामिति।** **नानूच्येत** गुरोरुच्चारणानान्तरं नाधीयीत ॥ १९० ॥

(५) **नन्दनः।** अवृत्तानां प्रायश्चित्तमाह **येषां द्विजानां सावित्रीति** ॥ १९० ॥

(६) **रामचन्द्रः।** **तान्** सावित्रीपतितान् **कृच्छ्रान्** **चारयित्वा** **यथाविधि** उपनाययेत् ॥ १९० ॥

(७) **मणिरामः।** सावित्रीनाऽनूच्येत गौणकालेऽपि उपनयनं न कृतवान्। **त्रीन्** **कृच्छ्रान्** प्राजापत्यत्रयं **चारयित्वा** कारयित्वा ॥ १९० ॥

(८) **गोविन्दराजः।** **येषामिति।** येषां ब्राह्मणादीनां अनुकल्पिककालेऽप्युपनयनं यथाशास्त्रं न कृतं तान् प्राजापत्यकृच्छ्रत्रयं कारयित्वा **यथाशास्त्रमुपनाययेत्** ॥ १९० ॥

(९) **भारुचिः।** त्रयः कृच्छ्राः, आद्यत्वात् प्राजापत्याः। कृच्छ्रातिकृच्छ्रपराका इत्यपरे ॥ १९० ॥

**प्रायश्चित्तं चिकीर्षन्ति विकर्मस्थास्तु ये द्विजः ॥**
**ब्राह्मणा च परित्यक्तास्तेषामप्येतदादिशेत् ॥ १९१ ॥**

(१) **मेधातिथिः।** **विकर्मस्था** यथा ब्राह्मणाः शूद्रसेवाद्यभिरताः। **यस्य यत्कर्म** जीविकाहेतुस्तया तत्तस्य विहितं कर्म। यस्य यन्न विहितं तस्य **तद्विकर्म।** द्विजातीयस्य विहितं विजातीयस्य **विकर्म।** **ब्रह्मणा परित्यक्ता** उपनीता अप्यस्वीकृतवेदा अधीत्य वा वेदमुपविस्मरेयुस्तेषा**मप्येत**त्कृच्छ्रत्रयम्। **प्रायश्चित्तं चिकीर्षन्ती**त्यनुवाद एवायम्। इच्छन्नेव यतः प्रवर्तते ॥ १९१ ॥

(२) **सर्वज्ञनारायणः।** **विकर्मस्था** अविक्रय्यविक्रयिणः। **ब्रह्मणा** वेदेन **त्यक्ताः**

उपनीता अप्यनधीतवेदाः। **एतत्** कृच्छ्रत्रयम्। इदं च विकर्म त्यक्त्वा कर्तव्यं तथा अनधीतवेदेन वेदमध्येतुमधिकारार्थं कार्यम् ॥ १९१ ॥

**(३) कुल्लूकः।** ये प्रतिषिद्धशूद्रसेविनो द्विजास्ते चोपनीता अप्यनधीतवेदाः प्रायश्चित्तं कर्तुमिच्छन्ति तेषामप्येतत्प्राजापत्यादित्रयमुपदिशेत् ॥ १९१ ॥

**(४) राघवानन्दः।** शूद्रादिसेविनोऽपि कृतप्रायश्चित्तेन वेदाधिकारितां ददत्कृच्छ्रत्रयं तेषां प्रायश्चित्तमाह **प्रायश्चित्तमिति**। ब्रह्मणा च भावित्यादि वेदेन। **एतत्** कृच्छ्रत्रयम् ॥ १९१ ॥

**(६) रामचन्द्रः।** ये विकर्मक्रयविक्रयिणः तेषां एतत्प्राजापत्यत्रयं आदिशेत् ॥ १९१ ॥

**(७) मणिरामः। ब्रह्मणा** वेदेन एतत् प्राजापत्यत्रयम् ॥ १९१ ॥

**(८) गोविन्दराजः। प्रायश्चित्तमिति।** प्रतिसिद्धकर्मजीविनो ये द्विजाः प्रायश्चित्तं कर्तुमिच्छन्ति ये वानधीतवेदास्तेषामपि एतत् कृच्छ्रत्रयमुपदिशेत् ॥ १९१ ॥

**(९) भारुचिः।** अनधीतवेदा **विकर्मस्थाश्च** येऽधीतवेदा अपि तेषामपीदं प्रायश्चित्तम्। यद्यस्य प्रतिषिद्धं तत्तस्य विकर्म। यथा शूद्रसेवनमार्याणाम् ॥ १९१ ॥

**यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् ॥**
**तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव च ॥१९२॥**

**(१) मेधातिथिः। गर्हितेने**त्यविशेषेऽप्यसत्प्रतिग्रहणेति द्रष्टव्यम्। उत्तरत्र विशेष-विधेस्तं प्रत्येवोपदिश्यमानत्वात् 'मुच्यतेऽसत्प्रतिग्रहादिति'। **उत्सर्गः** त्यागो ममतानिवृत्ति-र्दानेन वा। अनपेक्ष्य दृष्टमदृष्टं राजरथ्यादिषु त्यागेन देयं 'मम यो गृह्णाति स गृह्णात्वि'-त्याद्यभिधाय क्षिपेत्, श्वभ्रे गर्ते नद्यादिषु वा। **जपतपसी** वक्ष्यत्युपदिष्टश्लोके। अन्ये तु ब्राह्मणशब्दस्थाने मानवशब्दं पठित्वैवं व्याचक्षते। यस्य वर्णस्य द्विजातेः शूद्रस्य वा धनार्जनोपायतया यत्प्रतिषिद्धं तत्तस्य गर्हितम्'। यथा 'ब्राह्मणः क्षत्रियो वाऽपि वृद्धिं नैव प्रयोजयेत्' इत्यादि। तेन येऽर्जयन्ति धनं कर्मणा तस्योत्सर्गजपतपांसि त्रीणि समुच्चितानि प्रायश्चित्तानि। ब्राह्मणस्यासत्प्रतिग्रहे उत्तरो विशेषविधिः ॥ १९२ ॥

**(२) सर्वज्ञनारायणः। यद्गर्हितेनेति** दुष्टप्रतिग्रहादिना ननु चौर्येऽप्येतत्। **उत्सर्गेण** त्यागेन जपसहितेन तपःसहितेन वा जप्यानुक्तौ। जपो गायत्र्याः ॥ १९२ ॥

**(३) कुल्लूकः।** गर्हितेन कर्मणा निषिद्धदुष्प्रतिग्रहादिना ब्राह्मणा यद्धनमर्जयन्ति तस्य धनस्य त्यागेन जपतपोभ्यां वक्ष्यमाणाभ्यां शुध्यन्ति धनत्यागेन च प्रायश्चित्तविधाना-द्बहुमूल्ये च करितुरगादावल्पमूल्ये च लौहादौ परिगृहीते तुल्यप्रायश्चित्ताभिधानमुपपन्नं एवमविक्रय्यविक्रयादावपि ॥ १९२ ॥

**(४) राघवानन्दः।** नीचप्रतिग्रहनिषिद्धक्रयविक्रयादिनोपार्जितद्रव्यं परित्यजतो जपत-पोभ्यां शुद्धिरित्याह **यदिति। उत्सर्गेण** त्यागेन ॥ १९२ ॥

(५) नन्दनः। विकर्मस्थाः प्रतिषिद्धकर्मकृतः एतत्कृच्छ्रत्रयाचरणम् ॥ १९२ ॥

(६) रामचन्द्रः। **गर्हितेन** दुष्टप्रतिग्रहादिना कर्मणा ॥ १९२ ॥

(७) मणिरामः। जप्येन तपसा च वक्ष्यमाणेन ॥ १९२ ॥

(८) गोविन्दराजः। **यदिति**। यद्गर्हितेन तपसा कर्मणाऽसत्प्रतिग्रहादिना ब्राह्मणा धनमर्जयन्ति तस्य धनस्य परित्यागेन **जपतपोभ्यां च** वक्ष्यमाणाभ्यां शुध्यन्ति ॥ १९२ ॥

(९) भारुचिः। पूर्वस्मिन् श्लोके द्विजातीनामधिकृतत्वात् **यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनमि**तीदं ब्राह्मणग्रहणं सर्वद्विजप्रदर्शनार्थं विज्ञायते। जप्यतपसोर्गर्हितेषु सामान्यतोऽभिधानाद्यो यत्र विशेषेण विहितः स तत्र प्रत्येतव्यः। तयोश्च प्राप्तयोरपि सतोर्धनोत्सर्गार्थं ग्रहणम् ॥ १९२ ॥

**जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः ॥**
**मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात् ॥ १९३ ॥**

(१) मेधातिथिः। **त्रीणी सावित्रीसहस्राणि** प्रत्यहमिति केचिदाहुः। अन्ये तु **मासं** त्रीण्यभिसंबध्नन्ति। अतश्च प्रत्यहमेकैकं शतम्। **गोष्ठ** इति वासस्थानम् ॥ १९३ ॥

(२) सर्वज्ञनारायणः। मासं पयः क्षीरं पीत्वा गोष्ठे तिष्ठन् गायत्र्यास्त्रिसहस्रं जप्त्वा। एतच्च जपसहितम्। जपमापदि ॥ १९३ ॥

(३) कुल्लूकः। त्रीणि सावित्रीसहस्राणि जपित्वा गोष्ठे वा मासं क्षीराहारोऽसत्प्रतिग्रहजनितात्पापान्मुक्तो भवति शूद्रप्रतिग्रहादावप्येतदेव प्रायश्चित्तं द्रव्यदोषेण च दातृदोषेणापि प्रतिग्रहस्य गर्हितत्वाविशेषादिति ॥ १९३ ॥

(४) राघवानन्दः। जप्येनेत्युक्तं तत्र कस्य जपः। कोऽवा नियमः कति वा संख्येत्यपेक्षायामाह **जपित्वेति** चतुर्भिः। मासं व्याप्य दुग्धभक्षणं नियमः ॥ १९३ ॥

(५) नन्दनः। असत्प्रतिग्रहविशेषमाह **जपित्वा त्रीणि सावित्र्या** इति। मुच्यतेऽसत्प्रतिग्राही ॥ १९३ ॥

(६) रामचन्द्रः। असत्प्रतिग्रहात् मुच्यते ॥ १९३ ॥

(७) मणिरामः। जप्यतपस्याह **जपित्वेति** ॥ १९३ ॥

(८) गोविन्दराजः। **जपित्वेति**। त्रीणि सावित्रीसहस्राणि यत्नवान् जपित्वा मासं च क्षीराहारो गोष्ठनिवास आसीनः सन् असत्प्रतिग्रहजनितं पापमपहरति ॥ १९३ ॥

(९) भारुचिः। असत्प्रतिग्रहस्य विशेषविधिः ॥ १९३ ॥

**उपवासकृशं तं तु गोव्रजात्पुनरागतम् ॥**
**प्रणतं प्रतिपृच्छेयुः साम्यं सौम्येच्छसीति किम् ॥ १९४ ॥**

(१) मेधातिथिः। कार्श्यवचनात्स्वल्पं पयःपानमाह। **प्रणतं** जानुभ्यां स्थितं भुवि।

ते विद्वांसो ब्राह्मणाः **पृच्छेयुस्तं 'हे सौम्येच्छसि** साम्यमिति'। 'अथ पुनरपि शास्त्रमवगणय्य न प्रवर्तितव्यमसत्प्रतिग्रहलोभेनेति'॥ १९४॥

(२) **सर्वज्ञनारायणः।** प्रतिग्रहे कामकृते प्रायश्चित्तेषु चीर्णेषु कथंचित्पापक्षयसंदेहे यथा निर्णयस्तत्प्रसंगादत्राह **उपवासेति। उपवासैः** प्रायश्चित्तार्थासक्तैः। तमिति कृत-निर्णेजनपरामर्शः। गोव्रजादिति प्रायश्चित्तदेशोपलक्षणम्॥ १९४॥

(३) **कुल्लूकः।** केवलक्षीराहारेणेतरभोजनव्यावृत्त्या कृशदेहं गोष्ठात्प्रत्यागतं **प्रणतं** नम्रीभूतम्, किमस्माभिः सह साम्यमिच्छसि पुनरसत्प्रतिग्रहं न करिष्यसीत्येवं धर्मं ब्राह्मणाः परिपृच्छेयुः॥ १९४॥

(४) **राघवानन्दः।** पुनरागतं स्वगृहं प्रति। **प्रणतं** नम्रीभूतम्। किमस्माभिः सह साम्यमिच्छसि पुनरसत्प्रतिग्रहादिकं न करिष्यसीति॥ १९४॥

(५) **नन्दनः।** तमसत्प्रतिग्राहिणं परिपृच्छेयुर्विप्राः **साम्यम**स्माभिः साम्यम्॥ १९४॥

(६) **रामचन्द्रः। तम**सत्प्रतिग्राहिणं प्रायश्चित्ते चरिते उपवासाशक्तौ पापक्षयसन्देहे तत् ज्ञानोपायमाह, हे सौम्य। अस्माभिः किं इच्छसीति॥ १९४॥

(७) **मणिरामः। प्रणतं** नम्रीभूतम्। हे सौम्य ! किं अस्माभिः सह साम्यं इच्छसि पुनरसत्प्रतिग्रहं न करिष्यसि एवं धर्मं ब्राह्मणाः परिपृच्छेयुः॥ १९४॥

(८) **गोविन्दराजः। उपवासकृशमिति।** केवलं क्षीराहारेणाशनान्तरनिवृत्या तमपचितशरीरं गोष्ठात्प्रत्यागतं प्रह्वीभूतं हे साधो ! किं अस्माभिः सह सामान्यमिच्छसि पुनरसत्प्रतिग्रहेन त्वं प्रवर्तस इत्येवं धर्मं ब्राह्मणाः परिपृच्छेयुः॥ १९४॥

**सत्यमुक्त्वा तु विप्रेषु विकिरेद्यवसं गवाम्।**
**गोभिः प्रवर्तिते तीर्थे कुर्युस्तस्य परिग्रहम्॥ १९५॥**

(१) **मेधातिथिः।** पृष्टेन वा तेन वक्तव्यं **'सत्यमि'**ति। येन मार्गेण गावो विचरन्ति नदीप्रस्रवणादितलं पातुं **तस्मिंस्तीर्थे** तरणप्रदेशे। ते ब्राह्मणाः **परिग्रहमस्य कुर्युस्ते** हि हस्तारोपणेना'त्मैकदेश'मानयेयुः॥ १९५॥

(२) **सर्वज्ञनारायणः।** सत्यमुक्त्वा यत्पापं यच्च व्रतं चीर्णम्। विकिरेद्गवामग्रे। **गोभिर्घासभक्षणेन तीर्थे** व्यवहारवर्त्मनि। अन्यथा पुनः प्रायश्चित्ताचरणम्॥ १९५॥

(३) **कुल्लूकः।** सत्यमेतत्पुनरसत्प्रतिग्रहं न करिष्यामीत्येवं ब्राह्मणेषूक्त्वा घासं गवां दद्यात् तस्मिन्यवसंभक्ष्यमाणे देशे गोभिः पवित्रीकृतत्वात्तीर्थीभूते ब्राह्मणास्तस्य संव्यवहारे स्वीकारं कुर्युः॥ १९५॥

(४) **राघवानन्दः।** एवमुक्ते सत्यं पुनरसत्प्रतिग्रहं न करिष्ये। **यवसं** घासं **विकिरेत् गवां दद्यात्।** तीर्थे गोष्ठे गोभिः शुद्धिर्व्यञ्जितव्येत्यर्थः। गवां यवसदानं शुद्धिपरीक्षण नोत्तराप्रतिपत्तिः ताश्चेन्न भक्षयन्ति नो तदाशुद्धिरिति भावः॥ १९५॥

(५) **नन्दनः**। एवं पृष्टः किमपरः कुर्यादित्यपेक्षायामाह **सत्यमुक्त्वा तु विप्रेभ्य** इति। **सत्यं** प्रायश्चित्तं यथार्थं **यवसं** ग्रासं गवां पुरतो **विकिरेद्विक्षिपेत् गोभिः प्रवर्तिते तीर्थे** गोभिर्वा भक्षिते यवस इत्यर्थः तस्य प्रतिग्रहं विप्राः कुर्युरभिक्षिते न कुर्युरिति ॥ १९५ ॥

(६) **रामचन्द्रः**। **यवसं** तृणम्। गोभिः प्रवर्तिते तीर्थे च व्यवहारमार्गे तस्य **परिग्रहं** स्वीकारं कुर्युः ॥ १९५ ॥

(७) **मणिरामः**। **यवसं** तृणम्। **प्रवर्तिते तीर्थे** यवसंभक्षमाणे देशे गोभिः पवित्रीकृतत्वात्तीर्थीभूते। **तस्य** कृतप्रायश्चित्तस्य ॥ १९५ ॥

(८) **गोविन्दराजः**। **सत्यमिति**। सत्यं पुनरसत्प्रतिग्रहं न करिष्य इत्येवं ब्राह्मणानुक्त्वा गवां घासं प्रक्षिपेत्। ततस्तस्मिन् यवसभक्षणप्रदेशे गोभिः पवित्रीकृतत्वात्तीर्थ एवावतारितो ब्राह्मणा अस्य संव्यवहारार्थं अङ्गीकारं कुर्युः ॥ १९५ ॥

(९) **भारुचिः**। ऋज्वर्थं श्लोकद्वयम् ॥ १९४–१९५ ॥

**व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च ॥**
**अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति ॥ १९६ ॥**

(१) **मेधातिथिः**। **व्रात्याः** सावित्रीपतितास्तेषां **व्रात्यानां** व्रात्यस्तोमः क्रतुर्विहितस्तेन ये याजयन्ति आर्त्विज्येनोपदेष्टृत्वेन च। **परेषां** मातापितृगुरुवर्ज**मन्त्यकर्म** श्मशानादि। **अभिचारं** श्येनचिदादि। **अहीनं च** द्विरात्रादिकम्। कृच्छ्रैर्विशुध्यति। अन्ये त्वाहुः। नायमभिचाराहीनयोर्यजमानस्य विधिः। कस्य तर्हि? ऋत्विजाम्। तथा च व्रात्यानां याजनमितीदृश एवाधिकारः। यजमानस्य तु विधिलक्षणाप्रवृत्तिस्तस्याः प्रतिषेधाभावे कुतः प्रायश्चित्तम्। "भवत्वहीने शास्त्रतः प्रवृत्तिः श्येनादौ तु कथम्। न हि शत्रून् मारयेदिति नोदनाऽस्ति। किंतर्हि? 'यः शत्रोर्मारणं कामयते तेन तत्सिध्यर्थं श्येनादि कर्तव्यम्'। शत्रुमारणे च हिंसालक्षणाप्रवृत्तिः। सा च निषिद्धा 'न हिंस्यात्सर्वाभूतानीति'। अहीनेष्वपि लिप्सात एव प्रवृत्तिः। फलकामस्य हि तत्राधिकारो भवति। न तु फलकामना तत्र निषिद्धा, नापि काम्यमानार्थनिष्पादको व्यापारः। इह तूभयं निषिद्धं 'न हिंस्यादिति' मरणफलव्यापारेण न प्रवर्तितव्यम्। तत्फलं च श्येनादेरेव। इह तु नास्ति निषेधः 'स्वर्गादिफलकर्म न कर्तव्य'मिति"। केचिदाहुः। 'वाक्शस्त्रं वै ब्राह्मणस्य' इत्यभिचरणीयाभिचारोऽप्यनुज्ञयाऽऽम्नात एव। तुल्यावहीनाभिचारौ। तत्र ऋत्विजामेव प्रायश्चित्तं युक्तम्। "ननु च काम्यान्यपि निषिद्धानि 'कामात्मता न प्रशस्ता' इति"। यस्तस्य विषयः स तत्रैव व्याख्यातः। श्रुतिश्चा-'हीनतया याजनं कार्यमिति'। अभिचरणायाभिचारे च यजमानस्यायुक्तम्। "कथम्"। आम्नातं य'ज्ज्योतिषाभिचार्यन्ते'। तद्वत्प्रायश्चित्तान्युक्तान्येव। अस्य अभिचरर्त्विग्विषयेऽभिचरणीयाभिचारे सविषयत्वात्। वैदिकेन जपहोमादिना शत्रोर्मारणम'भिचारः ॥ १९६ ॥

(२) **सर्वज्ञनारायणः**। **परेषाम**बन्धूनामर्थाभिसंधिना। **अन्त्यकर्म** श्मशानकर्म। अहीनं द्विरात्रादि ॥ १९६ ॥

(३) **कुल्लूकः** । व्रात्यानामत ऊर्ध्वं त्रयोऽप्येत इत्युक्तानां व्रात्यस्तोमादियाजनं कृत्वा पितृगुर्वादिव्यतिरिक्तानां च निषिद्धौर्ध्वदेहिकदाहश्राद्धादि कृत्वा अभिचारं च श्येनादिकर्माभिचारोऽनभिचारणीयस्य अहीनं यागविशेषः । अहीनयजनमशुचिकरमिति श्रुतेः । त्रिरात्रादि तस्य यजनं कृत्वा त्रिभिः कृच्छ्रैर्विशुध्यति ।। १९६ ।।

(४) **राघवानन्दः** । ब्राह्मणस्य सत्प्रतिग्रहो देहाद्यर्थः याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेदित्युक्तं तत्रासत्प्रतिग्रहे प्रायश्चित्तमुक्तं तथाविधयाजनेऽपि तदाह **व्रात्यानामिति** । **परेषां** निषिद्धौर्ध्वदेहिकानां पतितादीनाम् । **अन्त्यकर्म** दाहादि । अहीनं त्रिरात्रादिसाध्यमभिचारं कारयित्वा कृत्वा वा ।। १९६ ।।

(५) **नन्दनः** । **अन्त्यकर्म** दासकृत्यं **परेषां** सपिंडानां प्रेतकर्मवाहीनं कृत्वा द्विरात्रादिष्वार्त्विज्यं कृत्वा ।। १९६ ।।

(६) **रामचन्द्रः** । **अपरेषां** पित्राचार्यादिव्यतिरिक्तानां सपिण्डानां **अन्त्यकर्म** श्मशानकर्म च अनभिचरणीयस्य अभिचारं अहीनं यागविशेषं त्रिभिः कृच्छ्रैः शुध्येत् ।। १९६ ।।

(७) **मणिरामः** । **व्रात्यानां** सावित्रीपतितानां **परेषां** गुर्वादिव्यतिरिक्तानाम् । **अन्त्यकर्म** प्रेतक्रियाम् । **अहीनं** यागविशेषः ।। १९६ ।।

(८) **गोविन्दराजः** । **व्रात्यानामिति** । व्रात्यानां भ्रष्टोपनयनानामत ऊर्ध्वं त्रयोऽप्येते इत्याद्युक्तानां व्रात्यस्तोमादियजनं कृत्वा पितृगुर्वादि व्यतिरिक्तानां वान्त्येष्टिं कृत्वा वाक्शस्त्रं वै ब्राह्मणस्योक्तत्वात् अनभिचारणीयस्य श्येनादिकर्मभिः चरेत् समं जातमरणहीनं च क्रतुविशेषं द्विरात्रादि कृत्वा त्रिभिः कृच्छ्रैर्विशुध्यति ।। १९६ ।।

(९) **भारुचिः** । **परेषा**मसन्धानमित्यर्थः । तथा चोक्तम् '**गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् । व्रताहारैः समं तत्र दशरात्रेण शुद्ध्यती**'ति । याजनाधिकाराच्चाभिचाराहीनयोरपि याजनार्थं वचनम् । न त्वात्मार्थे प्रतिषेधः । एवं च श्रुति"रहीनयाजनमकार्यमि"ति । अनभिचारणीयाभिचारे चैतत् प्रायश्चित्तम् । तथा चोक्तोऽभिचरणीयाभिचारः, "वाक्छस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन् द्विजः" इति ।।

**शरणागतं परित्यज्य वेदं विप्लाव्य च द्विजः ।।**
**संवत्सरं यवाहारस्तत्पापमपसेधति ।। १९७ ।।**

(१) **मेधातिथिः** । द्विविधः **शरणागतः** प्रागुक्तस्तस्य परित्यागः' प्रत्याख्यानम् । सत्यां शक्तौ । प्राक् चैतद्विचारितम् । **वेदं विप्लाव्या**नध्यायाध्ययनं कृत्वा । अधिकारेणाधीयानस्यानुयोगदानं 'किं पठसि नाशितं त्वयेति' । अथवा धनहेतोः परीक्षास्थानेष्वनियुक्तेन पठ्यते । स्मृतिश्च 'दत्वा नियोगं धनहेतोः पतितान्मुनिरब्रवीत्' ।। १९७ ।।

(२) **सर्वज्ञनारायणः** । शरणागतं **परित्यज्य** त्यक्त्वा **विप्लाव्या**र्थान्तरपरत्वव्याख्यादिना । विसर्गानुस्वारादिवैकल्येन मिथ्यार्थं कृत्वा । **यवाहारो** यवान्नाहारः ।। १९७ ।।

(३) **कुल्लूकः।** **शरणागतं** परित्राणार्थमुपगतं शक्तः सन्नुपेक्षते द्विजातिरनध्याप्यं च वेदमध्याप्य तज्जनितं पापं संवत्सरं यवाहारोऽपनुदति ।। १९७ ।।

(४) **राघवानन्दः।** महापातकादिभिन्नानां स्वातन्त्र्येण प्रातिस्विकं प्रायश्चित्तमाह **शरणागतेत्य**ष्टभिः। शरणागतं शक्तः सन्परित्यज्य अशक्तत्वे न दोषः। मृत्युर्बुद्धिमताऽपोह्यो यावद्बुद्धिबलोदयम्। यद्यसौ न निवर्तेत नापराधोऽस्ति देहिनः इति शुकोक्तेः। वेदं अनभ्यासेन **विप्लाव्य** विस्मृत्य कामतस्त्यागेऽनुपातकत्वोक्तेः। **अपसेधति** अपनुदति ।। १९७ ।।

(५) **नन्दनः।** अनध्याप्याध्यापनं **वेदविप्लावनम्** ।। १९७ ।।

(६) **रामचन्द्रः। वेदं विप्लाव्य** द्विजः अर्थान्तरव्याख्यानादिमिथ्यार्थमुक्त्वा अनध्यायेऽध्ययनं कृत्वा वा ।। १९७ ।।

(७) **मणिरामः। वेदं विप्लाव्य** अनध्याप्यं वेदमध्याप्य ।। १९७ ।।

(८) **गोविन्दराजः। शरणागतमिति।** शरणागतमपापं परित्राणार्थिनमागतं प्रायश्चित्तार्थं वा संप्राप्तं शक्तः सन्नपरित्यज्यानध्याप्यं च वेदमध्याप्य धनार्थं वा परीक्षास्थाने पर्यङ्कयोगपूर्वकं वेदैकदेशमुक्त्वा तज्जनितं पापं संवत्सरं यवभक्षो भूत्वा द्विजोऽपनुदति ।। १९७ ।।

(९) **भारुचिः।** एवं च सति विद्वद्भिः प्रायश्चित्ती शरणागतो न परित्यजनीयः, किं तर्हि देयमेव तस्य यथाशास्त्रं प्रायश्चित्तम्। अथवा लोकप्रसिद्ध एव शरणागतः तत्परित्यागे, उभयोर्वा। **वेदविप्लावनं** अनध्याप्याध्यापनं अनियोगदानं वा धनार्थम्। तथा च स्मृत्यन्तरम् 'दत्वानियोगाद्धनहेतोः पतितान्मनुरब्रवीदि'ति ।। १९७ ।।

**श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च ।।**
**नराश्वोष्ट्रवराहैश्च प्राणायामेन शुध्यति ।। १९८ ।।**

(१) **मेधातिथिः। दष्टो** दंष्ट्राभिः। **ग्राम्यैः क्रव्याद्भि**र्मार्जारनकुलादिभिः ।।१९८।।

(२) **सर्वज्ञनारायणः।** अग्राम्यैः **क्रव्याद्भि**र्वृकादिभिः ।। १९८ ।।

(३) **कुल्लूकः।** कुक्कुरशृगालगर्दभनराश्ववराहाद्यैर्ग्राम्यैश्चाममांसादैर्मार्जारादिभिर्दष्टः प्राणायामेन शुध्यति ।। १९८ ।।

(४) **राघवानन्दः। क्रव्याद्भिः** गृहमर्कटमार्जारादिभिः। **नरैः** पुंश्चलीवराहैः काकैः। प्राणायामेन जले स्थित्वेति शेषः। पुंश्चलीवानरखरैर्दष्टः श्वोष्ट्रादिवायसैः। 'प्राणायामं जले कृत्वा घृतं प्राश्य विशुध्यती'ति याज्ञवल्क्योक्तेः ।। १९८ ।।

(६) **रामचन्द्रः। क्रव्याद्भिः** वृकादिभिर्दष्टः ।। १९८ ।।

**[शुनाघ्रातोपलीढस्य दन्तैर्विदलितस्य च ।**
**अद्भिः प्रक्षालनं प्रोक्तमग्निना चोपचूलनम्]** ।। १ ।।

(७) **मणिरामः**। ग्राम्यैः क्रव्याद्भिः मार्जारादिभिः ॥ १९८ ॥

(८) **गोविन्दराजः**। **श्वसृगालखरैरिति**। श्वशृगालखरमनुष्याश्वोष्ट्रशूकरैर्ग्राम्यैश्चाममांसादैर्मार्जारादिभिर्दष्टः प्राणायामेन शुध्यति ॥ १९८ ॥

**षष्ठान्नकालता मासं संहिताजप एव वा ॥**
**होमाश्च शाकला नित्यमपाङ्क्त्यानां विशोधनम् ॥ १९९ ॥**

(१) **मेधातिथिः**। **अपांक्त्या**स्तृतीयाध्याय उक्ताः। येषां प्रतिपदं प्रायश्चित्तमन्यत्राम्नातम्। तेषां **मासं संहिताजपः**। **शाकल**होमः **षष्ठान्नकालता** चेति समुच्चयः। काष्ठशलाकादि'देवकृतस्य, (वाजसनेयिसंहिता ८।१३) इत्यादिभिर्मन्त्रैर्हूयते स 'शाकलहोमः'। **नित्यग्रहणं** समाप्तेऽपि संहिताजपे पुनः पुनरावृत्त्यर्थं, यावन्मासः पूर्णः ॥ १९९ ॥

(२) **सर्वज्ञनारायणः**। षष्ठान्नकालता एकभक्तपूर्वकदिनद्वयोपवासानन्तरं तृतीयदिनभोजनं मासपर्यन्तम्। संहिताजपः **संहिता** कस्याश्चिच्छाखाया मन्त्रभागः। शाकलहोमादेव कृतस्येत्यादिमन्त्रैर्यज्ञाङ्गवृक्षशकलहोमाः। **अपाङ्क्त्या** ये स्तेनपतितक्लीबा इत्यादिनोक्ताः। तेषां मध्ये अनुक्तनिष्कृतीनां मिलितमेतत्त्रयं शोधनम् ॥ १९९ ॥

(३) **कुल्लूकः**। **अपाङ्क्त्याः** ये स्तेनपतिताः क्लीबा इत्यादिनोक्तास्तेषां विशेषतोऽनुपदिष्टप्रायश्चित्तानां मासं त्र्यहमभुक्त्वा तृतीयेऽह्नि सायं भोजनं वेदसंहिताजपो देवकृतस्यैनसोऽवयजनमसीत्यादिभिरष्टभिर्मन्त्रैर्होमः प्रत्येकं कार्यः। एतत्समुद्दिष्टं पापशोधनम् ॥ १९९ ॥

(४) **राघवानन्दः**। किंच **षष्ठेति**। **अपाङ्क्त्यानां** स्तेनपतितक्लीबा इत्यादिनोक्तानां पङ्क्त्यभोजिनां विशेषतोऽनुद्दिष्टप्रायश्चित्तानाम्। **षष्ठान्नकालता** षष्ठस्यान्नस्य भोजनीयस्य यः कालः स एव भोजनकालो यस्य स तथा तस्य भावः। दिनद्वयमभुक्त्वा तृतीयदिने सायं भोजनतेति संहिता वेदस्य। देवकृतस्यैनसोऽवयजनमसि स्वाहेत्यादिकाः शाकलाहोमाः 'शाकलस्य तु ये होमा' इत्यनेनोक्ता वा ॥ १९९ ॥

(५) **नन्दनः**। देवकृतस्यैनस इत्यादिमन्त्रकृताः शाकलाहोमाश्च शब्दात्समुच्चितानां प्रायश्चित्तत्वं **अपाङ्क्त्याः** श्राद्धप्रकरणे प्रोक्ताः ॥ १९९ ॥

(६) **रामचन्द्रः**। षष्ठान्नकालता मासं दिनद्वयमुपोष्य तृतीयदिने सायं भुञ्जते इति प्राप्तं होमाश्च शाकलाः। देवकृतस्यैनस इत्यादिमन्त्राः। **अपाङ्क्तानां** अनुक्तप्रायश्चित्तानाम्। विशोधनम् ॥ १९९ ॥

(७) **मणिरामः**। मासपर्यंतं षष्ठान्नकालता त्र्यहमुपवासं कृत्वा तृतीयेऽह्नि सायं भोजनं होमाश्च शाकलाः देवकृतस्यैनसोऽवयजनमसीत्याद्यष्टभिर्मंत्रैर्होमाः। तथा चानेन कर्मणा अपांक्तेया अपि पांक्तेया भवंतीत्यर्थः ॥ १९९ ॥

(८) **गोविन्दराजः**। **षष्ठान्नकालतेति**। होमाश्च शाकला इति अपाङ्क्त्या ये स्तेनप्रतितक्लीबा इत्यादिनोक्तास्तेषां ये नाम्नातप्रतिपदप्रायश्चित्तास्तेषां मासं त्र्यहमभुक्ते

तृतीयेऽह्नि सायं भोजनं वेदसंहिताजपो देवकृतस्यैनसोऽवयजनमसीत्यादिभिर्यजुर्भिरष्टौ काष्ठ-शकलहोमाः प्रत्यहमित्येवमेतत् समुचितं विशोधनम् ।। १९९ ।। **उष्ट्रयान**मिति ।। १९९ ।।

**(९) भारुचिः । अपाङ्क्त्याः** स्तेनपतितादयः । तथा चोक्तम्, 'ये स्तेनपतितक्लीबा' इत्येवमादि । तेषां यान्यविहितप्रायश्चित्तान्यपङ्क्त्यकरणानि । तत्रेदं प्रायश्चित्तं पूगयाजनादौ । शाकलहोमानां च विकल्पः पूर्वेण नित्यवचनात् ।। १९९ ।।

**उष्ट्रयानं समारुह्य खरयानं तु कामतः ।।**
**स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन शुध्यति ।। २०० ।।**

**(१) मेधातिथिः । उष्ट्रैर्युक्तं यानं** गन्त्र्यादि । साक्षादुष्ट्रादावारोहणमव्यवधानेन चाधिकतरम् । प्राणायामानामावृत्तिः । **दिग्वासा** नग्नः । नग्नदोषनिर्हरणार्थं पुनः सवासाः स्नानं कृत्वा प्राणायामः कर्तव्यः ।। २०० ।।

**(२) सर्वज्ञनारायणः । उष्ट्रयान**मुष्ट्रयुक्तं तत्पृष्ठं वा यानम् । एवं खरयानम् । **दिग्वासा** नग्नः । **प्राणायामेन** गायत्र्या त्रिः पठितया ।। २०० ।।

**(३) कुल्लूकः ।** उष्ट्रैर्युक्तं यानं शकटादि एवं खरयानमपि तत्कामत आरुह्या-व्यवधान उष्ट्रखराभ्यां याने प्राणायामवहुत्वं नग्नश्च कामतः स्नानं कृत्वा प्राणायामेन शुद्धो भवति ।। २०० ।।

**(४) राघवानन्दः ।** किं च **उष्ट्रयान**मिति । **दिग्वासा** दिगम्बरः प्राणायामपर्यन्तम् ।। २०० ।।

**(६) रामचन्द्रः । दिग्वासा** नग्नः स्नात्वा चकारात् नग्नभोजनदिवास्त्रीगमनादि-निषेधः जलमध्ये प्राणायामेन शुध्यति ।। २०० ।।

**(७) मणिरामः । दिग्वासाः** नग्नो भूत्वा कामतः उष्ट्रखरोपरि समारुह्य ।। २०० ।।

**(९) भारुचिः ।** दण्डापूपिकया चोष्ट्रखरयोरव्यवधान एतदेव स्यात्, ईषदधिकं वा ।। २०० ।।

**विनाऽद्भिरप्सु वाऽप्यार्त्तः शारीरं सन्निषेव्य च ।।**
**सचैलो बहिराप्लुत्य गामालभ्य विशुध्यति ।। २०१ ।।**

**(१) मेधातिथिः । विनाऽद्भि**रसंनिहितास्वप्सु अदृष्टगोचरस्थासु । **अप्सु आर्त्तो** विष्ठया स्तब्धः । **शारीरं** मूत्रपुरीषोत्सर्गम् । **सन्निषेव्य । सचैलो** यत्प्रावृतं वस्त्रं तेन सहितः । **बहिर्ग्रामान्नद्यादावाप्लुत्य** निमज्य ततो **गामालभ्य** स्पृष्ट्वा **विशुध्यति** ।। २०१ ।।

**(२) सर्वज्ञनारायणः । विना अद्भिः** शौचाद्भिः असन्निहिते शौचार्थजल इत्यर्थः । **अप्सु** जलमध्ये **शारीरं** मूत्रपुरीषोत्सर्गम् । **आर्त्तः** आपत्काले अनापदि त्वन्यत्प्रायश्चित्तम् । **आलभ्य** स्पृष्ट्वा ।। २०१ ।।

(३) **कुल्लूकः** । असन्निहितजलो जलमध्ये वा वेगार्त्तो मूत्रं पुरीषं वा कृत्वा सवासा बहिर्ग्रामान्नद्यादौ स्नात्वा गां च स्पृष्ट्वा विशुद्धो भवति ।। २०१ ।।

(४) **राघवानन्दः** । **अद्भिर्**मलक्षालनं विना शारीरं विण्मूत्रादि संनिवेश्यार्त्तोऽपि क्षिप्त्वा । **बहिर्ग्रामान्नद्यादौ** । **आलभ्य** स्पृष्ट्वा ।। २०१ ।।

(५) **नन्दनः** । **आर्त्त** आपन्नः **शारीरं** मूत्रादिकं **अद्भिर्विना** संनिवेश्य जलरहितं कृत्वा अप्सु वा शारीरं संनिवेश्योत्सृज्य बहिर्ग्रामात् आर्त्तग्रहणात्तस्य प्रायश्चित्तगौरवं द्रष्टव्यम् ।। २०१ ।।

(६) **रामचन्द्रः** । अद्भिर्विना अविहितैः शौचार्थजलैः **शारीरं** मूत्रपुरिषादि **संनिषेव्य** कृत्वा बहिः सचैलः **आप्लुत्य** स्नात्वा गामालभ्य विशुध्यति ।। २०१ ।।

(७) **मणिरामः** । **शारीरं** मूत्रं पुरीषं वा **संनिवेश्य** कृत्वा **बहिः** ग्रामाद्बहिर्नद्यादौ **आलभ्य** स्पृष्ट्वा ।। २०१ ।।

(८) **गोविन्दराजः** । **विनाद्भिरप्सु वाप्यार्त्तः शारीरं संनिषेव्य त्विति** । असंनिहित उदके जलमध्ये वावेगार्त्तो मूत्रपुरीषे वा कृत्वा सवासा बहिर्ग्रामान्नद्यादौ स्नात्वा गां च स्पृष्ट्वा विशुध्यति ।। २०१ ।।

(९) **भारुचिः** । **जलग्रहणं च** सविधिस्नानार्थम् ।। २०१ ।।

## वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।।
## स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ।। २०२ ।।

(१) **मेधातिथिः** । **वेदोदितानां** दर्शपौर्णमासादीनां श्रौतानां, स्मार्तानां **च** संध्योपासनादीनाम् । तान्यपि **वेदोदितानि** तन्मूलत्वात्स्मृतीनाम् । **स्नातकव्रतानि** 'न जीर्णमलवद्वासा' इत्यादीनि । तेषां **लोप** एकाहमुपवासः । श्रौतकर्मातिक्रमे या **इष्टय** उक्तास्ता अनेन समुच्चीयन्ते ।। २०२ ।।

(२) **सर्वज्ञनारायणः** । **वेदोदितानामि**ति । वेदोक्तनित्यसंध्यादिकर्ममध्ये अनाम्नातप्रायश्चित्तकर्मलोपे । स्नातकव्रतेषु वैणवीं धारयेद्यष्टिमित्यादिषु अनाम्नातप्रायश्चित्तकर्मलोपे । **अभोजन**मेकरात्रमेव ।। २०२ ।।

(३) **कुल्लूकः** । वेदविहितानां **कर्मणा**मग्निहोत्रादिनामनुपदिष्टप्रायश्चित्तविशेषाणां च परिलोपे स्नातकव्रतानां चतुर्थाध्यायोक्तानामतिक्रमे सत्येकाहोपवासं प्रायश्चित्तं कुर्यात् ।। २०२ ।।

(४) **राघवानन्दः** । किंच **वेदेति** । **कर्मणां** होमसंध्यावन्दनादीनाम् । **अतिक्रमे** अकरणे कालतः स्वरूपतो वा । **स्नातकव्रतं** चतुर्थाध्यायोक्तम् । **अभोजनं** तदहरुपोषणम् ।। २०२ ।।

(५) **नन्दनः** । वेदोदितानामग्निहोत्रादीनां स्नातकव्रतानि **पञ्चमहायज्ञादीनि**।। २०२।।

(७) **मणिरामः**। अभोजनं एकाहम् ।। २०२ ।।

(८) **गोविन्दराजः**। **वेदोदितानामिति**। वेदविहितानां नित्यानां **कर्मणां** अग्निहोत्राणां अनाम्नातश्रौतविषयप्रायश्चित्तानां परिलोपे स्नातकव्रतानां च वैणवीं धारयेद्यष्टिमित्याद्युक्तानामकरणे उपवासः प्रायश्चित्तम् ।। २०२ ।।

(९) **भारुचिः**। **नित्यानां** प्रधानकर्मणामग्निहोत्रादिनामतिवर्तने **अभोजनम्**। श्रौतं च नानार्थत्वात् समुच्चीयते। गुणकर्मणां वा। **स्नातकव्रतलोपे** चानिर्दिष्टप्रायश्चित्तमिदमेव स्यात् ।। २०२ ।।

**हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारं च गरीयसः ।।**
**स्नात्वाऽनश्नन्नहःशेषमभिवाद्य प्रसादयेत् ।। २०३ ।।**

(१) **मेधातिथिः**। सक्रोधाक्षेपे हुंकारेण हुंकुरुते 'तूष्णीमास्व हुं मा एवं वादीः' इत्येवमादिष्वर्थक्रियासु तन्निषेधार्थं **हुंकारकरणम्**। **ब्राह्मणस्य** ज्येष्ठस्य समस्य कनीयसो वा शिष्यस्य पुत्रस्य वा। तथा **गरीयसस्त्वंकारमुक्त्वा**–'त्वमेवमात्थ,' 'त्वयेदं कृतम्'। एकवचनान्तयुष्मच्छब्दोच्चारणे प्रायश्चित्तमेतत्। प्रथमादिविभक्तिर्न विवक्षिता। तथा च समाचारो गुरौ युष्मास्वित्यादिबहुवचनं प्रयोक्तव्यमिति। **स्नात्वाऽनश्नम्** प्रातर्भक्तत्यागः। **अभिवाद्य** उपसंग्रहणं कृत्वा। **प्रसादयेत्** क्रोधं त्याजयित्वा सायमश्नीयात् ।। २०३ ।।

(२) **सर्वज्ञनारायणः**। **गरीयसो** गुरोरब्राह्मणस्यापि हुंकारं त्वंकारं चोक्त्वा तथाऽगरीयसोऽपि ब्राह्मणस्य तद्द्वयमुक्त्वा स्नात्वेत्यादिप्रायश्चित्तं कुर्यात्। **अहःशेषमहोरात्रस्य** शेषम् ।। २०३ ।।

(३) **कुल्लूकः**। हुं तूष्णीं स्थीयतामित्याक्षेपं ब्राह्मणस्य कृत्वा त्वङ्कारं च विद्याद्यधिकस्योक्त्वाऽभिवादनकालादारभ्याहःशेषं यावत्स्नात्वा भोजननिवृत्तः पादोपग्रहणेनापगतकोपं कुर्यात् ।। २०३ ।।

(४) **राघवानन्दः**। किंच **हुंकारेति**। **गरीयसो** गुरोः। अहःशेषं उपोषणं कृत्वेत्यर्थः। **अभिवाद्य** प्रणतिं कृत्वा। **प्रसादयेत्**तदात्मनि प्रसादमुत्पादयेत्। तथा च याज्ञवल्क्यः। 'गुरूं हुंकृत्य त्वंकृत्य विप्रं निर्जित्य वादतः। बध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनमि'ति ।। २०३ ।।

(५) **नन्दनः**। प्रसादयेत् ब्राह्मणं गरीयांसञ्च ।। २०३ ।।

(६) **रामचन्द्रः**। **गरीयसः** ज्येष्ठस्य ।। २०३ ।।

(७) **मणिरामः**। अहःशेषं यस्मिन् समये त्वंकारं हुंकारं च ब्राह्मणस्य कृतं तत आरभ्य आसायं स्नात्वा **अनश्नन्** भोजनरहितः अभिवाद्य पादोग्रहणं कृत्वा प्रसादयेत् ।।२०३।।

(८) **गोविन्दराजः**। **हुंकारमिति**। हुमित्येवं सरोषं ब्राह्मणस्योक्त्वा त्वमित्येवं च वित्ताद्यधिकस्योक्त्वैव एतत्करणकालावशिष्टमहरभुञ्जानः स्नानं कृत्वा तं पादोपसंग्रहणेन अपगतकोपं कुर्यात् ।। २०३ ।।

(९) **भारुचिः**। विशिष्टस्नानचोदनेयं नित्यादधिका निमित्तकीति विज्ञेया ।। २०३ ।।

**ताडयित्वा तृणेनापि कण्ठे वाबध्य वाससा ।।**
**विवादे वा विनिर्जित्य प्रणिपत्य प्रसादयेत् ।। २०४ ।।**

(१) **मेधातिथिः**। **तृणेन** पीटाकरेणापि **ताडयित्वा** प्रहृत्य। **वाससापि कण्ठे** मृदुस्पर्शेन **बद्ध्वा**। **विवादे** लौकिके कलहे **विनिर्जित्य**। **प्रणिपत्य** नम्रेण भूत्वा **प्रसादयितव्यः**। वादजल्पयोस्तु नायं विधिः ।। २०४ ।।

(२) **सर्वज्ञनारायणः**। वाससा कण्ठे बद्ध्वा संपदात्र वाल्वेयतत्कार्यंचिररात्रादिनियतः लघुगुरुनियमातिक्रमापेक्षया योज्यं अत्र प्रकृतयोर्ब्राह्मणगरीयसोः कर्मत्वेन ग्रहणम् ।। २०४ ।।

(३) **कुल्लूकः**। प्राकृतं ब्राह्मण तृणेनापि ताडयित्वा कण्ठे वाबद्ध्य वाससा वा वाक्कलहेन जित्वा प्रणिपातेन प्रसादयेत् ।। २०४ ।।

(५) **नन्दनः**। ताडयित्वा ब्राह्मणमित्येव ।। २०४ ।।

(७) **मणिरामः**। ब्राह्मणं तृणेनापीत्यादिकं कृत्वा प्रणिपत्य प्रसादयेत् ।। २०४ ।।

(८) **गोविन्दराजः**। **ताडयित्वेति**। विवादेनापीति। प्राकृतं ब्राह्मणं गरीयांसं च कोपात्तृणेनाप्याहत्य कण्ठे च वस्त्रेणाबध्य कलहे च जित्वा प्रणिपातेनापगतक्रोधं कुर्यात् ।। २०४ ।।

(९) **भारुचिः**। विवादश्च लौकिको वा कलहो विज्ञेयः, नेतरः, तस्य वादसंज्ञत्वात्। न परिहासतः ।। २०४ ।।

**अवगूर्य त्वब्दशतं सहस्रमभिहत्य च ।।**
**जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते ।। २०५ ।।**

(१) **मेधातिथिः**। अवगूरणप्रतिषेधोऽयम्। परिशिष्टोऽर्थवादः। **जिघांसया** हन्तुमिच्छया दण्डादिकमुद्यम्य। **संवत्सरशतं** नरकेष्वास्ते। **अभिहत्य** प्रहारं दत्वा। **सहस्रं** संवत्सराणाम्। **जिघांसया,** न परिहासतः ।। २०५ ।।

(२) **सर्वज्ञनारायणः**। **जिघांसया** मारणेच्छया। **अवगूर्य** दण्डाद्युद्यम्य। **अभिहत्य** दण्डादि निपात्य ।। २०५ ।।

(३) **कुल्लूकः**। ब्राह्मणस्य हननेच्छया दण्डमुद्यम्य वर्षशतं नरकं प्राप्नोति दण्डादिना पुनः प्रहृत्य वर्षसहस्रं नरकं प्राप्नोति ।। २०५ ।।

(४) **राघवानन्दः**। यो ब्राह्मणायावगुरेत्तं शतेन यातयादिति श्रुतिमाश्रित्य ब्राह्मणावगोरणादौ नरकं ज्ञापयन्प्रायश्चित्तमाह **अवगूर्येति** चतुर्भिः। **अवगूर्य** दण्डमुद्यम्य। **अब्दशतं** अब्दानां शतं अभिव्याप्य नरकं प्रतिपद्यते। एवमुत्तरत्र ।। २०५ ।।

(५) **नन्दनः**। ब्राह्मणावगुरादिषु प्रायश्चित्तं वक्तुं तन्निमित्तं पापफलं तावत् श्लोकाभ्यामाह **अवगूर्य त्वब्दशतमिति**। **अवगूर्य** प्रहर्तुं हस्तादिकमुद्धृत्य ।। २०५ ।।

(७) **मणिरामः**। **जिघांसया** अवगूर्य ब्राह्मणस्य मारणेच्छया दंडमुद्यम्य ।। २०५ ।।

(८) **गोविन्दराजः**। **अवगूर्येति**। ब्राह्मणस्य हननेच्छया दण्डाद्युद्यम्य वर्षशतं नरकं प्राप्नोति। दण्डादिना पुनः प्रहृत्य वर्षसहस्रं प्राप्नोति ।। २०५ ।।

**शोणितं यावतः पांसून्संगृह्णाति महीतले ।।**
**तावन्त्यब्दसहस्राणि तत्कर्ता नरके व्रजेत् ।। २०६ ।।**

(१) **मेधातिथिः**। ब्राह्मणस्य रुधिरं दण्डादिप्रहारेण भूमौ पतितं यावत्**पांसून्** रजोऽवयवान् संगृह्णाति **तावन्ति संवत्सरसहस्राणि तस्य** जनयिता **नरके व्रजेद्**वसेत्। अयमप्यर्थवादः ।। २०६ ।।

(२) **सर्वज्ञनारायणः**। **संगृह्णाति** संग्रहीतुं योग्यं भवति। **द्विजन्मनो** विप्रस्य। **तत्कर्ता** शोणितोत्पादकः ।। २०६ ।।

(३) **कुल्लूकः**। प्रहृतस्य ब्राह्मणस्य रुधिरं यावत्संख्याकान्रजःकणान्भूमौ पिण्डीकरोति तावत्संख्याकानि वर्षसहस्राणि तच्छोणितोत्पादको नरके वसेत् ।। २०६ ।।

(४) **राघवानन्दः**। दण्डादिनोत्पादितं संगृह्णाति पिण्डीकरोति ।। २०६ ।।

(५) **नन्दनः**। **द्विजन्मनः** द्विजोत्तमस्य ।। २०६ ।।

(७) **मणिरामः**। **शोणितं** ब्राह्मणस्य ।। २०६ ।।

(८) **गोविन्दराजः**। **शोणितं यावतः पांसून्संगृह्णाति द्विजन्मनः**। ब्राह्मणस्य प्रहृते सति तत्संबन्धिरुधिरं यत्सङ्ख्याकान् भूमौ रजःकणान् पिण्डीकरोति तत्संख्याकानि **वर्षसहस्राणि** तच्छोणितोत्पादयिता नरकं आस्ते ।। २०६ ।।

(९) **भारुचिः**। प्रायश्चितमिदानीं तस्य कर्मणो विवक्षन्निदमाह ।। २०६ ।।

**अवगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने ।।**
**कृच्छ्रातिकृच्छ्रौ कुर्वीत विप्रस्योत्पाद्य शोणितम् ।। २०७ ।।**

(१) **मेधातिथिः**। पूर्वस्य प्रायश्चित्तमेतत्। 'ब्राह्मणरुजः कृत्वेति' शोणितोत्पादनादन्यत्रैतत्। यदि वा तेनेदं विकल्प्यते ।। २०७ ।।

(२) **सर्वज्ञनारायणः**। फलमुक्त्वा प्रायश्चित्तमाह **अवगूर्येति**। **कृच्छ्रं** प्राजापत्यम्। **कृच्छ्रातिकृच्छ्रौ** पूर्वार्धोक्तौ ।। २०७ ।।

(३) **कुल्लूकः**। ब्राह्मणस्य हननेच्छया दण्डाद्युद्यमने कृच्छ्रं कुर्यात्। दण्डादिप्रहारे दत्तेऽतिकृच्छ्रं वक्ष्यमाणं चरेत्। रुधिरमुत्पाद्य कृच्छ्रातिकृच्छ्रौ कुर्वीत ।। २०७ ।।

(४) **राघवानन्दः**। उक्तेषु त्रिषु प्रायश्चित्तमाह **अवगूर्येति**। **अवगूर्य** दण्डमुद्यम्य ।। २०७ ।।

(५) **नन्दनः**। अत्र प्रायश्चित्तमाह **अवगूर्य चरेत्कृच्छ्रमिति** ।। २०७ ।।

(६) **रामचन्द्रः**। ब्राह्मणे **अवगूर्य** दण्डमुत्थाप्य कृच्छ्रं चरेत् ।। २०७ ।।

(७) **मणिरामः**। **निपातने** दंडनिपातने ।। २०७ ।।

(८) **गोविन्दराजः**। **अवगूर्येति**। ब्राह्मणस्य दण्डाद्युद्यम्य प्राजापत्यं कृच्छ्रं कुर्यात्। दण्डादिप्रहारं दत्त्वातिकृच्छ्रं वक्ष्यमाणं चरेत्। रुधिरमुत्पाद्य कृच्छ्रातिकृच्छ्रौ कुर्यात् ।। २०७ ।।

(९) **भारुचिः**। सर्वो ब्राह्मणादिवर्णः। "ब्राह्मणस्य रुजःकृत्य"मिति चैतज्जातिभ्रंशकरमध्य उपदिष्टम्। यतस्तदीयेन प्रायश्चित्तानां कृच्छ्रातिकृच्छ्रौ विकल्पितौ स्याताम् ।। २०७ ।।

**अनुक्तनिष्कृतीनां तु पापानामपनुत्तये ।**
**शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं प्रकल्पयेत् ।। २०८ ।।**

(१) **मेधातिथिः**। **अनुक्ता निष्कृतयः** प्रायश्चित्तानि येषां विकर्मणाम्। यथा चाण्डालादिप्रतिलोमवधे। तत्र कल्पयेत्। "ननु चात्राप्युक्तं 'किंचिदेव तु विप्राय दद्यादस्थिमतां वधे' इति"। अनस्थिसाहचर्यात्क्षुद्रजन्तुप्रायास्तत्रास्थिमन्तो गृह्यन्ते। महाकायानां तु नैष विधिः। "ननु चत्वारो वर्णा 'नास्ति पंचम' इति शूद्रप्रभेदा एव प्रतिलोमाः"। यदि नाम पंचमो वर्णो न जातो नैतावता शूद्रैस्तैर्भवितव्यम्। तेषामपि लक्षणस्य नियतत्वात् 'समानजात्यामूढायां जातः शूद्र' इति वर्णसंकरजाश्चैते। तस्मान्न शूद्रहत्याप्रायश्चित्तम्। नापि 'किंचिदेव तु विप्राय' इत्यन्यस्तत्र कल्पनाया अनवसरः। **शक्तिः** प्रायश्चित्तिनस्तपसि। तथा किमयं तपसि समर्थ उत दाने। **पापं च**। हिंसाया विहितप्रायश्चित्तमेव। अभक्ष्यभक्षणे तदेव। अथ पापस्य गुरुलघुभावोऽपेक्षणीयः। "ननु च गुरुलघुभावः पापस्य कथं ज्ञायते? प्रायश्चित्तमहत्त्वादिति चेत् अनुक्तप्रायश्चित्तविषयेयं कल्पना"। सत्यम्। अर्थवादे दोषातिशयश्रवणाद्गुरुत्वात्। तथा बुद्धिपूर्वानुकृते च। किंच नेदमनुक्तनिष्कृतिविषयमेव प्रकल्पयेत्, उक्तेऽपि कल्पना कार्या। कुत एतत्? दण्डप्रायश्चित्तयोस्तुल्यत्वात्। दण्डेन चोक्तानुक्तविषयमनुज्ञायते। किं चैतस्मिन् व्यतिक्रमे गुरुलघूनामुपदेशात्तत्रावश्यं भावनीया कल्पना। अत उद्दिष्टानुद्दिष्टसर्वशेषोऽयम् ।। २०८ ।।

(२) **सर्वज्ञनारायणः**। प्रायश्चित्तं कृच्छ्रादि **प्रकल्पयेत्** स्वयं विद्वानूहेत्। एतच्च सर्वं महापातकादिप्रायश्चित्तजातं शुद्धिदीपिकायां विषयव्यवस्थयास्माभिः प्रपञ्चेनोक्तमतोऽत्र पदार्थमात्रं प्रकाशितमिति ।। २०८ ।।

(३) **कुल्लूकः**। अनुक्तप्रायश्चित्तानां यथा प्रतिलोमवधादिकृतानां निर्हरणार्थं कर्तुः शरीरधनानि सामर्थ्यमवेक्ष्य पापं च ज्ञात्वा ज्ञानाज्ञानसकृदावृत्त्यनुबन्धादिरूपेण प्रायश्चित्तं प्रकल्पयेत् ।। २०८ ।।

(४) **राघवानन्दः**। निमित्तनैमित्तिकभावमुपसंहरन्प्रायश्चित्तस्वरूपं प्रतिजानीते **अनुक्तेति** द्वाभ्याम्। **अनुक्तनिष्कृतीनाम**ननुष्ठितप्रायश्चित्तानां प्रकल्पयेत् परिषदिति शेषः ।। २०८ ।।

(५) **नन्दनः।** **अनुक्तनिष्कृतीनाम**नुपदिष्टप्रायश्चित्तादीनाम् ।। २०८ ।।

(६) **रामचन्द्रः।** **अनुक्तनिष्कृतीनां** अनुक्तप्रायश्चित्तानां पापं विचार्य ।। २०८ ।।

(७) **मणिरामः। अनुक्तनिष्कृतीनां** पापानां प्रतिलोमवधादिकृतानाम् ।। २०८ ।।

(८) **गोविन्दराजः।** **अनुक्तनिष्कृतीनामिति।** अनुक्तप्रायश्चित्तानां पापानां प्रतिलोमवधादिकृतानां निर्हरणार्थं कर्तुः शरीरधनादि सामर्थ्य**मवेक्ष्य** पापं **च** ज्ञानाज्ञानसकृदसकृदावृत्त्यनुबन्धादिरूपेणावेक्ष्य वक्ष्यमाणप्रायश्चित्तं प्रकल्पयेत् ।। २०८ ।।

(९) **भारुचिः।** चाण्डालादीनां प्रतिलोमानां हिंसायामनुक्ता निष्कृतिः, अथवा कारणे कृतानुज्ञायां च नोक्ता निष्कृतिः, ब्राह्मणवधादिष्वायुधदानादिभिर्हन्तुः प्रीत्यर्थम्। एतेषु **शक्तिं चावेक्ष्य** साधनवयोऽवस्थाशरीरसामर्थ्यकृतामध्ययनविज्ञानादिकृतां **च** पापं **च** गुरुलघुताविशेषेण सप्रत्ययाप्रत्ययविशेषण च। सप्रत्ययेऽपि च क्रोधाद्यनुबन्धेन **प्रायश्चित्तं प्रकल्पयेदिति** अर्थः। परिषद्दशावरा त्र्यवरा वा। "अथवैकोऽपि वेदविद्धर्ममिति" वक्ष्यति ।। २०८ ।।

**यैरभ्युपायैरेनांसि मानवो व्यपकर्षति ।।**
**तान्वोऽभ्युपायान्वक्ष्यामि देवर्षिपितृसेवितान् ।। २०९ ।।**

(१) **मेधातिथिः।** "**ननु** चोक्ता एवाभ्युपायाः **इह चान्द्रयणं इह** प्राजापत्यं **इह द्वादशवार्षिकमिति**"। सत्यम्। संज्ञामात्रेण निर्दिष्टाः। इह तु स्वरूपं सेतिकर्तव्यताकमुच्यते। उपाय एवा**भ्युपायः। व्यपकर्षति** अपमार्ष्टि। **देवर्षी**त्यादिः स्तुतिः। **मानवग्रहणं** सर्ववर्णार्थम् ।। २०९ ।।

(२) **सर्वज्ञनारायणः।** **उपायैः** साधनैः ।। २०९ ।।

(३) **कुल्लूकः।** **यैर्हेतुभिर्मनुष्यः** पापान्यपनुदति **तान्पापनाशहेतून्देवर्षिपितृभिर**नुष्ठितान्युष्माकं वक्ष्यामि ।। २०९ ।।

(४) **राघवानन्दः।** **व्यपकर्षति** नाशयति देवर्षिपितृपदं भाविपरं तिर्यगधिकरणविरोधात् न तेषां प्राप्तदेवत्वानां तत्प्रायश्चित्ताधिकारः। सेवितान्निर्णीतान्वा ।। २०९ ।।

(६) **रामचन्द्रः।** मानवो यैरुपायैः **एनांसि** पापानि व्यपकर्षति **तानुपायान्** वः वक्ष्यामि देवर्षिपितृभिः सेवितान् ।। २०९ ।।

(७) **मणिरामः। यैरभ्युपायै** यैः हेतुभिः ।। २०९ ।।

(८) **गोविन्दराजः। यैरिति। यैः** साधनैर्मनुष्यः पापान्यपनुदति तानि साधनानि देवर्षिपितृभिः पापापनुत्यर्थं सेवितानि युष्माकं वक्ष्यामि ।। २०९ ।।

(९) **भारुचिः।** **मानव**ग्रहणं सर्ववर्णार्थम्। देवादिग्रहणं चाधर्मक्षयोपायस्तुत्यर्थम् ।। २०९ ।।

**त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।।**
**त्र्यहं परं च नाश्नीयात्प्राजापत्यं चरन्द्विजः ।।२१०।।**

(१) **मेधातिथिः** । यद्यप्यहर्मुखं 'प्रात'स्तथापि पूर्वाह्णकालो लक्ष्यते। द्वितीयाह्नकाल-प्रतिषेधादस्य। प्रातःकालविधौ हि यदृच्छया भोजनं प्राप्तं निवर्तते। केवलमत्यर्थे हि 'यत्पूर्वाह्णे वा मध्यंदिने वा मनुष्याणामिति' अयाचितत्वात्प्राप्तमर्थित्वाद्भोजनम्। तदेव चेत्प्रातःकाले विधीयते तदा माध्यंदिनं निवर्तेत, न सायंतनम्। अद्य पुनर्यदेव पौरस्त्यं पूर्वाह्णमध्यंदिनकालयो-र्विकल्पितयोः प्राप्तं भोजनं तदेव पुनरुच्यमानं कालान्तरनिवृत्त्यर्थं संपद्यते। व्रतत्वाच्चैतदेव युक्तम्। एकाहारता हि व्रतपरिगणनायां संख्यायते। तपश्चेदं तापयति दुःखयतीति। यदि च द्वितीयं भोजनं निवर्तते तत्र सायंतनं निवर्तेत। अन्ये तु 'हविष्यान् प्रातराशानिति' स्वल्पपरिमाणता भोजनस्य लक्ष्यत इत्याहुः। प्रातराशे हि स्वल्पं भुंजते। तच्छीलाः प्राकृत-पुरुषाः। तथा सिद्धे पाके भोजनात् प्राकृतभोक्तेति व्यपदिशन्ति। सायमिति वाऽपरस्मिन् त्र्यहे। ततोऽनन्तरं त्र्यहे हविष्यं वैदिकं यावद्भुज्यते तावदनुज्ञायते। उक्तं च स्मृतिकारैः 'ईषत् भुक्त्वाऽर्थं संविशेत्'। अयाचितेऽपि हविष्यभोजनमेककालिकं च। स्वगृहेऽपि 'दीयतां मे भोजनमिति' यत् भृत्यादय आज्ञायन्ते तदपि 'याचितमेव'। प्रार्थनामात्रं याञ्चा, प्रेषणाध्येषणयोः साधारणम्। अतः स्वगृहेऽपि यद्भार्यादयोऽननुज्ञाता उपहरन्ति तथा भोक्तव्यं, न त्वन्यथेति॥ २१०॥

(२) **सर्वज्ञनारायणः**। **प्रातः** प्रातरेव। एवं सायम्। तथा अयाचितं यद्ययाचितं लभ्यते। अलाभे तूपवासः॥ २१०॥

(३) **कुल्लूकः**। प्राजापत्याख्यं कृच्छ्रमाचरन्द्विजातिराद्यं दिनत्रयं प्रातर्भुञ्जीत। प्रातः-शब्दोऽयं भोजनानामौचित्यप्राप्तदिवाकालपरः। अत एव वसिष्ठः त्र्यहं दिवा भुङ्क्ते नक्तमत्ति च त्र्यहं त्र्यहमयाचितव्रतं त्र्यहं न भुङ्क्त इति च कृच्छ्रः। आपस्तंबोऽप्याह त्र्यहं नक्ताशी दिवाशी च ततस्त्र्यहं त्र्यहमयाचितव्रतस्त्र्यहं नाश्नाति किंचन इति कृच्छ्रद्वाद-शरात्रस्य विधिः अपरं च दिनत्रयं सायं सध्यायामतीतायां भुञ्जीत अन्यद्दिनत्रयमयाचितं तावदन्नं भुञ्जीत शेषं च दिनत्रयं न किञ्चिदश्नीयात्। अत्र ग्राससंख्यापरिमाणापेक्षायां पराशरः। सायं द्वात्रिंशतिर्ग्रासाः प्रातः षड्विंशतिस्तथा॥ अयाचिते चतुर्विंशत्परं चानशनं स्मृतम्॥ कुक्कुटाण्डप्रमाणं च यावांश्च प्रविशेन्मुखम्॥ एतं ग्रासं विजानीयाच्छुध्यर्थं ग्रासशोधनम्॥ हविष्यं चान्नमश्नीयाद्यथा रात्रौ तथा दिवा। त्रींस्त्रीण्यहानि शास्त्रीया-न्ग्रासान्संख्याकृतान्यथा॥ अयाचितं तथैवाद्यादुपवासस्त्र्यहं भवेत्॥ २१०॥

(४) **राघवानन्दः**। प्राजापत्यादिस्वरूपमाह पञ्चदशभिः। **त्र्यहं** **दिनत्रयं** व्याप्य। प्रातःशब्दोऽत्र दिवाभोजनोचितकालपरः। अत एव वसिष्ठः। त्र्यहं दिवा भुङ्क्ते नक्तमत्ति च त्र्यहं त्र्यहमयाचितं त्र्यहमभुक्त इति कृच्छ्रः। तत्र ग्राससंख्यापरिमाणोपादानानि परा-शरोक्तानि। सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिः स्मृताः॥ अयाचिते चतुर्विंशत्परं चानशनं स्मृतम्॥ कुक्कुटाण्डप्रमाणं तु यावान्वा प्रविशेन्मुखम्॥ एतं ग्रासं विजानीया-च्छुद्ध्यर्थं कायशोधनमिति ग्रासपरिमाणम्॥ हविष्यान्नः प्रातराशः सायमाशस्तथैव च। अयाचितं तथैवाद्यादुपवासस्त्र्यहं भवेदिति हविष्यान्नादेर्ग्रासोपादानद्रव्यम्॥ २१०॥

(५) **नन्दनः**। प्राजापत्याख्यं कृच्छ्रम् ।। २१० ।।

(६) **रामचन्द्रः**। प्राजापत्यमाह **त्र्यहमिति**। प्रातस्त्र्यहं नक्तं त्र्यहं अयाचितं अद्यात् । त्र्यहं परं नाश्नीयात् उपवासत्रयं एवं द्वादशदिनसाध्यं एकं प्राजापत्यव्रतं चरन् द्विजः अयाचितान्नं परकीयान्नं प्रातः स्वकीयान्नस्य पाचनम् ।। २१० ।।

(७) **मणिरामः**। प्राजापत्यलक्षणमाह ।। **त्र्यहमिति**।। प्राजापत्याख्यं कृच्छ्रं द्विजः दिनत्रयं प्रातः दिनत्रयं सायं दिनत्रयं अयाचितं अश्नीयात् । परं च दिनत्रयं न अश्नीयात्, एवं द्वादशदिनैः प्राजापत्याख्यं कृच्छ्रं भवति । प्रातःशब्दो दिवाभोजनोचितकालवाची । तथा च वसिष्ठः । त्र्यहं दिवा भुंक्ते नक्तमत्ति च त्र्यहम् । अयाचितव्रतं त्र्यहं न भुंक्त इति च कृच्छ्रः । अत्र ग्राससंख्यापरिमाणं पराशरोक्तं बोध्यं यथा "सायं द्वात्रिंशतिग्रासाः प्रातः षट्विंशतिस्तथा । अयाचिते चतुर्विंशत्परं चानशनं स्मृतम्" ।। कुक्कुटांडप्रमाणं व यावांश्च प्रविशेन्मुखम् । हविष्यं चान्नमश्नीयाद्यथा रात्रौ तथा दिवेति ।। २१० ।।

(८) **गोविन्दराजः**। **त्र्यहमिति**। प्राजापत्याख्यं कृच्छ्रं द्विजातिः कुर्वन् त्र्यहमाद्यं दिनादावश्नीयादपरं त्र्यहं दिनान्ते भुञ्जीत । अन्यं त्र्यहमप्रार्थितमुपनतं अद्यात्परं त्र्यहान्नं किंचिद्भक्षयेत् । अत्र हविष्यात्प्रातरसाविति गौतमस्मरणाद्धविष्यमदितव्यम् । ग्राससंख्या च । सायं च द्वादशग्रासाः प्रातः पञ्चदशस्मृताः । षट्त्रिंशतिरयाच्याः स्युः परं निरशनं स्मृतं इति पाराशरोक्त्या विज्ञेयम् ।। २१० ।।

**गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।।**
**एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम् ।।२११।।**

(१) **मेधातिथिः**। गोमूत्रादीनां कुशोदकानां समाहारमाहुरेकस्मिन्नहनि । **एकरात्रोपवासश्च**। ततो द्व्यहं **सांतपनम्**। अन्ये तु प्रत्यहमेकैकं भक्षयितव्यं, संहतस्याश्रुतत्वात् । अतः सप्ताहानि 'सांतपनम्'। द्वावप्येतौ पक्षौ स्मृत्यन्तरे परिगृहीतौ ।। २११ ।।

(२) **सर्वज्ञनारायणः**। क्षीरादि त्रयमपि गोरेव । **कुशोदकं** कुशमिश्रजलम् । एतत्सर्वं मिलितमेकस्मिन्दिने प्राश्योत्तरेद्युरुपवसेत् ।। २११ ।।

(३) **कुल्लूकः**। गोमूत्राद्येकीकृत्यैकैकस्मिन्नहनि भक्षयेन्नान्यत्किंचिदद्यात् । अपरदिने चोपवास इत्येतत्सान्तपनं कृच्छ्रं स्मृतम् । यदा तु गोमूत्रादिषट् प्रत्येकं षट्दिनान्युपभुज्य सप्तमे दिने चोपवासस्तदा महासान्तपनं भवति । तथा च याज्ञवल्क्यः ।। कुशोदकं च गोक्षीरं दधिमूत्रं शकृद्घृतम् ।। जग्ध्वा परेह्न्युपवसेत्कृच्छ्रं सान्तपनं चरन् ।। पृथक् सान्तपनद्रव्यैः षडहः सोपवासिकः ।। सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनं स्मृतम् ।। २११ ।।

(४) **राघवानन्दः**। सांतपनं लक्षयति **गोमूत्रमिति**। गोमूत्रादिषट्कं मिश्रयित्वा एकस्मिन् दिने भक्षयतोऽपरस्मिन् दिनोपवासेन सान्तपनं द्व्यहःसाध्यम् । एतदेव महासान्तपनं गोमूत्रादिप्रत्येकं प्रत्यहं भोजने एकोपवासश्च ।। कुशोदकं तु गोक्षीरं दधि मूत्रं शकृत् घृतम् । जग्ध्वा परेद्युपवसेत् कृच्छ्रं सान्तपनं चरेत् ।। पृथक् सान्तपनद्रव्यैः षडहः सोपवासकः ।। सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृत इति याज्ञवल्क्योक्तेः ।। २११ ।।

(५) **नन्दनः**। षडङ्गानि षडहानि यथाक्रमं गोमूत्रादीनद्यात् ।। २११ ।।

(६) **रामचन्द्रः**। गोमूत्रादीन् षडप्येकीकृत्य पीत्वा आहारान्तररहितस्तिष्ठेत् परेद्युरुपवसेदिति दिनद्वयसाध्यः कृच्छ्रः ।। २११ ।।

(७) **मणिरामः**। सांतपनकृच्छ्रमाह। गोमूत्रादिषडेकीकृत्य प्रथमदिने भक्षयेत् नान्यत्किंचित् अपरदिने उपवासः एतत्सांतपनाख्यं कृच्छ्रम्। यदि गोमूत्रादिकमेकैकं पृथक् षड् दिनेरुपभुज्य सप्तमे दिने चोपवासः तदा महासांतपनं भवति। तदुक्तं याज्ञवल्क्येन। पृथक् सांतपनैर्द्रव्यैः षडहः सोपवासकः, सप्ताहेन तु कृच्छ्रोऽयं महासांतपनं स्मृतं इति ।। २११।।

(८) **गोविन्दराजः। गोमूत्रमिति**। गोमूत्रं गोमयं गोक्षीरं गोदधि गोघृतदर्भक्वथितोदकानां प्रत्यहमेकं चोपवासं कुर्यात्। इत्येवं सप्ताहमेकस्मिन्नहन्येतानि सर्वाणि पिबेदेकं चोपवासं कुर्यात्। इत्येवं त्र्यहं याज्ञवल्क्य उभयदर्शनादित्येषः सांतपनाख्यः कृच्छ्रः स्मृतः ।। २११ ।।

(९) **भारुचिः**। कृच्छ्रसाध्यत्वात् कृच्छ्रप्रतिमोवचनाद् वा कृच्छ्रम् ।।२११।।

**एकैकं ग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्ववत् ।।**
**त्र्यहं चोपवसेदंत्यमतिकृच्छ्रं चरन्द्विजः ।। २१२ ।।**

(१) **मेधातिथिः। पूर्ववदिति** प्राजापत्यविधिमतिदिशति। एष्वेव कालेष्वेकैकं ग्रासमश्नीयात् ।। २१२ ।।

(२) **सर्वज्ञनारायणः। त्र्यहानि त्रीणि पूर्ववत्** त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमयाचितमिति ।। २१२ ।।

(३) **कुल्लूकः**। अतिकृच्छ्रं द्विजातिरनुतिष्ठन्प्रातः सायमयाचितादिरूपेणैकैकं ग्रासं **त्र्यहाणि** त्रीणि त्रीणि पूर्ववत् अथच्च त्र्यहं न किञ्चिद्भुञ्जीत ।। २१२ ।।

(४) **राघवानन्दः**। अतिकृच्छ्रं लक्षयति **एकेति। त्र्यहाणि** त्रीणि नवदिनानि। पूर्ववत् प्रातःसायमयाचितमिति पूर्वोक्तवत् ग्रासमत्र पाणिपूर्णान्नम्। अयमेवातिकृच्छ्रः स्यात्पाणिपूर्णान्नभोजन इति याज्ञवल्क्योक्तेः ।। २१२ ।।

(५) **नन्दनः। त्र्यहाणि** त्रीणि नवदिनानीत्यर्थः **पूर्ववत्**प्राजापत्यवत् ।। २१२ ।।

(६) **रामचन्द्रः**। त्रीणि त्र्यहाणि नवदिनानि च पूर्ववत् तु पुनः अन्यत्त्र्यहमुपवसेत्। एवं द्वादशदिनसाध्यमतिकृच्छ्रम् ।। २१२ ।।

(७) **मणिरामः**। अतिकृच्छ्रमाह **एकैकमिति**। अतिकृच्छ्रं द्विजः चरन् पूर्ववत् प्रातः सायमयाचितेन त्र्यहानि एकैकं ग्रासं अश्नीयात् अन्यं च त्र्यहं उपवसेत्। एवं षट् दिनैरतिकृच्छ्रो भवति ।। २१२ ।।

(८) **गोविन्दराजः। एकैकमिति**। त्र्यहं चोपवसेदन्यदिति। अतिकृच्छ्राख्यकृच्छ्

द्विजातिः कुर्वन् प्रातःसायमयाचितरूपेणैकैकं ग्रासं त्रीणि त्र्यहान्यश्नीयात्। अन्यच्च त्र्यहं न किञ्चिद्भुञ्जीत ।। २१२ ।।

**तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान् ।।**
**प्रतित्र्यहं पिबेदुष्णान्सकृत्स्नायी समाहितः ।। २१३ ।।**

(१) **मेधातिथिः**। तेष्वेव कालेषु जलादीनि यावता नातितृप्तिर्भवति। क्वचित्परिमाणं पठ्यते। 'अपां पिबेत्तु त्रिपलं पलमेकं तु सर्पिषः। पयः पिबेत्तु द्विपलं त्रिपलं चोष्णमारुतम्'। **सकृत्स्नायी**ति त्रिरह्नः त्रिनिशायामित्यस्यापवादः ।। २१३ ।।

(२) **सर्वज्ञनारायणः**। जलादिचतुष्टयस्यैकैकं त्र्यहं त्र्यहं पिबेत्। तस्योष्णत्वमग्निसमीपे व्यजनादिनोत्पादितव्यम् ।। २१३ ।।

(३) **कुल्लूकः**। तप्तकृच्छ्रं चरन्द्विजातिः त्र्यहमुष्णोदकं त्र्यहमुष्णक्षीरं त्र्यहमुष्णघृतं त्र्यहमुष्णवायुमेकवारं स्नानं कुर्वन्संयमवान्पिबेत्। अत्र पराशरोक्तो विशेषः ।। षट्पलन्तु पिबेदम्भस्त्रिपलन्तु पयः पिबेत् ।। पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते ।। २१३ ।।

(४) **राघवानन्दः**। तप्तकृच्छ्रं लक्षयति **तप्ते**ति। प्रतित्र्यहं प्रत्येकं द्रव्यं क्रमेण त्र्यहं पिबेदित्यन्वयः। अनिलपदमेकरात्रोपवासपरम्। सकृत्पिबेत्सकृत्स्नायाच्चेत्यन्वयः ।। तप्तक्षीरघृताम्बूनां प्रत्येकं प्रत्यहं पिबेत् ।। एकरात्रोपवासश्च तप्तकृच्छ्रं तु यावकमिति याज्ञवल्क्योक्तेः। द्रव्यपरिमाणं तु ।। षट्पलं तु पिबेदम्भस्त्रिपलं तु पयः पिबेत् ।। पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयत इति पराशरोक्तं सर्वत्र ।। २१३ ।।

(६) **रामचन्द्रः**। दुग्धसर्पिरुदकानां तप्तानामेकैकं प्रतिदिवसं पिबेत् परेद्युः उपवसेत्। एवं दिवसचतुष्टय [त्रय] साध्यं तप्तकृच्छ्रम् ।। २१३ ।।

**[अपां पिबेच्च त्रिपलं पलमेकं च सर्पिषः।**
**पयः पिबेत्तु त्रिपलं त्रिमात्रं चोक्तमानतः]** ।। १ ।।

(७) **मणिरामः**। तप्तकृच्छ्रमाह ।। **तप्तकृच्छ्रमिति**। उष्णान् जलक्षीरघृताऽनिलान्। **प्रतित्र्यहं** दिनत्रयमुष्णजलं त्र्यहमुष्णक्षीरं दिनत्रयमुष्णघृतं दिनत्रयमुष्णवायुं पिबेदित्यर्थः। स्नानं च प्रत्यहमेकवारं कुर्यात्। एवं द्वादशदिनैः तप्तकृच्छ्रो भवति। षट्पलं तु पिबेदंभः त्रिपलं तु पिबेत्पयः। पलमेकं पिबेत्सर्पिः तप्तकृच्छ्रं विधीयत इति पराशरोक्तः विशेषोऽपि ज्ञेयः ।। २१३ ।।

(८) **गोविन्दराजः**। **तप्तकृच्छ्रमिति**। तप्तकृच्छ्राख्यकृच्छ्रं ब्राह्मणादि कुर्वन् त्र्यहमुदकं क्षीरघृतवायूनुष्णानपां पिबेत्। त्रिपलं तु ह्यपः पीत्वा त्रिपलं तु पयः पिबेत्। सर्पिषः पलमेकं तु त्रिमात्रं चोष्णमारुतम्। इति पराशरोक्तपरिमाणानामेकवारं स्नानं कुर्वन् संयमवान् पिबेत्। उष्णमारुतं उष्णोदकं वा ।। २१३ ।।

**यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् ।।**
**पराको नाम कृच्छ्रोऽयं सर्वपापापनोदनः ।। २१४ ।।**

(१) **मेधातिथिः।** **यतात्मा** संयतेन्द्रियो गीतादिशब्दश्रवणेष्वनभिलाषी। **अप्रमत्तस्त**-त्परः। अर्थवादोऽयम्। सर्वकृच्छ्रेष्वस्य धर्मस्य विहितत्वात्॥ २१४॥

(२) **सर्वज्ञनारायणः।** **यतात्मनो** जितेन्द्रियस्य। **अप्रमत्तस्य** व्रताङ्गविस्मृतिशून्यस्य। एतच्च द्वयं पराके आवश्यकमङ्गमित्येतदर्थं साधारणमपि व्रताङ्गमुक्तम्॥ २१४॥

(३) **कुल्लूकः।** विगतानवधानस्य संयतेन्द्रियस्य द्वादशाहमभोजनमेव पराकाख्यः कृच्छ्रः। सकृदावृत्तितारतम्येन गुरुलघुसमफलपापापनोदनः॥ २१४॥

(४) **राघवानन्दः।** पराकं लक्षयति **यते**ति। **यतात्मनो** जितेन्द्रियस्य। सर्वपापनोदन इति गुरुतरानुक्तपापे प्रायश्चित्तातिदेशार्थम्॥ २१४॥

(५) **नन्दनः।** पराकशब्द उपवासवचनः॥ २१४॥

(६) **रामचन्द्रः।** द्वादशाहं अभोजनं द्वादशाहोपवासेन पराकाख्यः भवति॥ २१४॥

(७) **मणिरामः।** पराकाख्यकृच्छ्रमाह। **यतात्मन** इति॥ **यतात्मनः** यतेंद्रियस्य। **अप्रमत्तस्य** सावधानस्य॥ २१४॥

(८) **गोविन्दराजः।** **यतात्मान** इति। विगतान्नाभिलाषस्य संयतेन्द्रियस्य यत् द्वादशाहमभोजनं तत्पराकाख्यः कृच्छ्रः पापापेक्षया सकृदावृत्तितारतम्येन प्रकाशाप्रकाशगुरूलघु-सकलपापानामपनोदकः॥ २१४॥

(९) **भारुचिः।** स चायं कृच्छ्रातिकृच्छ्रो गौतमीयोऽभिहितः॥

**एकैकं ह्रासयेत्पिण्डं कृष्णे शुक्ले च वर्धयेत्॥**
**उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम्॥ २१५॥**

(१) **मेधातिथिः।** चतुर्दश्यामुपोष्य श्वोभूतायां पौर्णमास्यां पंचदश ग्रासानश्नीयात्। ग्रासप्रमाणं चास्याधिकारेण ग्रासानुमंत्रणे च 'आप्यायस्व सन्ते पयांसीति' (गौ० ५) स्मृत्यन्तरोक्तो विधिरपेक्षितव्यः। एकशास्त्रत्वात्सर्वस्मृतीनामसति विरोधे समग्रं योज्यम्। विरोधे तु विकल्पः। प्रतिपदमारभ्यैकैकं ग्रासं दिवसे दिवसे **ह्रासयेत्।** प्रतिपदि चतुर्दश द्वितीयायां त्रयोदशेत्यादि यावच्चतुर्दश्यामेको ग्रासो भवति। ततोऽमावस्यायामुपोष्य प्रतिपद्येकं ग्रास-मश्नीयात्। द्वितीयायां द्वावेवमेकैकं वर्धयेद्यावत्पौर्णमास्यां पञ्चदश भवन्ति। **उपस्पृशन्** स्नानं कुर्वन्। **त्रिषवणं** प्रातर्मध्यंदिनापराह्णेषु। 'त्रिर्निशायामिति' निवर्तते विशेषविहि-तत्वात्॥ २१५॥

(२) **सर्वज्ञनारायणः।** एकैकमिति पौर्णमास्यां पञ्चदशग्रासान्भुक्त्वा प्रतिपत्प्रभृत्येकैक-ग्रासापचयः। अमावास्यायां मध्ये उपोष्य प्रतिपदादि एकद्विक्रमेण ग्रासवृद्ध्या पौर्णमास्यां पञ्चदशग्रासा इत्यर्थः। **पिण्डः** ग्रासः॥ २१५॥

(३) **कुल्लूकः।** सायंप्रातर्मध्याह्नेषु स्नानं कुर्वाणः पौर्णमास्यां पञ्चदशग्रासानशित्वा ततः कृष्णप्रतिपत्क्रमेणैकैकं ग्रासं ह्रासयेत्तथा चतुर्दश्यामेको ग्रासः संपद्यते। ततोऽमावास्याया-

मुपोष्य शुक्लप्रतिपत्प्रभृतिभिरेकैकं ग्रासं वृद्धिं नयेदेवं पौर्णमास्यां पञ्चदशग्रासाः संपद्यन्ते । एतत्पिपीलिकामध्याख्यं चान्द्रायणं स्मृतम् ।। २१५ ।।

**(४) राघवानन्दः ।** चान्द्रायणस्य लक्षणमाह **एकैकेति** द्वाभ्याम् । पौर्णमास्यां पञ्चदशग्रासानशित्वा कृष्णपक्षप्रतिपत्क्रमेणैकैकं ग्रासं ह्रासयेदमावास्यायामुपोषणमेव । ततः शुक्लप्रतिपदारभ्य पौर्णमास्यन्तमेकैकक्रमेण पञ्चदशग्रासान्वर्धयेदिति । पिपीलिकामध्याख्यमिदं कृष्णपक्षादिनियतम् ।। २१५ ।।

**(५) नन्दनः ।** अथ चान्द्रायणमाह **एकैकमिति । कृष्णे** कृष्णपक्षे ।। २१५ ।।

**(६) रामचन्द्रः ।** शुक्ले एकं पिण्डं केवलं वर्धयेत् । **च** पुनः कृष्णे एकं पिण्डं ह्रासयेत् । **त्रिषवणं** त्रिकालस्नानं वसिष्ठः ।। एकैकं वर्धयेत्पिण्डं शुल्के कृष्णे च ह्रासयेत् । इन्दुक्षये न भुञ्जीत एष चान्द्रायणो विधिः ।। २१५ ।।

**(७) मणिरामः । चांद्रायणमाह । एकैकमिति ।।** त्रिषवणं उपस्पृशन् प्रातर्मध्याह्नसायंकालेषु स्नानं कुर्वाणः । **कृष्णे** कृष्णपक्षे । **शुक्ले** शुक्लपक्षे ।। २१५ ।।

**(८) गोविन्दराजः । एकैकमिति ।** सायंप्रातर्मध्याह्नेषु स्नानं कुर्यात् । पौर्णमास्यां पञ्चदशग्रासान् ग्रासप्रमाणं चास्याविकारेणेति गौतमोक्तप्रमाणानश्नीयात् । ततः कृष्णपक्षे प्रतिपत्प्रभृति एकैकग्रासापचयं कुर्यात् । यावच्च चतुर्दश्यामेकग्रासमश्नीयात्, अमावास्यायां चोपोष्य ततः प्रतिपत्प्रभृति शुक्लपक्ष एकैकं ग्रासं वृद्धिं नयेद्यावत्पौर्णमास्यां पञ्चदशेत्येतत् पिपीलिकामध्यं चान्द्रायणं चरेत् ।। २१५ ।।

**एतमेव विधिं कृत्स्नमाचरेद्यवमध्यमे ।।**
**शुक्लपक्षादिनियतश्चरंश्चान्द्रायणं व्रतम् ।। २१६ ।।**

**(१) मेधातिथिः । यवमध्यमे**ऽमावास्यायामुपोष्य प्रतिपद्येको ग्रासः । द्वितीयस्यां द्वौ यावत् पौर्णमास्यां पंचदश । पुनः प्रतिपदमारभ्य कृष्णपक्ष एकैकग्रासापचयो यावदमावास्यामुपवासः ।। २१६ ।।

**(२) सर्वज्ञनारायणः ।** अमावास्यायाः प्रतिपदाद्येकैकग्रासवृद्धया पञ्चदशग्रासान्पौर्णमास्यां भुक्त्वा एकैकापचयेन प्रतिपदादिषु दर्शेनोपवास इत्यर्थः ।। २१६ ।।

**(३) कुल्लूकः ।** एतमेव पिण्डह्रासवृद्धित्रिषवणस्नानात्मकं विधानं यवमध्याख्ये चान्द्रायणे शुक्लपक्षमादितः कृत्वा संयतेन्द्रियश्चान्द्रायणमनुतिष्ठन्नाचरेत् । ततश्च शुक्लप्रतिपदमारभ्यैकैकं पिण्डं वर्धयेत् । यथा पौर्णमास्यां पञ्चदशग्रासाः संपद्यन्ते ततः कृष्णप्रतिपदमारभ्यैकैकम् पिण्डं ह्रासयेद्यथाऽमावास्यायामुपवासो भवति ।। २१६ ।।

**(४) राघवानन्दः ।** शुक्लप्रतिपदारभ्य पौर्णमास्यन्तं पञ्चदशग्रासान्वर्धयित्वा ततः कृष्णप्रतिपदारभ्यैकैकं ग्रासं ह्रासयित्वाऽमावास्यायामुपोषणमिति यवमध्याख्यम् ।। तिथिवृद्धया चरेत्पिण्डान् शुक्ले शिख्यण्डसंमितान् ।। एकैकं ह्रासयेत्कृष्णे पिण्डं चान्द्रायणं चरन्निति याज्ञवल्क्योक्तेः ।। २१६ ।।

(५) **नन्दनः**। यवमध्याख्यचान्द्रायणमाह **एतमेवेति** ।। २१६ ।।

(७) **मणिरामः**। यवमध्याख्यचांद्रायणमाह। **एवमेवेति**। शुक्लपक्षादि शुक्लप्रतिपदमारभ्य एवमेव विधिं कृत्स्नं पिंडह्रासवृद्धित्रिषवणस्नानात्मकं यवमध्यचांद्रायणं **चरन्** व्रतं चरन् आचरेत् ।। तथा च शुक्लप्रतिपदमारभ्य एकैकं पिंड वर्द्धयेत् पौर्णमास्यां यथा पंचदश ग्रासा भवंति पुनः कृष्णप्रतिपदमारभ्य एकैकं ह्रासयेत यथा अमावास्यामुपवासो भवतीत्यर्थः ।। २१६ ।।

(८) **गोविन्दराजः**। **एतमेवविधिं कृत्स्नमाचरन्निति**। एवमेव पिण्डानां ग्रासवृद्धि त्रिषवणस्नानात्मकं विधानं यवमध्यमाख्यचान्द्रायणे शुक्लपक्षमादितः कृत्वा कृतनियमः एतद्यवमध्याख्यं चान्द्रायणव्रतमनुतिष्ठन् कुर्यात्। प्रतिपद्येकं ग्रासं द्वितीयायां द्वौ यावत्पौर्णमास्यां पञ्चदशाश्नीयात्ततः प्रतिपत्प्रभृति एकैकग्रासापचयं कुर्यात् यावच्चतुर्दश्यामेकः पश्चादमावास्यामुपवास इति ।। २१६ ।।

**अष्टावष्टौ समश्नीयात्पिण्डान्मध्यंदिने स्थिते ।।**
**नियतात्मा हविष्याशी यतिचान्द्रायणं चरन् ।। २१७ ।।**

(१) **मेधातिथिः**। प्रत्यहं मास**मष्टौ** ग्रासान् कृष्णपक्षाद्वाऽऽरभ्य शुक्लपक्षाद्वा **यतिचान्द्रायणं** भवति। **मध्यंदिने स्थिते** प्रवृत्ते। पूर्वाह्णापराह्णौ वर्जयित्वेत्यर्थः। शिष्टं प्रसिद्धम् ।। २१७ ।।

(२) **सर्वज्ञनारायणः**। अत्रापि मास इति वर्तते। हविष्याशीति सर्वव्रतसाधारणमप्यत्रोपदर्शितं अवश्यं काप्युपचयदर्शनीयत्वात् ।। २१७ ।।

(३) **कुल्लूकः**। यतिचान्द्रायणमनुतिष्ठन् शुक्लपक्षात्कृष्णपक्षाद्वाऽऽरभ्य मासमेकं संयतेन्द्रियः प्रत्यहमष्टावष्टौ ग्रासान् मध्यंदिने भुञ्जीत। मध्यंदिन इति गृहस्थब्रह्मचारिणोः सायंभोजननिवृत्त्यर्थम् ।। २१७ ।।

(४) **राघवानन्दः**। यतिचान्द्रायणं त्वाह **अष्टाविति**। कृष्णपक्षाच्छुक्लपक्षाद्वारभ्य मासमेकं प्रत्यहमष्टौ ग्रासान्हविष्यान्नस्य मध्यंदिनेऽश्नीयात् ।। २१७ ।।

(५) **नन्दनः**। यतिचान्द्रायणमाह **अष्टाविति**। हविष्यपिण्डानित्यन्वयः ।। २१७ ।।

(६) **रामचन्द्रः**। यतिचान्द्रायणं चरेत् ।। २१७ ।।

(७) **मणिरामः**। यतिचांद्रायणमाह ।। **अष्टाविति**। शुक्लपक्षात् कृष्णपक्षाद्वा आरभ्य मासमेकं मध्यंदिने प्रतिदिनमष्टावष्टौ ग्रासान् अश्नीयात् ।। २१७ ।।

(८) **गोविन्दराजः**। **अष्टाविति**। नियतात्मा हविष्यस्येति। यतिचान्द्रायणाख्यं चान्द्रायणं कुर्वन्विगतान्नगन्धो हविस्यस्य ओदनादेरष्टावष्टौ ग्रासान् मध्याह्नकाले समश्नीयात् ।। २१७ ।।

**चतुरः प्रातरश्नीयात्पिण्डान्विप्रः समाहितः ॥**
**चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतम् ॥ २१८ ॥**

(१) **मेधातिथिः।** अत्र प्रातःशब्दोऽस्तमयसाहचर्यात्सूर्योदयप्रत्यासन्नं कालं लक्षयति। **अस्तमिते सूर्ये** प्रदोष इत्यर्थः ॥ २१८ ॥

(२) **सर्वज्ञनारायणः।** चतुर इत्यत्रापि मास एवावधिः ॥ २१८ ॥

(३) **कुल्लूकः।** प्रातश्चतुरो ग्रासानश्नीयात् अस्तमिते च सूर्ये चतुरो ग्रासान्भुञ्जीत एतच्छिशुचान्द्रायणं मुनिभिः स्मृतम् ॥ २१८ ॥

(४) **राघवानन्दः।** शिशुचन्द्रायणं लक्षयति **चतुरि**ति। शिशुभोजनकाले प्रातस्त्रिघटिको ज्ञेय इति स्मृतेः ॥ २१८ ॥

(५) **नन्दनः।** शिशुचान्द्रायणमाह **चतुर** इति ॥ २१८ ॥

(६) **रामचन्द्रः।** चतुरः पिण्डान्प्रातरश्नीयात् चतुरोऽस्तमिते सूर्ये एतच्छिशुचान्द्रायणं भवेत् ॥ २१८ ॥

(७) **मणिरामः।** शिशुचांद्रायणमाह। **चतुर** इति ॥ २१८ ॥

(८) **गोविन्दराजः।** **चतुर** इति। शिशुचान्द्रायणाख्यं चान्द्रायणं ब्राह्मणादि कुर्वंश्चतुरो ग्रासान् दिनादौ चतुरश्चादित्येऽस्तंगते संयमितात्मा समश्नीयात् ॥ २१८ ॥

**यथाकथंचित्पिण्डानां तिस्रोऽशीतीः समाहितः ॥**
**मासेनाश्नन्हविष्यस्य चन्द्रस्यैति सलोकताम् ॥ २१९ ॥**

(१) **मेधातिथिः।** कस्मिंश्चिद्दिवसे चतुरो ग्रासान् कस्मिंश्चिद्द्वादश कस्मिंश्चिन्नाश्नाति **यथाकथंचित्** त्रिंशद्रात्री प्रवृत्तिः। यदि कस्मिंश्चित् षोडश। अयं तु नियमः **तिस्रोऽशीतीर्मासेने**ति द्वे शते चत्वारिंशदधिके। चंद्रलोकं प्राप्नोति ॥ २१९ ॥

(२) **सर्वज्ञनारायणः।** एकैकदिनभोज्यग्रासनियमं विना चत्वारिंशदधिकशतद्वयमित्यर्थं ग्रासानां मासेन भोजनात् अपरं चान्द्रायणम्। पिपीलिकमध्ये हि प्रथमे चान्द्रायणे पौर्णमास्यामारम्भे पञ्चदशग्रासा अधिका भुक्तास्तैः सह तिस्रोऽशीतयो भवन्ति तदपेक्षयैव यतिशिशुचान्द्रायणयोरत्र ग्रासाशीतित्रयोपयोगः। यवमध्ये तु पञ्चविंशत्यधिकग्रासशतद्वयमेव ॥ २१९ ॥

(३) **कुल्लूकः।** नीवारादिहविष्यसंबन्धिनां ग्रासानां द्वे शते चत्वारिंशदधिके कदाचिद्दश कदाचित्पञ्च कदाचित्षोडश कदाचिदुपवास इत्येवमाद्यनियमेन यथा कथंचित्पिण्डान्मासेन संयतवान्भुञ्जानश्चन्द्रलोकतां याति। एवं पापक्षयार्थमभ्युदयार्थं चेदमुक्तम्। अत एव याज्ञवल्क्यः। धर्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम्॥ कृच्छ्रकृच्छ्रर्मकामस्तु महतीं श्रियमाप्नुयात्॥ अतः प्राजापत्यादिकृच्छ्रमप्यभ्युदयफलमिति याज्ञवल्क्येनोक्तम् ॥ २१९ ॥

(४) **राघवानन्दः । यथाकथंचिच्छुक्लपक्षं** वारभ्य न त्वनियमेन व्रतस्य नियमरूपत्वात् । तिस्रोऽशीतीश्चत्वारिंशदधिकशतद्वयम् ॥ मेधातिथिस्त्वनियमपक्षः कदाचिच्चत्वारि कदाचिद्दशेति । **चन्द्रस्यैति सलोकतामित्यनेन** चान्द्रायणस्य काम्यत्वमपि धर्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकतामिति संवादात् ॥ २१९ ॥

(५) **नन्दनः ।** पिण्डवृद्धिह्रासौ भोजनकालनियमश्च पिण्डसंख्यानियमश्च नाश्रयणीय इति सूचितम् ॥ २१९ ॥

(६) **रामचन्द्रः ।** हविष्यं पिण्डानां तिस्रोऽशीतीः चत्वारिंशच्छतद्वयसङ्ख्याकं २४० मासेन अश्नन् चन्द्रस्य सलोकतामेति । अष्टौ प्रत्यहमश्नीयादित्यर्थः । चत्वारिंशच्छतद्वयं इति ज्ञेयम् ॥ २१९ ॥

(७) **मणिराम. । तिस्रोऽशीतीः** त्रिगुणाऽशीतिः । चत्वारिंशदधिकशतद्वयमिति यावत् । यथा कथंचित् अनियमेन पिंडानामशनं कदाचिदुपवासोऽपीति ज्ञेयम् ॥ २१९ ॥

(८) **गोविन्दराजः । यथाकथंचिदिति ।** निवारादि हविष्यान्नसंबन्धिनां हविष्याणां ग्रासानां च द्वे शते चत्वारिंशदधिके कदाचिदेकं कदाचित् पञ्च कदाचित्षोडश कदाचिदुपवास इत्येवमादि अनियमने यथाकथंचित् मासेन संयमवान् अश्नंश्चन्द्रलोकं प्राप्नोति । अतश्चाभ्युदयार्थमप्येतत्कार्यम् ॥ २१९ ॥

**एतद्रुद्रास्तथादित्या वसवश्चाचरन्व्रतम् ॥**
**सर्वाकुशलमोक्षाय मरुतश्च महर्षिभिः ॥ २२० ॥**

(१) **मेधातिथिः । एतच्चांद्रायणं व्रतं** सर्वे देवाः समाचेरुः, **सर्वेषामकुशलानां विमोक्षाय ।** न केवलं यत्रैवोक्तानुक्तेष्वपि द्रष्टव्यम् । तदुक्तं 'कृच्छ्रातिकृच्छ्रौ चांद्रायणमिति सर्वप्रायश्चित्तं सर्वप्रायश्चित्तम्' (गौ० १९।२०) । अत्रेदं संदिह्यते । यदेतत्सर्वप्रायश्चित्तवचनं किं तन्त्रेण सर्वेषां शोधनमुत योगसिद्धिन्यायेन प्रतिनिमित्तमावर्तत इति । उच्यते । यद्यप्येतन्न्याय्यं निमित्तावृत्तौ नैमित्तिकावृत्तिरिति तथापीदमनाम्नातप्रतिपदप्रायश्चित्तनिमित्तेष्वसंविदितेषु कृतसम्भावनायामाम्नायते । तत्र येषां तावत्सम्भावनामात्रेण शुद्धिः क्रियते, यथा संवत्सरस्यैकमपीति', तत्र निमित्तस्यानिश्चितत्वादुपपत्तेः कुत आवृत्तिसंभवः । यथा सुप्तस्य परिवर्तनैः शय्यागतसूक्ष्मप्राणिवधस्तथा नगरस्य रथ्यासु भ्राम्यतः परस्त्रीमुखसंदर्शनमा गृहप्राप्तेरसकृत् संभवति । तादृग्विषये तन्त्रभाव एव युक्तः । दर्शितं चैतत् 'अस्थन्वताम्' इत्यादौ समुदायवध एकं प्रायश्चित्तमिति । यानि च गरीयांसि पापानि तत्र सर्वत्र प्रायश्चित्तान्याम्नातानि । इदं च यथाप्रदर्शित एव विषये भवितुमर्हति । महत्त्वाच्च नानावृत्तौ न्याय्यम् । तस्मात् संशितेष्वपि कथंचित्प्रायश्चित्तेषु न निमित्तान्तरोत्पत्तौ युक्त एव तन्त्रभावः । तथा च तन्त्रधर्म एव न्याय्य इति दर्शयति 'यद्दिवा च नक्तं चैनश्च कृम तस्याऽवयजनमसि स्वाहा । यत्स्वपतश्च जाग्रतश्चैनश्च कृम तस्याऽवयजनमसि स्वाहा । यद्विद्वांस इत्यादि' । यदिति च वीप्सायां युगपदशेषपापवर्जन'मत्र वदन्ति' ॥ २२० ॥

(२) **सर्वज्ञनारायणः।** अकुशलं पापम् ॥ २२० ॥

(३) **कुल्लूकः।** एतच्चान्द्रायणाख्यं व्रतं रुद्रादित्यवसुमरुतश्च महर्षिभिः सह सर्वपापनाशाय गुरुलघुपापापेक्षया सकृदावृत्तिप्रकारेण कृतवन्तः ॥ २२० ॥

(४) **राघवानन्दः।** उक्तचान्द्रायणचतुष्टयेऽर्थवादमाह **एतदिति।** अत्र रुद्राद्याभाविवृत्त्यपेक्षया तथा च। श्रुतिः। अग्निर्वा अकामयत अन्नादोदेवानोमन्नादः स्यामिति ॥ सकृत्तिकाभ्योष्टाकपालं निरवपत् सोऽग्निरभवदित्यदष्टाकपालयागनिर्वापानन्तरं अग्निभावश्रुतेरिति। सर्वाकुशलमोक्षाय सर्वपापनिवृत्तये। पापोद्देश्यकव्रतानामपि नान्तरीयकामत्वं न विरुद्धमिति। तथा च श्रुतिः॥ यथाभ्रे निमित्ते छायागन्धावनुत्पद्येते एवं धर्मं वचिन्वानस्यार्थकामौ प्ररिध्यत इति॥ याज्ञवल्क्योऽपि॥ धर्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम्॥ कृच्छ्रकृच्छ्रमं कामस्तु महतीं श्रियमाप्नुयादिति ॥ २२० ॥

(५) **नन्दनः।** एतत्कृच्छ्रादिव्रतम् ॥ २२० ॥

(६) **रामचन्द्रः।** रुद्रादयः सर्वे अकुशलमोक्षाय ॥ २२० ॥

(७) **मणिरामः।** **एतत्।** चांद्रायणव्रतम्। **सर्वाऽकुशलमोक्षाय** सर्वपापनाशाय ॥ २२० ॥

(८) **गोविन्दराजः।** **एतदिति।** रुद्रादित्यवसुमरुदृषय **एतच्चान्द्रायणाख्यं** व्रतं प्रकाशाप्रकाशगुरूलघुसकलपापापनोदाय पापापेक्षया सकृदावृत्तितारतम्येन कृतवन्तः ॥ २२० ॥

**महाव्याहृतिभिर्होमः कर्तव्यः स्वयमन्वहम् ॥**
**अहिंसा सत्यमक्रोधमार्जवं च समाचरेत् ॥ २२१ ॥**

(१) **मेधातिथिः।** सर्वेष्वेतेष्वितिकर्तव्यतेयमुच्यते। सर्वहोमेष्वाज्यंद्रव्यमनुपात्ते द्रव्यविशेषे दर्शितम्। **स्वयंग्रहणात्**परकर्तृकता निवर्तेत। किंपुनरयं होमो लौकिकेऽग्नावनावसथ्यस्य भवति नेति विचार्यते। इदमेव तावद्विचार्यं कृताऽग्नौ होमः। प्रक्षेपावधिकस्त्यागो जुहोतेरर्थः। तत्र यस्मिन् कस्मिंश्चिदाधारे प्रक्षेपणे सिध्यत्येव 'होमः'। ततश्च स्थले जले वाऽग्नौ वा क्रियतां होमो गृह्याग्निमतस्तु न लौकिकेऽग्नौ होमः, ग्राम्याग्नौ तस्य तद्धोमप्रतिषेधात्। समाचारादग्निसिद्धिरिति चेरसमाचार एव तर्ह्यन्विष्यताम्। गृह्यकारैस्तत्प्रणीताग्न्यधिकारैः कृच्छ्रविधिषु होम आम्नातः। तद्दर्शनेनानावसथ्यस्य प्रायश्चित्ते नाहोमकाः कृच्छ्राः। अभ्युदयार्थिनस्तु नैवानग्निकस्य सन्ति, सर्वाङ्गोपसंहारेण फलसिद्धेः। **अहिंसा।** शिष्यभृत्याद्यपि ताड्यं न ताडनीयम्। **सत्यं** नर्मणाऽपि नानृतम्। यदि वा पुरुषार्थतया प्राप्तयोरङ्गत्वाय विधानम्। **आर्जवमक्रूरता** ॥ २२१ ॥

(२) **सर्वज्ञनारायणः।** चान्द्रायणव्रतान्याह **महाव्याहृतिभिरिति।** तिसृभिः समस्ताभिरित्यर्थः। आज्यं हविरनादेश इतिवचनादाज्येन होमः। **आर्जवम**वक्रताम् ॥ २२१ ॥

(३) **कुल्लूकः।** **महाव्याहृतिभि**र्भूर्भुवः स्वरेताभिः आज्यं हविरनादेशे जुहोतिषु

विधीयत इति परिशिष्टवचनादाज्येन प्रत्यहं होमं कुर्यात् अहिंसा सत्याक्रोधाकौटिल्यानि चानुतिष्ठेद्यद्यप्येतानि पुरुषार्थतया विहितानि तथापि व्रताङ्गतयायमुपदेशः ।। २२१ ।।

**(४) राघवानन्दः** । प्राजापत्यानां सर्वेषामुत्तराङ्गमाह व्याहृतीति चतुर्भिः । व्याहृत्यादिपञ्चकमाचरेदनुतिष्ठेत् ।। २२१ ।।

**(५) नन्दनः** । अथ व्रतधर्मानाह महेति ।। २२१ ।।

**(६) रामचन्द्रः** । कृच्छ्रचान्द्रायणनियमानाह **महाव्याहृतिरिति** । महाव्याहृतिभिः समस्ताभिः ॐ भूः स्वाहा ॐ भुवः स्वाहा ॐ स्वः स्वाहा आभिर्होमः कर्तव्यः ।। २२१ ।।

**(७) मणिरामः** । उक्तसर्वव्रते नियमानाह । **महेत्यादिना** । **महाव्याहृतिभिः** भूर्भुवःस्वरित्येताभिः । होमः आज्येन । 'आज्यं हविरनादेश' इत्युक्तत्वात् ।। २२१ ।।

**(८) गोविन्दराजः** । महाव्याहृतिभिरिति । **महाव्याहृतिभिर्भूर्भुवः** स्वरित्येताभिः 'आज्ये हविरनादेश' इति सूत्रकारवचनात् आज्येन स्वयं प्रत्यहं होमं कुर्यात् । अहिंसासत्यमक्रोधाकौटिल्यानि पुरुषार्थतयोक्तान्यपि व्रताङ्गतयानुतिष्ठेत् ।। २२१ ।।

**त्रिरह्नस्त्रिर्निशायां च सवासा जलमाविशेत् ।।**
**स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित् ।। २२२ ।।**

**(१) मेधातिथिः** । **त्रिरह्न** इति 'सवनेष्वनुसवनमुदकोपस्पर्शनमिति' (२६।१०) गौतमः । **निशायामपि** त्रिषु यामेषु महानिशां वर्जयित्वा तदवधि न हि अस्ति स्नानकालः । यदेव वासोयुगमाच्छादनार्थमौचित्यप्राप्तं तेनैव सह **जलं** प्रविशेत् । **आविशेदिति** नोद्धृतोदकेनेत्यर्थः । **स्त्रियो** ब्राह्मणीरपि **नाभिभाषेत,** अन्यत्र मातृज्येष्ठभगिन्यादिभ्यः । भार्यया सह कर्मोपयोगी संलापो न निषिध्यते । अन्यस्तु न कर्तव्य एव ।। २२२ ।।

**(२) सर्वज्ञनारायणः** । **त्रिरह्नः** आदिमध्यान्तेषु । एवं निशायाः । एतच्च न पिपीलिकमध्ये तत्र त्रिषवणोक्तेः । नापि यवमध्ये तत्र पूर्वधर्मातिदेशात् । तथा न तप्तकृच्छ्रसकृत्स्नायीत्युक्तेः ।। २२२ ।।

**(३) कुल्लूकः** । अहनि रात्रावादिमध्यावसानेषु स्नानार्थं सचैलो नद्यादिजलं प्रविशेत् । एतच्च पिपीलिकामध्ययवमध्यचान्द्रायणेतरचान्द्रायणविषयम् । तयोरुपस्पर्शं त्रिषवणमित्युक्तत्वात् स्त्रीशूद्रपतितैश्च सह यावद्व्रतं कदाचित्संभाषणं न कुर्यात् ।। २२२ ।।

**(४) राघवानन्दः** । त्रिस्त्रिरिति वीप्सा । **अन्हः** प्रातःकाले **निशायां** सायंकाले मध्याह्ने च प्रत्यहं स्नानत्रयं कुर्यात् । तेन न्यूनातिरिक्तसंख्याव्यवच्छेदः । सचेलत्वादिगुणविधिः । एतत्तु चान्द्रायणद्वयाङ्गमिति केचित् । तत्र तप्तकृच्छ्रातिरिक्ते सर्वत्र ।। कुर्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा ।। पवित्राणि जपेत्पिण्डान्गायत्र्या चाभिमन्त्रयेदिति याज्ञवल्क्योक्तेः ।। पिण्डान् ग्रासान् तेष्वेवमित्युपसंहारदर्शनाच्च सन्निधेः प्रकरणस्य । बलवत्वात् । अन्यथा सर्वशब्दपीडा स्यात्सर्वव्रतशेषत्वात्स्नानस्य उपस्पृश स्त्रिषवणमिति वक्ष्यमाणमनुवादमात्रं य एवं विद्वान्पौर्णमासी यजत इतिवत् ।। २२२ ।।

**(५) नन्दनः।** कर्हिचिदापद्यपि ॥ २२२ ॥

**(६) रामचन्द्रः।** त्रिः अह्नः त्रिः निशायां प्रातःसायं जलं आविशेत् स्नायादित्यर्थः ॥ २२२ ॥

**(७) मणिरामः।** अह्नः त्रिः निशायाश्च त्रिः अहोरात्रौ अस्तमध्याऽवसानेषु स्नानार्थं सवासाजलं प्रविशेत् ॥ २२२ ॥

**(८) गोविन्दराजः।** त्रिरह्नस्त्रिर्निशायां इति। अह्नो रात्रेश्चारंभमध्यावसानेषु स्नानार्थं सचैलो नद्यादौ प्रविशेदेतच्च पिपीलिकामध्यचान्द्रायणवर्जं तत्रोपस्पृशं स्त्रिषवणनित्युक्तत्वात् स्त्रीशूद्रपतितैश्च सहसं भाषणं न कदाचिद्यावद्व्रतं कुर्यात् ॥ २२२ ॥

**स्थानासनाभ्यां विहरेदशक्तोऽधः शयीत वा ॥**
**ब्रह्मचारी व्रती च स्याद्गुरुदेवद्विजार्चकः ॥ २२३ ॥**

**(१) मेधातिथिः।** उत्थित आसीन उपविष्टोऽथवा। न क्वचिन्निषीदेत्। अशक्तावधः **शयीत,** न पर्यङ्के। **ब्रह्मचारी** मैथुननिवृत्तः। **व्रती** शिष्टप्रतिषिद्धेषु नियमं गृह्णीयादिदं मया न कर्तव्यमिति। गुर्वादीनामर्चा प्रणतेन स्रगनुलेपनाद्युपहर्तव्यम् ॥ २२३ ॥

**(२) सर्वज्ञनारायणः। स्थानमु**त्थितत्वम्। **आसनमु**पवेशनम्। **विहरेत्** कालं नयेत्। यथा गौतमः। तिष्ठेदहनि रात्रावासीतेति। **अधो** भूमौ। **ब्रह्मचार्य**ष्टाङ्गमैथुननिवृत्तः। **व्रती** मौञ्जीदण्डकमण्डलुरग्निकार्यं चेति शङ्खोक्तव्रताङ्गकारी ॥ २२३ ॥

**(३) कुल्लूकः।** अहनि रात्रौ चोत्थित आसीनः स्यान्न तु शयीत। असामर्थ्ये तु स्थण्डिले शयीत न खट्वादौ। **ब्रह्मचारी** स्त्रीसंयोगरहितव्रतः **व्रती** मौञ्जीदण्डादियुक्तः। पालाशं धारयेद्दण्डं शुचिर्मौञ्जीं च मेखलामिति यमस्मरणात्। गुरुदेवब्राह्मणानां च पूजको भवेत् ॥ २२३ ॥

**(४) राघवानन्दः।** किंचान्यत् **स्थानेति**। विहरेन्न शयीत शक्तः सन्। अशक्तः शयीतेति भावः ॥ २२३ ॥

**(५) नन्दनः। विहरेत्**कालक्षेपं कुर्यात् ॥ २२३ ॥

**(६) रामचन्द्रः।** अशक्तः **अधः** भूमौ शयीत ॥ २२३ ॥

**(७) मणिरामः।** स्थानासनाभ्यां विहरेत् अहनि रात्रौ च उत्थित एव स्यात् नतु शयीत। असामर्थ्ये तु अधः शयीत नतु शय्यायम् ॥ २२३ ॥

**(८) गोविन्दराजः। स्थानासनाभ्यामिति।** तिष्ठेदहनि रात्रौ आसीन इति गौतमस्मरणाद्दिवास्थितो रात्रावासीनो वर्तेतासामर्थ्याद्वा स्थण्डिलशायी स्यात्। स्त्रीसंप्रयोगरहितो व्रती च मौञ्जीदण्डकमण्डलुरग्निकार्यं चेति शङ्खदर्शनान्मेखलादियुक्तो गुरुदेवब्राह्मणानां पूजकः स्यात् ॥ २२३ ॥

**सावित्रीं च जपेन्नित्यं पवित्राणि च शक्तितः ।।**
**सर्वेष्वेव व्रतेष्वेवं प्रायश्चित्तार्थमादृतः ।। २२४ ।।**

(१) **मेधातिथिः ।** **सावित्री** "तत्सवितुरिति" गायत्री । सवितृदेवत्वाज्जपचोदनासु सावित्रीशब्देन तस्याः सर्वत्राधिकारः । **पवित्राण्य**घमर्षणपावमानीपुरुषसूक्तादीनि शुक्रिया-ध्यायाजनरौहिणेयादीनि सामानि । **सर्वेषु** सर्वकृच्छ्रेषु । **आदृतो** यत्नवान् । सर्वेष्वित्या-दिश्लोकपूरणस्तथाविधस्यैवाधिकारात् ।। २२४ ।।

(२) **सर्वज्ञनारायणः ।** **जपेन्नित्यं** दिवा रात्रौ च । पावनानि पवित्राण्यस्य वामी-यादीनि । व्रतान्तरेष्वप्येतदिति सर्वेष्विति । एवमुक्त्वा भुंजीत काम्येष्वपि प्राजापत्यादिषु तथा प्रायश्चित्तार्थेष्वपि कुर्यात् ।। २२४ ।।

(३) **कुल्लूकः ।** सावित्रीं च सदा जपेत्पवित्राणि चाघमर्षणादीनि यथाशक्ति जपेत् । एतच्च यथा चान्द्रायणे तथा प्राजापत्यादिकृच्छ्रेष्वपि यत्नवान्प्रायश्चित्तार्थमनुतिष्ठेत् ।।२२४।।

(४) **राघवानन्दः ।** किंच सेति । **पवित्राण्य**घमर्षणादीनि आदृतः श्रद्धालुः प्रायश्चित्तार्थं तत्सहकारितया जपेदित्यन्वयः । अत एव न व्रतेषु शूद्रस्याधिकारः किंतु तपः शूद्रस्य सेवन-मिति वक्ष्यति । अत एवोक्तम् । न शूद्रे पातकं किंचित् । प्रातिस्विकपापानुरूपप्रायश्चित्ता-दर्शनान्नमो मंत्रजपो वा ।। २२४ ।।

(५) **नन्दनः ।** **पवित्राणि** पावमान्यादीनि ।। २२४ ।।

(६) **रामचन्द्रः ।** पवित्राणि शक्तितः अस्य वामीयादीन् मन्त्रान् जपेत् एवं सर्वेषु प्रायश्चित्तार्थं आदृतः ।। २२४ ।।

(७) **मणिरामः ।** **पवित्राणि** अघमर्षणादीनि ।। २२४ ।।

(८) **गोविन्दराजः ।** **सावित्रीमिति ।** सावित्रीं च सर्वदा रात्रावपि जपेत्पवित्राणि यथाशक्ति जपेत् । एवं कृच्छ्रादिष्वपि सर्वेषु यत्नवान् प्रायश्चित्तार्थं महाव्याहृतिभिर्होमादि सर्वं कुर्यात् । तप्तकृच्छ्रेषु षट्सवनं स्नानमतिदेशकं न प्रवर्तते सकृत्स्नायीत्यैपदेशिकविरो-धात् ।। २२४ ।।

**एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः ।।**
**अनाविष्कृतपापांस्तु मन्त्रैर्होमैश्च शोधयेत् ।। २२५ ।।**

(१) **मेधातिथिः ।** **आविष्कृतं** प्रकाशं लोकविदितमेनः पापं येषाम् । **एतैः** कृच्छ्रैः **शोध्याः** । ये तु रहस्यपापास्तेषां न कृच्छ्रतपांसि । किं तर्हि? **मन्त्रैर्होमैश्च शोधयेत्** । रहस्येषु नास्ति परिषद्गमनमाविष्कृतं न स्यात् । विदुषां हि तत्राधिकारः । उच्यते । न प्रायश्चित्त-मनागतं शोधयेदित्युच्यते, अपि तु शास्त्रव्याख्यानकाले शिष्याणामुपदेशादिदं रहस्येषु शोधनं बोद्धव्यमिति ।। २२५ ।।

(२) **सर्वज्ञनारायणः ।** **आविष्कृतैनसः** प्रख्यातपापाः । **अनाविष्कृतपापाः** तत्पाप-

हेतुकर्माविनाभूतव्यतिरिक्तैरज्ञातपापास्तान्मन्त्रैर्होमैश्च शोधनैः पावनतया विहितैः। एवं च परस्त्रीगमनादौ तत्क्रियाविनाभूतया परस्त्रिया तज्ज्ञानेऽपि न रहस्यत्वाभावः तदन्येन तु कर्तृव्यतिरिक्तेन ज्ञाते रहस्यत्वमपैति ॥ २२५ ॥

(३) **कुल्लूकः**। लोकविदितपापाद्विजातय एभिरुक्तप्रायश्चित्तैर्वक्ष्यमाणपरिषदा। अप्रकाशितपापांस्तु मानवान्मन्त्रैर्होमैश्च परिषदेव शोधयेत्। यद्यपि परिषदि निवेदने रहस्यत्वस्य नाशः तथाप्यमुकपापे कृते केनापि लोकाविदिते किं प्रायश्चित्तं स्यादिति सामान्यप्रश्ने न विरोधः ॥ २२५ ॥

(४) **राघवानन्दः**। प्रकटपापिनां व्रतान्युपसंहरन्प्रच्छन्नपापस्य प्रायश्चित्तमुपदिशंस्तपः श्रैष्ठ्यमाह **एतैरित्येकोविंशत्या**। **अनाविष्कृतपापान्** स्त्रीपुंमिथुनातिरिक्ताविदितान्। **एतस्य पापस्येदं** प्रायश्चित्तमिति परोक्षवादेन पृष्ठापरिषन्मन्त्राद्युपदेशेन शोधयेदिति शेषः ॥ २२५ ॥

(५) **नन्दनः**। यान्येतानि व्रतान्युपदिष्टानि तानि प्रकाशितानां प्रायश्चित्तमप्रकाशितानां जपहोमादय इत्याह **एतैरिति** ॥ २२५ ॥

(६) **राघवानन्दः**। **आविष्कृतैनसः** लोकविदितैनसः **एतैः** तैर्द्विजातयः संशोध्याः। तु पुनः **अनाविष्कृतपापान्** रहस्याचरितपापान् मन्त्रैर्होमैः शोधयेत् ॥ २२५ ॥

(७) **मणिरामः**। **आविष्कृतैनसः** लोकविदितपापाः **अनाविष्कृतपापास्तु** अप्रकाशितपापास्तु ॥ २२५ ॥

(८) **गोविन्दराजः**। **एतैरपि**। एभिरुक्तैरुपायैः प्रायश्चित्तैर्लोकविदितपापा द्विजातयो वक्ष्यमाणपर्षदा शोधनीयाः। अप्रकाशवधं पुना रहस्यत्वविनाशपरिहाराच्छिष्यत्वादि व्यपदेशेनायतान्वक्ष्यमाणैर्जपहोमैः पर्षच्छोधयेत् ॥ २२५ ॥

(९) **भारुचिः**। सप्तदशश्लोकाः कृच्छ्रादिशुध्यर्थाः ऋज्वर्थत्वान्न व्याख्याताः। **यथा कथञ्चिदिति** प्रकृतानुवादो, न विध्यन्तरोपदेशः। **अनाविष्कृतपापान्** मन्त्रान् होमांश्च वक्ष्यति ॥ २२५ ॥

**ख्यापनेनानुतापेन तपसाऽध्ययनेन च ॥**
**पापकृन्मुच्यते पापात्तथा दानेन चापदि ॥ २२६ ॥**

(१) **मेधातिथिः**। **विप्राणां** विदितेऽन्येषामप्ये'वंकर्माऽस्मीति' प्रकाशयेत् **एतत्ख्यापनम्**। **अनुताप**। तस्मात्तापो वैमनस्यम्–'धिङ्मां महदकार्यमकरवमनर्थो मे दुष्कृतकारिणो जन्मे'त्येवमादिः चित्तपरिखेदः। **अध्ययनं** सावित्र्या जपो वेदपाठो वाहिंसायाम्। अन्यत्र। असमर्थस्य तपसि दानम्। एतदाह **दानेन चापदीति**। प्रक्रांततपसः आपदि पीडायामनिग्रहणे दानम् ॥ २२६ ॥

(२) **सर्वज्ञनारायणः**। **ख्यापनेन** प्रकाशपापानां पुनः प्रकाशनेन **अनुतापेन** रहस्ये

प्रकाशे च। **तपसा** नाशकादिना। **अध्ययनेन** जपेन। **आपदि** तपोजपाशक्तो दानेन ।। २२६ ।।

(३) **कुल्लूकः**। पापकारी नरो लोकेषु निजपापकथनेन धिङ्मामतिपापकारिणमिति पश्चात्तापेन शुध्यति। तपसा चोक्तरूपेण सावित्रीजपादिना च पापान्मुच्यते। तपस्याशक्तो दानेन च पापान्मुक्तो भवति। ख्यापनं चेदं प्रकाशप्रायश्चित्ताङ्गभूतं न रहस्यप्रायश्चित्ताङ्ग-रहस्यत्वहानिप्रसङ्गात्। अनुतापश्च प्रकाशरहस्याङ्गमेव दानेनेति प्राजापत्यव्रत एकधेनुवि-धानात् धेनुश्च पञ्चपुराणीया त्रिपुराणीया वेति एतेन ब्रह्महत्यानिमित्तके द्वादशवार्षिकव्रते मासि सार्धद्वयप्राजापत्यात् वत्सरे त्रिंशद्धेनवो भवन्ति द्वादशभिर्वर्षैः षष्टयधिकशतत्रयं धेनवो भवन्ति ।। २२६ ।।

(४) **राघवानन्दः**। **ख्यापनेन** मयेदं कृतमिति कथनेन तत्कथने लोकावज्ञास्पदत्वात् पुनर्न प्रवर्तत इति भावः। **अनुतापेन** धिगस्तु मामित्यनुशोचनेन। तथा च विष्णुपुराणम्। कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।। प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम् ।। **आपदि** पूर्वोक्ताशक्तौ दानेन वै ।। २२६ ।।

(५) **नन्दनः**। अथोभयेषु पापेषु प्रायश्चित्तविशेषापद्धर्मानपरानाह **ख्यापनेनेति**। **ख्यापनं** प्रकाशितपापविषयं सामर्थ्याद्गम्यते इतराण्युभयविषयाणि दानेन चापदीत्यापद्ग्रह-णात्सर्वैः प्रायश्चित्तविशेषैर्दानस्य तुल्यार्थता नानुतापाद्विवंगतेत्यस्य प्रपञ्च इति ।। २२७ ।।

(६) **रामचन्द्रः**। **ख्यापनेन** पापानां कथनेन रहस्यस्यानुतापेन च पुनः तपसा वेदाध्य-यनेन आपदि दानेन ।। २२६ ।।

(७) **मणिरामः**। **ख्यापनेन** मयेदं पापं कृतं इति ख्यापनेन **अनुतापेन** धिङ् मां पाप-कारिणमिति पश्चात्तापेन। **अध्ययनेन** सावित्रीजपादिना। **आपदि** तपःकरणाऽशक्तौ दानेन ।। २२६ ।।

(८) **गोविन्दराजः**। **ख्यापनेनेति**। द्विजादि विदित एवं कर्मास्मीत्येवमन्येषामपि अविदितपापानां पापप्रकाशनेन प्रकाशाप्रकाशाङ्गभूतेन न तु रहस्याङ्गभूतेन रहस्यत्वहानि-प्रसङ्गात् हि कष्टं किं मयेदं कृतं इत्येवं प्रश्चात्तापेन च प्रकाशाङ्गभूतेनैव तपसा चोक्तरूपेण कृच्छ्रादिना जपेन च प्रकाशाङ्गप्रधानभूतेनैव प्रायश्चित्तसामर्थ्येन च प्रकान्ततपाः दानेन पापकारी पापान्मुच्यते ।। २२६ ।।

(९) **भारुचिः**। ख्यापनानुतापनयोः प्रायश्चित्तयोरयं विध्यर्थः श्लोकः। तथा च सति तपःप्रभृतीनामत्र दृष्टान्तार्थमुपादानम्, न स्वार्थम्। तथा **दानेन चापदीति** वृद्धस्त्रीबालव्याधि-तादयो दीर्घकालप्रायश्चित्तानुष्ठानेऽसमर्थास्तपसा दानेन शुद्ध्यन्ते यथा एवं ख्यापनानुता-पाभ्याम्। तथा च सति ख्यापनं प्रकाशप्रायश्चित्तेन सह समुच्चीयते सामर्थ्यात्, न केवलम्। अनुतापस्तूभाभ्याम्। तत्र ख्यापनार्थवादः ।। २२६ ।।

**यथा यथा नरोऽधर्मं स्वयं कृत्वाऽनुभाषते ।।**
**तथा तथा त्वचेवाहिस्तेनाधर्मेण मुच्यते ।। २२७ ।।**

**(१) मेधातिथिः ।** ख्यापनविधेरर्थवादः । **नरोऽधर्मम्**िति नञः प्रश्लेषः । धर्मस्य स्वयं ख्यापनं निषिद्धम्, 'न गुणाः स्वयं वाच्या' इति । प्रक्रान्तश्चाधर्म एव **तेनाधर्मेणेति** श्रूयत एव ॥ २२७ ॥

**(२) सर्वज्ञनारायणः ।** ख्यापनस्य पापक्षयत्वं दृढयति **तथा यथेति** ॥ २२७ ॥

**(३) कुल्लूकः ।** यथा यथा स्वयं पापं कृत्वा नरो भाषते लोके ख्यापयति तथा तथा तेन पापेन सर्प इव जीर्णत्वचां मुच्यत इति ख्यापनविधेरनुवादः ॥ २२७ ॥

**(४) राघवानन्दः ।** तत्र ख्यापनानुवादयोरर्थवादमाह **यथेति** त्रिभिः । **तेनोक्तेन अधर्मेण** त्वचेवाहिः ॥ २२७ ॥

**(५) नन्दनः ।** अनुतापं श्लोकत्रयेण प्रपञ्चयति **यथेति** ॥ २२७ ॥

**(६) रामचन्द्रः ।** नरः स्वयमधर्मं कृत्वा **अनुभाषते** कथयति तथा तेनाधर्मेण मुच्यते क इव अहिः त्वचेव ॥ २२७ ॥

**(७) मणिरामः ।** नरः अधर्मं कृत्वा यथा यथा भाषते तथा तथा तेन अधर्मेण सर्प इव जीर्णत्वचं मुच्यते ॥ २२७ ॥ ॥ २२८ ॥

**(८) गोविन्दराजः । यथा यथेति ।** मनुष्यः पापं कृत्वा तेन पापेन स्वयमेव यथा यथा ख्यापयति मयेदं दुष्टं कर्म कृतं इति निन्दति तथा तथा तं शरीरस्थं क्षेत्रज्ञं पुण्यपापयोः तदाश्रयत्वात्तेन पापेन जीर्णचर्मेव सर्पस्तस्मात्पापात् प्रमुच्यते इति ख्यापनार्थवादः ॥ २२८ ॥

**(९) भारुचिः ।** अयमन्योऽनुतापविधिविशेषः ॥ २२७ ॥

**यथा यथा मनस्तस्य दुष्कृतं कर्म गर्हति ॥**
**तथा तथा शरीरं तत्तेनाधर्मेण मुच्यते ॥ २२८ ॥**

**(१) मेधातिथिः । शरीरमन्तरात्मैव,** न भूतात्मा पुण्यपापयोस्तदाश्रयात् । उपचाराद्धि आत्मनः शरीरशब्दोऽयं द्रष्टव्यः । अनुतापार्थवादोऽयम् । **गर्हा** ख्याता ॥ २२८ ॥

**(२) सर्वज्ञनारायणः ।** अनुतापस्य पापनाशकतां दृढयति **यथा यथा मन इति । शरीरं** लिङ्गदेहः ॥ २२८ ॥

**(३) कुल्लूकः । तस्य** पापकारिणो मनो यथा यथा दुष्कृतं कर्म निन्दति तथा तथा **शरीरं** जीवात्मा तेनाधर्मेण मुक्तो भवति । अयमनुतापानुवाद इति ॥ २२८ ॥

**(४) राघवानन्दः ।** पापकर्तुर्मनः पापं **कर्म** गर्हति **शरीरं** लिङ्गदेहम् ॥ २२८ ॥

**(५) नन्दनः ।** निन्दत्यनुतपति शरीरमिति शरीरस्थ आत्मा लभ्यते शरीरीति साधुः-पाठः ॥ २२८ ॥

**(८) गोविन्दराजः । यथा यथेति ।** तथा तथा शरीरात्त तेनाधर्मेण मुच्यते ॥ २२८ ॥

**(९) भारुचिः ।** शरीरस्थः **पुरुषः** शरीरशब्देन स्थानादुपचर्यते, मञ्चवत् । येन पुण्यपापयोरात्माश्रयी ॥ २२८ ॥

**कृत्वा पापं हि संतप्य तस्मात्पापात्प्रमुच्यते ॥**
**नैवं कुर्यां पुनरिति निवृत्त्या पूयते तु सः ॥ २२९ ॥**

(१) **मेधातिथिः।** **निवृत्तिपर्यन्तमित्याहुस्तदयुक्तम्।** **संतापो** मनःपरिखेदः, 'प्रमाद्यैतन्मया कृतमि'त्येवंरूपः। **निवृत्तिस्तु** सङ्कल्पो 'न कर्तव्यः **पुनरिति**'। क्रियाभेदं च दर्शयति। क्त्वाप्रत्ययेन 'संतप्य निवृत्ये'ति।

अतः प्रायश्चित्तवत्ख्यापनानुतापनिवृत्तयः प्रायश्चित्तिना कर्तव्याः। पूयते सिद्धिमाप्नोति ॥ २२९ ॥

(२) **सर्वज्ञनारायणः।** **संतप्य** संतापानन्तरं प्रायश्चित्तमल्पमपि चरित्वेति तात्पर्यम्। न केवलमुत्पन्नपापस्य नाशोऽनुत्पन्नस्याप्यनुत्पादः पश्चात्तापादित्याह नैवमिति। पूयते संभवदुत्पत्तिपापशून्यो भवति ॥ २२९ ॥

(३) **कुल्लूकः।** पापं कृत्वा पश्चात्संतप्य तस्मात्पापान्मुच्यत इत्युक्तमपि नैवं कुर्यां पुनरित्येवमनूदितं यदा तु पश्चात्तापो नैवं पुनः करिष्यामीति एवं निवृत्तिरूपसंकल्पफलकः स्यात्तदा सुतरां तस्मात्पापात्पूतो भवतीति। एतच्च निवृत्तिसंकल्पस्य प्रकाशाप्रकाशप्रायश्चित्ताङ्गविधानार्थम् ॥ २२९ ॥

(४) **राघवानन्दः।** न कुर्यामिति निवृत्त्या पूयते पुनरपि न प्रवर्तते ॥ २२९ ॥

(६) **रामचन्द्रः।** च पुनः एवं पापं न कुर्यां इति निवृत्त्या सः पूयते ॥ २२९ ॥

(८) **गोविन्दराजः। पापं कृत्वेति।** पापकारिणो यदि पश्चात्ताप उत्पद्यते तदा तस्मात्पापात्प्रमुच्यते इत्युक्तम्। स च पापकारी भूयः पापं न कुर्यामित्येवं पुनः पापकारिणो निवृत्तिसंकल्पेन शुद्ध्यतीति निवृत्ते प्रकाशाप्रकाशप्रायश्चित्ताङ्गभूतविधानार्थमेतत् ॥ २२९ ॥

(९) **भारुचिः।** तथा च सति निवृत्तिरपि पूर्ववत् प्रायश्चित्तमित्येतत् सिद्धम् ॥ २२९ ॥

**एवं संचिन्त्य मनसा प्रेत्य कर्मफलोदयम् ॥**
**मनोवाङ्मूर्त्तिभिर्नित्यं शुभं कर्म समाचरेत् ॥ २३० ॥**

(१) **मेधातिथिः। एवमिति** कृत्स्नस्य विधिनिषेधसमूहस्य प्रत्यवमर्शः। **प्रेत्य कर्मफलोदयं** 'शुभस्य कर्मणः स्वर्गादिफलावाप्तिरशुभस्य नरकोपपत्तिरकृते प्रायश्चित्ते प्रायश्चित्तं चातिदुःखरूपम्'। एतन्**मनसि संचिन्त्य शुभं कर्म समाचरेत्।** विहितं '**शुभम्**'। तथा 'संकल्पमूलः कामो वै'क्यार्थो नियता इति च। तस्माद्यपि 'न हिंस्यादि'त्युद्यमननिपातने न दण्डादेः परदुःखोत्पादने उच्येते, तथाऽप्येवमादिशास्त्रपर्यालोचनयाऽध्यवसायादिनिषेधः। एवमभक्ष्यभक्षणादावपि द्रष्टव्यम्। यद्यपि 'भक्षण'मन्नादिनिगरणपर्यन्तं तथापि मानसोऽध्यवसायो निषिद्ध एव। एवमगम्यागमनेऽपि। यद्यपि हीन्द्रियसमापत्तिर्गमनं तथापि तदर्थाध्यवसायो व्यापार एवमादिशास्त्रान्तरैर्निषिध्यते। "यद्येवं हननभक्षणागम्यागमनेषु

यत्प्रायश्चित्तं तदध्यवसायेऽपि प्राप्नोति"। नैष दोषः। ब्राह्मणवधे तावदिष्टमेव 'अहत्वाऽपी'ति वचनात्। अन्यत्र तु मुख्यस्यैव शब्दार्थस्य परिग्रहो न्याय्यः। प्रतिषेधे तूक्तशास्त्रपर्यालोचनया स मनोव्यापारात्प्रभृतिकायव्यापारपर्यन्तविषयोऽवतिष्ठते। "यद्येवं 'निन्दितं समाचरन्निति' प्रायश्चित्तनिमित्तोपदेशात्प्रतिषेधानुसारिप्रायश्चित्तं प्राप्नोति"। क एवमाह नास्ति प्रायश्चित्तमिति। किंच तच्छब्दचोदितान्न भवत्यन्यस्य लघु कल्प्यम्। तथा च सर्वप्रायश्चित्तानामेवमादिरपि विषयो न्याय्यः। कुतः पुनरयं विशेषो लभ्यते। प्रतिषेधाध्यवसायादिति। प्रायश्चित्तानि तु शब्दार्थेष्वेव। व्रतनियमधर्माश्च सर्वे संकल्पजा इति। अनेन विधिप्रतिषेधावेवोच्येते। 'व्रतानि' विधिरूपाणि, 'नियमाः' प्रतिषेधलक्षणास्तत्रैव च कृतार्थत्वान्नैमित्तिकेषु यावत्प्रवर्तितुमर्हन्ति। अस्ति च प्रतिषेधसामान्यनिमित्तमतो भवति प्रायश्चित्तम्। न च तदेव। 'परद्रव्येष्वभिध्यानमिति' चात्रैवान्ते दर्शयिष्यामः ॥ २३० ॥

(२) **सर्वज्ञनारायणः**। एवं संचित्य प्रायश्चित्तम्। तथा **प्रेत्य** मरणानन्तरं **कर्मफलस्य** नरकादेरुदयम्। **मूर्तिर्**देहः ॥ २३० ॥

(३) **कुल्लूकः**। एवं शुभाशुभानां कर्मणां परलोक इष्टानिष्टफलं मनसा विचार्य मनोवाक्कायैः शुभमेव सर्वं कर्म कुर्यादिष्टफलत्वात् नाशुभं नरकादिदुःखहेतुत्वात् ॥ २३० ॥

(४) **राघवानन्दः**। किंच एवमिति प्रेत्य कर्मफलोदयं वक्ष्यमाणं यातनोत्थम्। **मूर्तिभिर्**देहैः शुभमेव **समाचरेत्** अनुतिष्ठेत् ॥ २३० ॥

(६) **रामचन्द्रः**। **मनोवाङ्मूर्तिभिः** मनोवाक्कायैः ॥ २३० ॥

(७) **मणिरामः**। प्रेतकर्मफलोदयं परलोके इष्टाऽनिष्टफलम्। **मनोवाङ्मूर्तिभिः** मनोवाक्कायैः ॥ २३० ॥

(८) **गोविन्दराजः**। **एवमिति**। एवं शुभाशुभानां कर्मणां परलोक इष्टफलोत्पत्तिं मनसा विचार्य मनोवाक्कायैः शुभमेव कर्म कुर्यात्। इष्टफलत्वान्नाशुभमकृतप्रायश्चित्तानां अदृष्टोत्पादनत्वात्प्रायश्चित्तकरणस्यापि च दुःखरूपत्वात् ॥ २३० ॥

(९) **भारुचिः**। उभयमपि निवृत्तिं प्रायश्चित्तं च, येनैकत्रानुत्पत्तिरेव पापस्य, अन्यत्रोत्पन्नस्य विनाशः। यतश्चैतदेवमतः ॥ २३० ॥

**अज्ञानाद्यदि वा ज्ञानात्कृत्वा कर्म विगर्हितम् ॥**
**तस्माद्विमुक्तिमन्विच्छन्द्वितीयं न समाचरेत् ॥ २३१ ॥**

(१) **मेधातिथिः**। कृतप्रायश्चित्तस्यापि पुनरकार्यप्रवृत्तावधिकतरं प्रायश्चित्तमिति एवमर्थं **द्वितीयं न समाचरेदिति**। अथवा निवृत्तेरनन्तरोपदिष्टाया अर्थवादो **द्वितीयं न समाचरितव्यमिति**। व्रतं न हातव्यम्। तस्मादाद्यकृताद्व्यतिक्रमा**द्विमुक्तिमिच्छन्** मोक्षमिच्छन् पुनर्न कुर्यात्। अतश्चैतदुक्तं भवति। कृतेऽपि प्रायश्चित्ते न विमुच्यते, यदि पुनः समाचरति। न च निष्कृतौ कृतायामकृतायामपि मोक्षो युक्तोऽतो मुक्तस्य मुक्तिमन्विच्छन्निति नोपपद्यते। तस्मादाधिक्याय पुनर्वचनम् ॥ २३१ ॥

(२) **सर्वज्ञनारायणः**। द्वितीयं नाचरेत्पापं द्वितीयकरणे तु पूर्वस्यापि बहुप्रायश्चित्तापनेयता भवतीत्यर्थः ।। २३१ ।।

(३) **कुल्लूकः**। प्रमादादिच्छातो वा निषिद्धं कर्म कृत्वा तस्मात्पापान्मुक्तिमिच्छन्पुनस्तन्न कुर्यात् एतच्च पुनःकरणे प्रायश्चित्तगौरवार्थम्। अत एव देवलः। विधेः प्राथमिकादस्माद्द्वीतीये द्विगुणं भवेदिति ।। २३१ ।।

(४) **राघवानन्दः**। फलितमाह तस्मादिति। तस्मादज्ञानादि कृताद्विशुद्धिं तस्मात्पूर्वार्चितपापात् द्वितीयं तज्जातीयं **न समाचरेन्न** कुर्यात्। किंनुक्तिमिति क्वचित्पाठः। अत एव देवलः। विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं स्मृतम्। तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिरिति ।। २३१ ।।

(५) **नन्दनः**। अत एवमत आह **अज्ञानादिति**। द्वितीयं पुनरपीति यावत् ।। २३१ ।।

(६) **रामचन्द्रः**। अज्ञानात् यदि वा ज्ञानात् तस्माद्विमुक्ति इच्छन् द्वितीयं न समाचरेत् ।। २३१ ।।

(७) **मणिरामः**। **द्वितीयं** द्वितीयवारं तत्पापं न कुर्यात् ।। २३१ ।।

(८) **गोविन्दराजः**। **अज्ञानादिति**। प्रमादादिच्छातो वा निन्दितं कर्म कृत्वा तत्पापान्मोक्षमन्विच्छन् परं दुष्कृतं न कुर्यात्। इति निवृत्यर्थवादः ।। २३१ ।।

(९) **भारुचिः**। ज्ञानकृतस्याप्यकुशलस्य निवृत्त्या शुद्धिः, किं पुनरज्ञानकृतस्येत्यनेन दर्शयति ।। २३१ ।।

**यस्मिन्कर्मण्यस्य कृते मनसः स्यादलाघवम् ।।**
**तस्मिंस्तावत्तपः कुर्याद्यावत्तुष्टिकरं भवेत् ।। २३२ ।।**

(१) **मेधातिथिः**। **असत्यां** चित्तशुद्धौ विहितातिरेककरणार्थमिदम्। दुष्कृते **कर्मण्यलाघवं** कापि विचिकित्सा यदि भवति। ततः **कृतेऽपि** प्रायश्चित्ते आ मनः प्रसादोत्पत्तेरावर्तयितव्यम्। **तपोग्रहणं** दानादीनामपि यथाविहितदर्शनार्थम् ।। २३२ ।।

(२) **सर्वज्ञनारायणः**। **यस्मिन्कर्मणि** प्रायश्चित्ते **कृतेऽपि लाघवमक्षीणपापोऽस्मीति** मतिः। **तुष्टिकरं** क्षीणपापोऽहमिति बुद्धेर्जनकम् ।। २३२ ।।

(३) **कुल्लूकः**। **अस्य** पापकारिणो **यस्मिन्प्रायश्चित्ताख्ये** कर्मण्यनुष्ठिते **न** चित्तस्य संतोषः स्यात्तस्मिस्तदेव प्रायश्चित्तं तावदावर्तयेद्यावन्मनसः संतोषः प्रसादः स्यात् ।। २३२ ।।

(४) **राघवानन्दः**। किंच **यस्मिन्निति**। **यस्मिन्प्रायश्चित्ताख्ये** कृते। **अलाघवमसंतोषः**। तस्मिस्तदेव प्रायश्चित्तं तावदावर्तयेद्यावन्मनः प्रसादः स्यात् ।। २३२ ।।

(५) **नन्दनः**। अथ तपः प्रपञ्चयति **यस्मिन्निति**। **अलाघवं** गौरवं तुष्टिरिति यावत् ।। २३२ ।।

**(६) रामचन्द्रः।** यस्मिन्नसुकृतेः कर्मणि मनसः अलाघवं स्यात् चित्तस्य असंतोषः स्यात् तस्मिन्तावत्तपः कुर्यात्। यावन्मनः तुष्टिकरं भवेत् यस्मिन् पापे कर्मणि कृते प्रायश्चित्ते निष्पापोऽहमित्यात्मनि लघुतामेति ।। २३२ ।।

**(७) मणिरामः। यस्मिन् कर्मणि** यस्मिन्प्रायश्चित्ते कृते। **अलाघवं** न चित्तसंतोषः स्यात् ।। २३२ ।।

**(८) गोविन्दराजः। यस्मिन्कर्मण्यसुकृत** इति। यस्मिन् दुष्कृतकर्मणि कृतेऽपि शास्त्रितप्रायश्चित्ते मनो विचिकित्स्यात् तस्मिंस्तावत्प्रायश्चित्तं तदेव पुनः कुर्यादन्यद्वा सुरूपं यावन्मनः प्रसादपरं स्यात् ।। २३२ ।।

**(९) भारुचिः।** प्रायश्चित्ताभ्यासार्थो निमित्ततोऽस्यारम्भः। तस्यायमुभयत्र रहस्ये प्रकाशे च विज्ञेयः। तथा चोक्तं भावप्रसादस्य कुशलकर्महेतुत्वम् ।। २३२ ।।

**तपोमूलमिदं सर्वं दैवमानुषकं सुखम् ।।**
**तपोमध्यं बुधैः प्रोक्तं तपोन्तं वेददर्शिभिः ।। २३३ ।।**

**(१) मेधातिथिः।** मनुष्यलोके यत्सुखमाभिमानिकं जनपदैश्वर्यादि यच्चैहिकमरोगित्वादि यच्च सांसर्गिकं धनपुत्रादि संपत् यथाभिमतकांतादिविषयोपभोगलक्षणमैन्द्रियकं यच्च वेदेषु (ब्रह्मवल्लयां ८।२) 'मनुष्याणां शतमानन्दाः स एक आजानदेवेषु' इत्यादि तस्य सर्वस्य **तपो मूलं** उत्पत्तिकारणम्। **तपोमध्यमुत्पन्नस्य** स्थिति'र्मध्यावस्था'। **अंतोऽ**वसानम्। तदपेक्षयेति वेदविदां दर्शनम्। यथैव कर्माणि स्वर्गग्रामाद्यभिप्रेतफलसाधनान्येवं तपो विज्ञेयम् ।। २३३ ।।

**(२) सर्वज्ञनारायणः। मूलं** जन्महेतुः। **दैवं** देवानां **सुखम्। मानुषकं** मनुष्याणाम्। **मध्यं** स्थितिहेतुः। **अन्तो** नाशहेतुः वैषयिकसुखस्यापवर्गकारी। तत्त्रयं तप एवेत्यर्थः ।। २३३ ।।

**(३) कुल्लूकः।** यदेतत्सर्वं देवानां मनुष्याणां च सुखं तस्य तपः कारणं तपसैव च तस्य स्थितिः तपोऽन्तः प्रतिनियतविधिरेव देवादिसुखस्य तपसा जननादादिष्टं वेदार्थज्ञैरुक्तं उक्तप्राजापत्यादिप्रायश्चित्तात्मकतपः। प्रसङ्गेन चेदं वक्ष्यमाणं च सर्वतपोमाहात्म्यकथनम् ।। २३३ ।।

**(४) राघवानन्दः।** तपसो नासाध्यमित्यावेदयन्नाह **तप** इति। **तपोमूलं** तप एवोत्पत्तिहेतुः। **मध्यं** स्थितिहेतुः। **अंतं** विनाशहेतुः। आसुरतपसा दैवसुखस्य नाशदर्शनात् ।। २३३ ।।

**(६) रामचन्द्रः।** बुधैः तपः मध्यं प्रोक्तं वेददर्शिभिः तपः अन्तं शरीरस्यान्ते तपः फलति ।। २३३ ।।

**(७) मणिरामः। तपोमूलं** तपोजनितं **तपोमध्यं** तपस्ययैव च तस्य स्थितिर्भवति। **तपोऽतं** तपस्यैव च अंतःपर्यंतमेकरूपं तिष्ठतीत्यर्थः ।। २३३ ।।

(८) **गोविन्दराजः। तपोमूलमिति।** यदेतत्सर्वं देवानां मनुष्याणां सुखं तदादौ मध्येऽन्ते च तपः कारणं इति तपोमाहात्म्यकथनं प्रायश्चित्ततपःस्तुत्यर्थम् ॥ २३३ ॥

(९) **भारुचिः।** देवस्य तावत् सुखस्याणिमादेः, मानुषस्य च शब्दाद्युपभोगाः स्युः, गन्धर्वविद्याधरादिसुखस्य **च तप** एवेत्यवस्था कारणम् ॥ २३३ ॥

**ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम् ।**
**वैश्यस्य तु तपो वार्ता तपः शूद्रस्य सेवनम् ॥ २३४ ॥**

(१) **मेधातिथिः।** नैवं मन्तव्यं 'तपसि सामर्थ्यात्तपसा सर्वफलसिद्धीरवाप्स्यामि, विध्यतिशययोगाच्च विहिताकरणेऽपि, न द्रव्येण कथं मेऽनुष्ठेयो धर्म इति'' यतो **ब्राह्मणस्य तपो ज्ञानम्।** ज्ञानं वेदार्थावबोधः। तस्मिन्नसति न तत्फलसाधनम्। अतो ज्ञानमेव 'तप' उच्यते। गर्हितीष्वापत्तिषु। तेन स्वधर्मो न हातव्य इत्येवमर्थोऽयं श्लोकः। **ज्ञानग्रहणं** स्वाध्यायग्रहणाध्ययनात्प्रभृति सर्वस्वधर्माणां प्रदर्शनार्थम् ॥ एवं **तपः क्षत्रियस्येति। शूद्रस्य सेवनं** द्विजातीनामिति शेषः। तत्सेवाया विहितत्वात्, अस्य चानुवादत्वात् ॥ २३४ ॥

(२) **सर्वज्ञनारायणः।** ब्राह्मणस्य यत् ज्ञानमसाधारणाभ्युदयहेतुस्तदपि तप एव तपोमूलत्वात्। एवं रक्षणादावपि। **सेवनं** सेवायां प्रवृत्तिः ॥ २३४ ॥

(३) **कुल्लूकः।** ब्राह्मणस्य ब्रह्मचर्यात्मकवेदान्तावबोधनं तपो राजन्यस्य रक्षणं तपो वैश्यस्य कृषिवाणिज्यपाशुपाल्यादिकं तपः शूद्रस्य ब्राह्मणपरिचर्या तप इति वर्णविशेषेणोत्कर्षबोधनार्थम् ॥ २३४ ॥

(४) **राघवानन्दः।** कृच्छ्रचान्द्रायणादेः तपःशब्दप्रसंगेन प्रतिनियतचातुर्वर्ण्यधर्मं तदतिदिशन् शूद्रस्य सेवैव तप इति विधत्ते **ब्राह्मणस्येति। ज्ञानं** वेदतदर्थयोः। **रक्षणं** प्रजायाः। **वार्ता** कृषिवाणिज्यादिः। **सेवनं** द्विजानां शुश्रूषा ॥ २३४ ॥

(५) **नन्दनः।** ब्राह्मणादीनां ज्ञानादीनि यानि धर्मान्तरेभ्यः प्रधानत्वेनोपदिष्टानि तानि तप एवं ज्ञानादिभिः प्राप्यं फलं तपसा प्राप्यत इत्यर्थः ॥ २३४ ॥

(६) **रामचन्द्रः।** ब्राह्मणस्य तपो ज्ञानं तपो जन्यत्वात्। तपः क्षत्रस्य रक्षणं प्रजारक्षणरूपम्। वैश्यस्य वार्तायां कारणं तपः। शूद्रस्य द्विजसेवनं तपः ॥ २३४ ॥

(७) **मणिरामः।** ब्राह्मणस्य ज्ञानं ब्रह्मचर्यात्मकवेदांताऽवबोधनमेव तपः। क्षत्रस्य रक्षणमेव तपः। वैश्यस्य वार्ता कृष्यादिकमेव तपः। शूद्रस्य द्विजानां सेवनमेव तपः ॥ २३४ ॥ ॥ २३५ ॥

(८) **गोविन्दराजः। ब्राह्मणस्येति।** ब्राह्मणस्य वेदार्थावबोधस्तपः। क्षत्रियस्य धर्मतः प्रजारक्षणं तपः। वैश्यस्य कृषिवाणिज्यपाशुपाल्यं तपः। शूद्रस्य ब्राह्मणपरिचर्या तप इत्युक्तानां अन्येषां पुनरिहाभिधानं प्रायश्चित्ताङ्गत्वार्थम् ॥ २३४ ॥

(९) **भारुचिः।** प्रायश्चित्तप्रकरणेऽस्योपदेशाद्विज्ञायते दृष्टार्थेष्वपि नियमः शुद्धिहेतुः, किं पुनर्विहितप्रायश्चित्तानुष्ठानानाम्। तथा चोक्तं ज्ञानस्य शुद्धिहेतुत्वम्, "ज्ञानं

तपोऽग्निराहारः" 'बुद्धिर्ज्ञानेन शुद्धयती'ति च । तस्य चार्थप्राप्तस्यात्र विशुद्धयर्थ उपदेशो विज्ञेयः ॥ २३४ ॥

**ऋषयः संयतात्मानः फलमुलानिलाशनाः ॥**
**तपसैव प्रपश्यन्ति त्रैलोक्यं सचराचरम् ॥ २३५ ॥**

**(१) मेधातिथिः।** अतीन्द्रियज्ञानातिशयासादनमपि मुनीनां तपोबलेनैवेत्यर्थः। वाङ्मनःकायनियमात् संयतात्मानः। फलमूलेत्याहारनियमः। ईदृशेन तपसा त्रैलोक्यं प्रत्यक्षवत्पश्यंति ॥ २३५ ॥

**(२) सर्वज्ञनारायणः।** तपसा योगस्तेन प्रपश्यन्ति ॥ २३५ ॥

**(३) कुल्लूकः। ऋषयो** वाङ्मनःकायनियमोपेताः फलमूलवायुभक्षाः तपसैव जङ्गमस्थावरसहितं पृथिव्यन्तरिक्षस्वर्गात्मकं लोकत्रयमेकदेशस्थाः सन्तो निष्पापान्तःकरणाः प्रकर्षेण पश्यन्ति ॥ २३५ ॥

**(४) राघवानन्दः।** तपसः किं दुरापमस्तीत्यावेदयन् साश्चर्यमाह **ऋषय इति** नवभिः। संशितव्रतास्तपसा तनूकृतपापाः। सचराचरं स्थावरजङ्गमात्मकं त्रैलोक्यं एकदेशस्थ आर्षेण ज्ञानेन प्रत्यक्षीकुर्वन्ति ॥ २३५ ॥

**(५) नन्दनः।** तपसा त्रैलोक्यं प्रपश्यन्ति तपसा दिव्यज्ञानो भूत्वा सर्वविदो भवन्तीत्यर्थः ॥ २३५ ॥

**(६) रामचन्द्रः। ऋषयः** फलमूलाशिनः ॥ २३५ ॥

**(८) गोविन्दराजः। ऋषय इति।** ऋषयः वाङ्मनःकायोपेताः फलमूलवायुभक्षास्तपसैव जङ्गमस्थावरसहितं पृथव्यन्तरिक्षद्युलोकात्मकं लोकत्रयमशेषमेकदेशस्थाः सन्तः प्रकर्षेण पश्यन्तीति तपोमाहात्म्यकथनम्। प्रायश्चित्ततपः स्तुत्यर्थमेवमुत्तरश्लोकावपि ज्ञेयौ ॥ २३५ ॥

**(९) भारुचिः।** प्रायश्चित्तानुष्ठानार्थंतपसा पश्यन्ति। सेयमेवं प्रायश्चित्ततपः स्तुतिः प्रकरणसामर्थ्याद्विज्ञेया। एवमुत्तरश्लोकाः ॥ २३५ ॥

**औषधान्यगदा विद्या दैवी च विविधा स्थितिः ॥**
**तपसैव प्रसिद्धयन्ति तपस्तेषां हि साधनम् ॥ २३६ ॥**

**(१) मेधातिथिः। औषधानि** रसायनानि। **अगदा** व्याध्युपशमभेषजानि। **विद्या** भूतविशेषादिविषया। **दैवी स्थिति**रणिमादिशक्तियोगोऽनेकप्रकारः ॥ २३६ ॥

**(२) सर्वज्ञनारायणः। औषधानि** भैषज्यानि। **अगदा** विषघ्नमन्त्ररूपाणि। **विद्या** वेदार्थज्ञानानि। **दैवी स्थिति**रिन्द्रत्वादिका। **प्रसिध्यन्ति** प्रकर्षेण सिध्यन्ति फलन्ति ॥ २३६ ॥

**(३) कुल्लूकः। औषधानि** व्याध्युपशमनहेतुकानि। **अगदो** गदाभावो नैरुज्यमिति

यावत्। **विद्या** ब्रह्मधर्मचर्यात्मकवेदार्थज्ञानं वेदसंबन्धिनी **च** नानारूपा स्वर्गादावस्थितिः। इत्येतानि तपसैव प्राप्यन्ते यस्मात्तप एषां प्राप्तिनिमित्तम्॥ २३६॥

(४) **राघवानन्दः**। **औषधानि** महौषधिप्रभृतीनि। **अगदः** गदो रोगस्तन्निरसनम्। सुश्रुतशास्त्रं तपसैव निर्मितम्। **विद्या** ब्रह्मविद्या॥ तपसा ब्रह्म विजिज्ञासस्वेति श्रुतेः॥ **दैवी** चन्द्रलोकादिसंस्थितिः चन्द्रस्यैति सलोकतामित्युक्तेः। प्रकृष्टतयोत्पद्यन्त इत्याह प्रसिध्यन्तीति॥ २३९॥

(५) **नन्दनः**। **अगदो** व्याधिरहितो विविधा **दैवी स्थितिः** विविधदैवताप्राप्तिः अत्र कारणत्वेनोक्तं तपस्तेषां हि साधनमिति। **तेषामौषधादीनां साधनं** साधकम्॥ २३६॥

(६) **रामचन्द्रः**। **औषधानि** विषघ्नमन्त्ररूपाणि **विद्या** वेदार्थज्ञानं **दैवी** इन्द्रत्वादिका विविधा स्थितिर्मर्यादा॥ २३६॥

(७) **मणिरामः**। **अगदः** निरोगता। **विद्या** वेदांतज्ञानं दैवी देवसंबंधिनी **विविधस्थितिः** नानारूपा स्वर्गादावस्थितिः॥ २३६॥

(८) **गोविन्दराजः**। **औषधानीति**। **औषधानि** व्याध्युपशमनान्यगदानि विषापहारद्रव्याणि **विद्या** तपसा ब्रह्मविजिज्ञासा चेति श्रुतेरात्मज्ञानरूपाणि देवसंबन्धिनी **च** नानारूपा स्वर्गादावस्थितिरित्येतानि तपसैव प्राप्यन्ते। तस्मात्तपस्तेषां प्राप्तिनिमित्तम्॥ २३६॥

**यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च दुष्करम्॥**
**सर्वन्तत् तपसा साध्यं तपो हि दुरतिक्रमम्॥ २३७॥**

(१) **मेधातिथिः**। दुःखेन प्रतीर्यते **तद्दुस्तरम्**। व्याधिनिमित्ता महत्यापत्। अतिबलेन शत्रुणा यदुपरोधः। एतदपि तपस्विनां सुसाध्यम्। कृच्छ्रेण यत्प्राप्यते **तद्दुराप**माकाशगमनादि। **दुर्गं** मेघपृष्ठारोहणादि। **दुष्कर**मभिशापवरदानादि, अन्यथा त्वकरणम्। यथा संवर्तस्यान्यदेवतासृष्टिः। **सर्वमेव तपसा सिध्यति**। श्लोकत्रयेण संयोगपृथक्त्वादभ्युदयार्थता कृच्छ्राणामुच्यते। "ननु च प्रायश्चित्तानां प्रकृतत्वात्कृच्छ्रस्तुतिस्तच्छेषतयैव न्याय्या, नाभ्युदयार्थिनो विधेयतया। न च दुस्तरादयोऽर्थवादतया न संभवन्ति। एवंविधाः महांतः कृच्छ्रा यद्दुस्तरमपि समुद्रादि तीर्यते। किं पुनः पापं नापनोत्स्यते"। उच्यते। गृह्यस्मृतिषु सामविधौ चाननुक्रम्यैव प्रायश्चित्तानि कृच्छ्रविधिः समाम्नातः। तत्र चानारभ्याधीतत्वाद्युक्तैव अभ्युदयार्थता। आह च (गौतमसू० अ० २६।२४) 'अथैतान् कृच्छ्रांश्चरित्वा सर्वेषु वेदेषु स्नातो भवति सर्वैर्देवैर्ज्ञातो भवतीति'। वेदेषु स्नात इत्यनेन नियमपूर्वकं वेदाध्ययनानुष्ठानाद्यत्फलं तत्सिद्धमाह। यस्तु निष्फलो ग्रहणार्थोऽध्ययनविधिः स एकवेदाध्ययनेनात्रापि संपद्यते। एवमनेकवेदाध्ययनं तु धर्मायैवेत्युक्तम्। देवैर्ज्ञात इत्यनेनाशेषयागफलावाप्तिमाह। यजमानो हि वेदैर्ज्ञायते'। यो ह्यर्थवादतया संभवति, न प्रायश्चित्तैर्दानभावं गच्छद्भिः। इहापि स्वधर्मनिवृत्तिमाशङ्कमानेन 'ब्राह्मणस्य तपो ज्ञानम्' इति यदुक्तं तदभ्युदयार्थत्वे संभवति। न प्रायश्चित्तानि पापप्रमोचनार्थानि काम्यानि फलसाधनानि, तत्र

भिन्नविषयत्वात्कृतः प्रायश्चित्तैर्निवृत्तिराशङ्क्यते। अभ्युदयार्थत्वे तु कृच्छ्राणामन्येषां च कर्मणां तुल्यत्वाद्युक्ता निवृत्त्याशङ्का। तथा 'महापातकिनश्चेति' पापप्रमोचनार्थतापि चोद्यते 'यद्दुस्तरमि'त्यादिना अभ्युदयार्थतेति भिन्ने एव ते वाक्ये। तेन च प्रकरणस्य बाधो युक्त एव। तथा च द्वैपायनमुनिप्रभृतय'स्तपःप्रभावाद् बुद्धीर्विचत्रास्ता वक्ष्यन्ते'। तस्मात्सर्वफलानि तपांसि। न च यथा सर्वार्थान्यपि वैदिकानि कर्माणि नियतफलानि 'सर्वेभ्यो दर्शपूर्णमासौ सर्वेभ्यो ज्योतिष्टोम' इत्यधिकारात्तत्र सर्वत्र यान्येव वेदे स्वर्गादीनि फलानि श्रुतानि तदपेक्षयैव सर्वार्थता न तु ऋद्धयतिशियातिभोगेनैवमिति, किं तर्हि, 'यद्दुस्तरमि'-त्यादि यथा निर्दर्शितम्॥ २३७॥

(२) **सर्वज्ञनारायणः। दुस्तरं** समुद्रादि। **दुरापं** चिन्तामण्यादि। **दुर्गं** मेरुपृष्ठादि। **दुष्करं** लोकसृष्ट्यादि॥ २३७॥

(३) **कुल्लूकः।** यद्दुःखेन तीर्यते ग्रहदोषसूचितापदादि यद्दुःखेन प्राप्यते क्षत्रियादिना यथा विश्वामित्रेण तेनैव शरीरेण ब्राह्मण्यादि यद्दुःखेन गम्यते मेरुपृष्ठादि यद्दुःखेन क्रियते गोः प्रचुरदानादि तत्सर्वं तपसा साधितुं शक्यते यस्मादतिदुष्करकार्यकरणं सर्वं तपसा साध्यते तपो दुर्लंघनशक्तिः॥ २३७॥

(४) **राघवानन्दः।** किंच **यदिति। दुस्तरं** ग्रहादिकृतानिष्टम्। **दुरापं** जात्यन्तरस्य जात्यन्तरप्राप्तिर्यथा विश्वामित्रस्य ब्राह्मण्यावाप्तिः। **दुर्गं** गरुडस्यामृताहरणम्। **दुष्करमगस्त्यस्य** सिन्धुपानम्। उक्तं सर्वं तपसा साध्यमिति न केवलमपि तु तपो ह्यनुल्लङ्घनीय-मित्याह तपो हीति। **दुरतिक्रममतिक्रमशून्यम्**॥ २३७॥

(५) **नन्दनः।** शक्यं साध्यं अत्रापि कारणत्वेनोक्तं तपो हि दुरतिक्रममिति। केन-चिदपि तपो लङ्घयितुं न शक्यमित्यर्थः॥ २३७॥

(६) **रामचन्द्रः।** यत् **दुस्तरं** समुद्रादि। यत् **दुरापं** चिन्तामण्यादि। यत् **दुर्गं** मेरुपृष्ठादि। यत् **दुष्करं** लोकसृष्ट्यादि॥ २३७॥

(७) **मणिरामः। दुस्तरं** दुःखेन तीर्यते ग्रहदोषजनिताऽऽपदानि। **दुरापं** दुःखेन प्राप्यते शरीरबलब्राह्मण्यादि। **दुर्गं** दुःखेन गन्तुं योग्यं मेरुपृष्ठादि **दुष्करं** दुःखेन क्रियते तत्। प्रचु-रगोदानादि॥ २३७॥ ॥ २३८॥ ॥ २३९॥

(८) **गोविन्दराजः। यदिति।** यद्दुःखेनोत्तीर्यते ग्रहदौस्थ्यापदादि यच्च दुःखेन प्राप्यते तेनैव शरीरेण ब्राह्मणादि यच्च दुःखेन गम्यते मेरुपृष्ठादि यच्च दुःखेन क्रियते समुद्रपानादि एतत्सर्वं तपसा साधयितुं शक्यं यस्मादतिदुष्करकार्यकरणे तपोऽप्रतिहतशक्तिः॥ २३७॥

(९) **भारुचिः।** ग्रहनक्षत्रवैषम्यनिमित्ता आपद् **दुस्तरा। दुरापं** चान्तर्धानावेशा-काशगमनाद्यैश्वर्यजीवितैव। **दुर्गं** च यद्दुरारोहं स्वर्गादि। **यच्च दुष्करं** कृत्स्नसमुद्रपान-मृतसञ्जीवनाद्यगस्त्यजमदग्निप्रभृतीनां तत्सर्वं तपसा शक्यमिति। सेयमुक्तस्यासामर्थ्येन प्रायश्चित्ततपःस्तुतिरेव प्रकरणसामर्थ्याद्विज्ञेया॥ २३७॥

**महापातकिनश्चैव शेषाश्चाकार्यकारिणः ॥**
**तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्ततः ॥ २३८ ॥**

(१) **मेधातिथिः**। उक्तार्थमेतत् ॥ २३८ ॥

(२) **सर्वज्ञनारायणः**। तपसैव मुच्यन्ते जपस्यापि भेदत्वात् ॥ २३८ ॥

(३) **कुल्लूकः**। ब्रह्महत्यादिमहापातककारिणोऽन्य उपपातकाद्यकार्यकारिणः तपसैवोक्तरूपेणानुष्ठितेन तस्मात्पापान्मुच्यन्ते उक्तस्यापि पुनर्वचनं प्रायश्चित्तस्तुत्यर्थम् ॥२३८॥

(४) **राघवानन्दः**। किंच **महेति**। **शेषा** महापातकिभिन्नाः। ततो महापातकोपपातकादेः ॥ २३८ ॥

(५) **नन्दनः**। चतुर्णामेतेषां चत्वार्युदाहरणानि यथासंख्यं चतुर्भिः श्लोकैर्दर्शयति **महापातकिनश्चैवेति**। ततः किल्बिषान्मुच्यन्ते दुस्तरं तत्किल्बिषं तरति ॥ २३८ ॥

(६) **रामचन्द्रः**। महापातकिनो हि अकारिणः तपसैव **ततः** किल्बिषात् मुच्यन्ते ॥२३८॥

(८) **गोविन्दराजः**। **महापातकिन इति**। ब्रह्महत्यादिकारिणोऽन्ये चोपपातकादिकर्तारस्तपसैवोक्तरूपेण सुष्ठुकृतेन तस्मात्पापात्प्रमुच्यन्ते। इत्युक्तस्यापि प्रायश्चित्ततपःस्तुत्यर्थं वचनम् ॥ २३८ ॥

(९) **भारुचिः**। एवं च सति विनष्टकिल्बिषाणां च प्रतिबन्धाभावाद्विहितकर्मानुष्ठानतपसा सर्वार्थेन यथोक्ता सिद्धिः। किञ्चान्यत् ॥ २३८ ॥

**कीटाश्चाहिपतङ्गाश्च पशवश्च वयांसि च ॥**
**स्थावराणि च भूतानि दिवं यान्ति तपोबलात् ॥२३९॥**

(१) **मेधातिथिः**। तपःस्तुतिरियम्। येन तपसा सर्वत्र गमनात्सर्वे स्वर्गमासत इति। यथाऽनधिकृता अपि कीटादयस्तपोबलाद्दिवं गच्छन्ति, किं पुनर्विद्वांसो ब्राह्मणाः। आलंबनं कीटादीनां जातिसहजं दुःखं तदेव **तपः**। तेन च क्षीणकल्मषाधिकारिजन्मान्तरकृतेन सुकृतेन दिवं यान्ति ॥ २३९ ॥

(२) **सर्वज्ञनारायणः**। श्वानोऽह्यः **पतङ्गाश्च** श्वाहिपतङ्गाश्च। **पशवो** गवाद्याः। **तपोबलात्** यजमानादिनिधनप्राप्तिरूपतपोबलात् ॥ २३९ ॥

(३) **कुल्लूकः**। कीटसर्पशलभपशुपक्षिणः स्थावराणि च वृक्षगुल्मादीनि भूतानि तपोमाहात्म्येन स्वर्गं यान्ति इतिहासादौ कपोतोपाख्यानादिषु पक्षिणोऽप्यग्निप्रवेशादिकं तपस्तपन्तीति श्रूयते। कीटानां यज्जातिसहजं दुःखं तत्समं तपस्तेन च क्षीणकल्मषा अविकारिणो जन्मान्तरकृतेन सुकृतेन दिवं यान्ति ॥ २३९ ॥

(४) **राघवानन्दः**। निकृष्टस्याप्युत्कृष्टत्वं तपोमूलमित्याह **कीटेति**। कपोताख्यानादिष्वग्निप्रवेशादि तपःश्रवणात्। **पशवो** गजेन्द्रादयः। **वयांसि** गरुडादयः। **स्थावराः** कल्पद्रुमादयः। वस्तुतस्तु कीटादीनां सहजं दुरदृष्टजन्यं दुःखमेव तपस्तेन प्रतीता

मुत्तीर्य पूर्वार्जितपुण्यवशात्स्वर्गं यान्तीति तपसोऽर्थवादमात्र तादृशशरीरे तपाद्यधिकार-भावादिति ।। २३९ ।।

(५) **नन्दनः**। दिवं यान्ति कीटादिभिर्दुरापाह्यास्तेऽपि तपसा दिवं प्राप्नुवन्ति। तथा हि महाभारते कीटाख्यानकपोताख्यानादिषु तिरश्चामपि तपसा दिवप्राप्तिराख्यायते ।। २३९ ।।

(६) **रामचन्द्रः**। कीटादयः **तपोबलात्** यज्ञादिनिधनप्राप्तिरूपतपोबलात् दिवं यान्ति ।। २३९ ।।

(८) **गोविन्दराजः**। **कीटा इति**। कीटसर्पशलभपशुपक्षिणः स्थावराणि च वृक्ष-गुल्मादीनि भूतानि तपोमाहात्म्येन स्वर्गं गच्छन्ति यथेतिहासेषु कीटोपाख्यानादौ दर्शितम्। तपोमाहात्म्यकथनेन प्रायश्चित्ततपःस्तुतिरेवमुत्तरश्लोका विज्ञेयाः ।। २३९ ।।

(९) **भारुचिः**। कीटपतङ्गा अग्निप्रवेशतपसा, पशवोऽयत्नपोषणसंवर्धनेन वाहक्षीर-दानादिभिश्च, वयांसि चापत्यसंवर्धनेन साधूनां च स्वमांसोपकारेण, स्थावराणि च पुष्पमूलफलच्छायाद्युपकारेण, **दिवं यान्ति तदोबलात्**। तपःस्तुत्यर्थवादोऽयम्। अथवा कीटादिप्राप्तिहेतुकर्मसम्बन्धात् प्रायश्चित्तेन यस्मान्मुच्यन्ते। अत एवमिदमुच्यते। सेयमपरेण प्रकारेण प्रायश्चित्तस्तुतिः ।। २३९ ।।

**यत्किचिदेनः कुर्वन्ति मनोवाक्कर्मभिर्जनाः ।।**
**तत्सर्वं निर्दहन्त्याशु तपसैव तपोधनाः ।। २४० ।।**

(१) **मेधातिथिः**। वाङ्मनःकायकृतस्य जपहोमाभ्यां शुद्धिः स्मर्यते। तत्र तपसा निवृत्तिः स्यात्। अत इदमारभ्यते तदपि तपसानूद्यते ।। २४० ।।

(२) **सर्वनारायणः**। तपोधनास्तप एवोद्दिश्य न तु धनाद्युद्दिश्य तपः कुर्वाणाः ।।२४०।।

(३) **कुल्लूकः**। यत्किंचित्पापं मनोवाग्देहैर्मानवाः कुर्वन्ति तत्सर्वं पापं निर्दहन्ति तपसैव तपोधना इति तप एव धनमिव रक्षणीयं येषां ते तपोधनाः ।। २४० ।।

(४) **राघवानन्दः**। किंच **यदिति**। **निर्दहन्ति** फलाजनकतां संपादयन्ति। **तपोधनाः** तप एव दरिद्रस्य धनमिवोपादेयं येषां ते ।। २४० ।।

(५) **नन्दनः**। तदेनस्तपसा **निर्णुदन्ति** दुर्गं पापं तपसा नाशयन्ति ।। २४० ।।

(६) **रामचन्द्रः**। यत्किंचित् एनः **मनोवाङ्मूर्तिभिः** मनोवाक्कायकर्मभिः जनाः कुर्वन्ति तत्सर्वं **निर्दहन्ति** दूरीकुर्वन्ति ।। २४० ।।

(७) **मणिरामः**। **मनोवाङ्मूर्तिभिः** मनोवाक्कायैः ।। २४० ।।

(८) **गोविन्दराजः**। **यत्किञ्चिदिति**। मानसवाचिककायिकं यत् किञ्चित्पापं पुरुषाणां भवति ये प्रायश्चित्तं विना तेषां निवर्तन्ते तच्चेदमनवरतपःप्रवृत्तानां कथंचिदुत्पद्यन्ते तथा विनैव प्रायश्चित्तं कृतेनैव नित्यप्रवृत्तेन तपसा तेषां तत्सर्वं क्षिप्रं नश्यति ।। २४० ।।

**तपसैव विशुद्धस्य ब्राह्मणस्य दिवौकसः ।।**
**इज्याश्च प्रतिगृह्णन्ति कामान्संवर्धयन्ति च ।। २४१ ।।**

(१) **मेधातिथिः** : काम्यकर्मारंभे पूर्वं तपः कर्तव्यम् । तदपि तावदनूद्यते । तथा चोक्तं 'प्रथमं चरित्वा शुचिः पूतः कर्मण्यो भवति' । यत्र तावद्दीक्षोपनयनाद्यङ्ग तत्र तदेव 'तपः' । एकस्तपो व्रतमुपैत्यसंगतानां विहितं चेति 'तप' एव । यत्रापि शान्तिकपौष्टिकादौ गृह्यादिविषये तत्रापि पूर्वं तपः कर्तव्यमिति श्लोकार्थः । ब्राह्मणग्रहणं यागाधिकृतकामिमात्र-प्रदर्शनार्थम् । उक्तं च 'नातप्ततपसः पुंसो हविर्गृह्णन्ति देवताः । नागृहीतहविष्यस्य कामः संपद्यते क्वचित्' ।। यद्यपि न देवता तत्फलं ददाति तथापि यागस्य देवतया विनाऽ-निष्पत्तेर्देवताः संवर्धयन्तीत्युच्यते । हविर्ग्रहीतृत्वं च न पुनर्देवतानां स्वीकारः, किं तर्हि ? संप्रदानतयोद्देशेऽनिराकरणम् ।। २४१ ।।

(२) **सर्वज्ञनारायणः** । **तपसा** दीक्षादिना । **शुद्धस्य** दिवौकसः । **इज्याः** यज्ञान् । **प्रतिगृह्णन्ति** वयमेभिः पूजिता इति मन्यन्ते ।। २४१ ।।

(३) **कुल्लूकः** । प्रायश्चित्ततपसा क्षीणपापस्य ब्राह्मणस्य यागे हवींषि देवाः प्रति-गृह्णन्त्यभिलषितार्थांश्च प्रयच्छन्ति ।। २४१ ।।

(४) **राघवानन्दः** । किंचान्यदित्याह **तपसेति** । **दिवौकसो** देवाः **इज्या** पूजायागाद्याः । **कामान्** भोगान् ।। 'इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः' इति गीतोक्तेः ।।२४१।।

(७) **मणिरामः** । **दिवौकसः** देवाः ।। २४१ ।।

(८) **गोविन्दराजः** । **तपसेति** । प्रायश्चित्ततपसा क्षीणकल्मषस्यैव ब्राह्मणस्य पुरोडा-शादियागान् देवाः प्रतिगृह्णन्ति अभिलषितांश्चार्थान् पुष्णन्ति ।। २४१ ।।

(९) **भारुचिः** । काम्यकर्मसाध्यत्वात् तदनुष्ठातॄणाम् । अतश्चैतन्न्याय्यं कर्तुम् । इदं चापरं पश्य तपसो महाभाग्यम् ।। २४१ ।।

**प्रजापतिरिदं शास्त्रं तपसैवासृजत्प्रभुः ।।**
**तथैव वेदानृषयस्तपसा प्रतिपेदिरे ।। २४२ ।।**

(१) **मेधातिथिः** । मनोर्येयं प्रतिष्ठा ग्रन्थस्य सा तपस्सामर्थ्यजैव । अन्योऽपि यो ग्रन्थप्रतिष्ठाकामस्तेनापि तपःपूर्वं कृत्वा ग्रन्थः प्रणेतव्यः । ऋषीणामपि यत्तादृक्त्वं वेदाः प्रादुर्भवन्ति तत्तपसैव ।। २४२ ।।

(२) **सर्वनारायणः** । **प्रजापतिर्ब्रह्मा** । **इदं शास्त्रं** मानवम् ।। २४२ ।।

(३) **कुल्लूकः** । हिरण्यगर्भः सकललोकोत्पत्तिस्थितिप्रलयप्रभुः । तपःकरणपूर्वकमेवेमं ग्रन्थमकरोत् । तथैव **ऋषयो** वसिष्ठादयस्तपसैव मन्त्रब्राह्मणात्मकान्वेदान्प्राप्तवन्तः ।। २४२ ।।

(४) **राघवानन्दः** । प्रदीपवच्चातुर्वर्ण्यस्य चातुराश्रम्यस्य निषेकादि श्मशानान्तस्य क्रियाकलापस्यावभासकमपीदं शास्त्रं तपोरहितैर्मनसा दुःसंभाव्यमिति तपसैवासृजदित्याह

**प्रजापतिरिति**। सर्गादावृषयोऽपि सुप्तप्रबुद्धस्येव तपोबलादेव वेदानापुरित्याह तथैवेति। **प्रपेदिरे** प्रापुरिति तपोमहीकरणम् ।। २४२ ।।

(५) नन्दनः। तपसा दुष्करमपि कर्तुं शक्यमित्यत्र पुनरप्युदाहरति **प्रजापतिरिदं सर्वमिति**। इदं शास्त्रमिति च पठन्ति ।। २४२ ।।

(६) **रामचन्द्रः। इदं शास्त्रं** मानवं शास्त्रं तपसैव प्रभुः ब्रह्मा असृजत् ।। २४२ ।।

(७) **मणिरामः। प्रतिपेदिरे** प्राप्तवंतः।। २४२ ।।

(८) गोविन्दराजः। **प्रजापतिरिति**। हिरण्यगर्भः सकलजनोत्पत्तिस्थितिप्रभुरपि तपश्चरणपूर्वकमेवैनं ग्रन्थमकरोत्। तथा **ऋषयो** वसिष्ठादयः तपसैव मन्त्रदमसंपन्नाः ।। २४२ ।।

(९) भारुचिः। प्रजापतिरपि भूत्वा तपश्शरण इति कर्तव्येषु, किं पुनर्मनुष्या इत्यवमस्य स्तुतित्वं बोद्धव्यम् ।। २४२ ।।

**यदेतत्तपसो देवा महाभाग्यं प्रचक्षते ।।**
**सर्वस्यास्य प्रपश्यन्तस्तपसः पुण्यमुद्भवम् ।। २४३ ।।**

(१) **मेधातिथिः**। तपस्तुत्युपसंहारः। **यदेतत्तपसो महाभाग्यं** महाफलत्वमुक्तं **तद्देवाः प्रचक्षते,** न केवलं मनुष्या एव। **सर्वस्यास्येति** जगन्निदर्शयति। इतस्तस्य जगतः **पुण्यमुद्भवं** शुभजन्म **तपसः** सकाशात्**पश्यन्तः** ।। २४३ ।।

(२) **सर्वज्ञनारायणः**। **सर्वस्य** पूर्वोक्तकार्यस्य। **उद्भवं** जन्महेतुम्। तपसः सकाशात् परं पुण्यं पश्यन्तः ।। २४३ ।।

(३) **कुल्लूकः। सर्वस्यास्य** जन्तोर्यद्दुर्लभं जन्म तपसः प्रकाशादित्येवं देवाः प्रपश्यन्तः तपोमूलमिदं सर्वमित्यादि तपोमाहात्म्यं प्रवदन्ति ।। २४३ ।।

(४) **राघवानन्दः। किंच** देवादरत्वेनापि तपःप्राशस्त्यमाह इत्येतदिति। **सर्वस्य** प्राणिमात्रस्य अस्य सुखतत्साधनवस्त्रमाल्यादयः तपसः सकाशादुद्भवमुत्पत्तिम्। पुण्यं दुःखाननुविद्धं पुण्यो गन्ध इत्यादि स्मृतेः।। धर्मात्सुखं च ज्ञानं चेति स्मृतेः। तदेवं पुण्यमुद्भवं प्रपश्यन्तस्तपसो भाग्यमवश्यकर्तव्यतया भजनीयत्वं प्राहुरित्यन्वयः ।। २४३ ।।

(५) **नन्दनः। सर्वस्यास्य** प्रपञ्चस्य **पुण्यं** कल्याणमुत्तमं **तपसा पश्यन्तस्तपोनिमित्तं** पश्यन्तः ।। २४३ ।।

(६) **रामचन्द्रः**। इति एतत् देवाः तपसः महाभाग्यं प्रचक्षते ।।२४३।।

[**रामचन्द्रः**। ब्रह्मचर्यादयः स्वयंभुवा तपः उक्तम्। रागश्च द्वेषश्च लोभश्च रागद्वेषलोभाः ते न विद्यन्ते ।।१।।]*

---

*[**ब्रह्मचर्यं जपो होमः काले शुद्धाल्पभोजनम्। अरागद्वेषलोभाश्च तप उक्तं स्वयंभुवा ।।१।।**]

(७) **मणिरामः। सर्वस्याऽस्य** प्राणिनः। **पुण्यसमुद्भवं** दुर्लभं जन्म। तपसः प्रकाशात् देवाः प्रपश्यंतः तपोमूलमिदं सर्वमित्यादि तपसः **महाभाग्यं** माहात्म्यं **प्रचक्षते** प्रवदंति ।। २४३ ।।

(८) **गोविन्दराजः। इत्येवं तपसो देवा इति।** सर्वस्यास्य जगतो यत् शुभं जन्म तत्तपसः संकाशादित्येवं देवाः पश्यन्तः एतत्तपोमूलमिदं सर्वमित्यादि तपोमाहात्म्यं प्रवदन्तीति समस्ता तपःस्तुतिः ।। २४३ ।।

(९) **भारुचिः**। 'तपोमूलमिदं सर्वमि'त्येस्मात् श्लोकात् प्रभृति यावदयं श्लोक इयत्यत्र या तपस्तुतिः सा प्रकाशं प्रायश्चित्ततपसः। अथवा 'अनाविष्कृतपापास्त्वि'त्यतः प्रभृति रहस्यप्रायश्चित्तप्रकरणसामर्थ्यात् तत्तपःस्तुतिः, अविरोधादुभयोर्वा। अथवा तपःस्थितानाम-प्रत्ययकुशलकर्मनाशाय तपःस्तुतिरिति ।। २४३ ।।

**वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियाक्षमा ।।**
**नाशयन्त्याशु पापानि महापातकजान्यपि ।। २४४ ।।**

(१) **मेधातिथिः।** वेदाभ्यासादीनां नित्यानां कर्मणां पापप्रणोदनार्थताऽधिकारान्तर-त्वेनोच्यते। अनिर्दिष्टप्रायश्चित्तानामप्रत्ययकृतानां प्रतिभूतानां चैतद्विज्ञायते। अन्ये त्वाहुर्यदेवोक्तं 'ब्राह्मणस्य तपो ज्ञानम्' इति तपोविधानेन कर्मान्तरनिवृत्तिमाशङ्कमानस्य वचनं, इदमपि तथैव विज्ञेयम्। अनुसंधानार्थं **क्षमाग्रहणं** सर्वात्मगुणप्रदर्शनार्थम्। **महापातकजान्यपीति।** अपिशब्दात्स्तुतिः प्रतीयते न महापातकनिवृत्त्यर्थता न चाकस्मात्स प्रवर्तित इति तथा प्रदर्शितैर्विषयैर्विज्ञायते ।। २४४ ।।

(२) **सर्वज्ञनारायणः।** महायज्ञक्रिया वेदाभ्यासस्य तदन्तर्गतस्यापि पृथगुक्तिः। सर्वासंभवे वेदाभ्यासमात्रेण संसिद्धिरित्येतदर्थम् ।। २४४ ।।

(३) **कुल्लूकः।** यथाशक्ति प्रत्यहं वेदाध्ययनं पञ्चमहायज्ञानुष्ठानमपराधसहिष्णु-त्वमित्येतानि महापातकजनितान्यपि पापानि शीघ्रं नाशयन्ति किमुतान्यानि ।। २४४ ।।

(४) **राघवानन्दः।** कृच्छ्रादावशक्तस्याप्येतत्त्रयं महापातकादिनाशहेतुरित्याह **वेदेति।** महायज्ञा वैश्वदेवादयस्तेषां क्रियानुष्ठानम्। **क्षमा** अपराधसहिष्णुता ।। २४४ ।।

(५) **नन्दनः।** अथाध्ययनं प्रपञ्चयति वेदाभ्यासोऽन्वहं शक्त्येति ।। २४४ ।।

(६) **रामचन्द्रः।** पञ्चमहायज्ञक्रियाः क्षमायोग्याः ।। २४४ ।।

(७) **मणिरामः। क्षमा** अपराधसहिष्णुता ।। २४४ ।।

(८) **गोविन्दराजः। वेदाभ्यास इति।** यथाशक्ति प्रत्यहं वेदाध्ययनं पञ्चमहाय-ज्ञानुष्ठानमपराधमर्षणमित्येतानि पातकोत्पन्नानि अपि पापानि क्षिप्रं नाशयन्ति किमुतान्या-नीति। नित्यकर्मानुष्ठानस्यासंवेदितप्रतनुपापक्षपणहेतुत्वज्ञापनार्थमिदम् ।। २४४ ।।

(९) भारुचिः । प्रायश्चित्तप्रकरणे नित्यकर्मप्रशंसना कस्माद्युज्यत इति । यतः एतेषामपि पापक्षयहेतुत्वं विज्ञेयम् । न केवलमुत्कर्षार्थकमेवेति । अपरे त्वाहुः—अनिर्दिष्टप्रायश्चित्तानामेनसां प्रत्ययकृतानामप्रत्ययकृतानां चेतनूनामेतत्प्रायश्चित्तमिति ॥ २४४ ॥

**यथैधस्तेजसा वह्निः प्राप्तं निर्दहति क्षणात् ॥**
**तथा ज्ञानाग्निना पापं सर्वं दहति वेदवित् ॥ २४५ ॥**

(१) **मेधातिथिः**। ज्ञानप्रशंसेयम् । विदुषः स्वल्पेन प्रायश्चित्तेन शुद्धिरित्यस्मिन् प्रकरण आज्ञायते । **ज्ञानं च** सरहस्यं वेदार्थविषयं ज्ञेयम् । न प्रायश्चित्तविधिज्ञानं केवलं शुद्धये । प्रयोगार्थं तत् । न ह्यन्यथाप्रयोगोपपत्तिः । यस्तु देवादिसत्ताविज्ञानं रहस्याधिकारज्ञानं च तस्याकामार्थत्वाद्युक्तं 'तद्धि ताः पापनिष्क्रियाः' । आह च 'यथा पुष्करपलाश आपो न श्लिष्यन्ति एवमेवं विदि पापं कर्म न श्लिष्यतीति' (छान्दोग्य० ४।१४।३) । **एधो** दार्विन्धनम् । यथा शुष्कदारु चाग्नौ क्षिप्तं क्षिप्रं दह्यते एवं ज्ञानमग्निरिव पापस्य दाहकविनाशसामान्यादेवनुच्यते । **वेदविदिति** ज्ञानं विशिष्यते । तेन तर्ककलाकाव्यादिज्ञानमपास्तं भवति ॥ २४५ ॥

(२) **सर्वज्ञनारायणः । ज्ञानाग्निना** वेदार्थानुचिन्तनेनाग्निनेव दुष्करप्रतिबन्धेन ॥२४५॥

(३) **कुल्लूकः**। यथाग्निः काष्ठान्यासन्नानि क्षणेनैव तेजसा निःशेषं करोति तथा ज्ञानाग्निना पापं सर्वं वेदार्थज्ञो ब्राह्मणो नाशयतीत्येतत्परमात्मज्ञानस्यैतत्पापक्षयोत्कर्षज्ञापनार्थमेतत् ॥ २४५ ॥

(४) **राघवानन्दः**। ज्ञानमेव पावनमविद्यानाशद्वारा समूलकाषं कषति नान्यदित्याह **यथेति** । तथा च श्रुतिस्मृती । सर्वे पाप्मानोऽतो निवर्तन्ते ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ न ह वा एवं विदि किंचन पापं विद्यते यथा लोष्टो रजसा ध्वंसते ॥ यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ॥ ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा । न हि ज्ञानेन सदृशं पवित्रमिह विद्यत इति ॥ एते श्लोका गोविन्दराजसंमता मेधातिथिसंमता इति । वस्तुतस्तु अनाविष्कृतपापानामित्यनेन गतार्थत्वात् ॥ २४५ ॥

(५) **नन्दनः । ज्ञानाग्निना** मन्त्रज्ञानाग्निना कुत एवं व्याख्यायते अस्य प्रकरणस्याध्ययनप्राधान्यात् ॥ २४५ ॥

(६) **रामचन्द्रः**। यथा **एधान्** काष्ठानि वह्निः तत्क्षणाद्दहति तथा ॥ २४५ ॥

(८) **गोविन्दराजः**। **यथैधांस्तेजसा वह्निः** यथाग्निः काष्ठानि प्राप्य क्षणेनैव तेजसा निःशेषेण दहति तथा ज्ञानाग्निना पापं सर्वं दहति वेदार्थज्ञः आत्मज्ञानस्य पापक्षपणहेतुत्वज्ञापनार्थमेतत् ॥ २४५ ॥

(९) **भारुचिः** । न केवलं वेदाभ्यासः; किं तर्हि तद्विज्ञानमपि । शुद्धये वेदार्थविदाम् । इतरथा हि—प्रायश्चित्तप्रकरणे स्तुतिरस्यानर्थिका स्यात् । अपरे तु प्रायश्चित्तानुष्ठान-

विज्ञानस्तुतिमेतां मन्यन्ते। तदयुक्तम्, अर्थगृहीतत्वात् प्रयोगविज्ञानस्य। यतः अन्व-द्देवतादिसतत्त्वविज्ञानमिदं विज्ञेयम्। तथा चोक्तम्, **कृत्स्नं दहति वेदविदिति** ॥ २४५ ॥

**इत्येतदेनसामुक्तं प्रायश्चित्तं यथाविधि ॥**
**अत ऊर्ध्वं रहस्यानां प्रायश्चित्तं निबोधत ॥ २४६ ॥**

(१) **मेधातिथिः**। पूर्वोत्तरप्रकरणाभिसंबन्धार्थः ॥ २४६ ॥

(२) **सर्वज्ञनारायणः**। **रहस्यानाम**प्रकाशानां पापानाम् ॥ २४६ ॥

(३) **कुल्लूकः**। इत्येतद्ब्रह्महत्यादीनां पापानां प्रकाशानां प्रायश्चित्तं यथा-विध्यभिहितं अत ऊर्ध्वमप्रकाशानां पापानां प्रायश्चित्तं शृणुत। अयं श्लोको **गोविन्द-**राजेनालिखितः मेधातिथिना तु लिखित एव ॥ २४६ ॥

(४) **राघवानन्दः**। विस्पष्टपापानां प्रायश्चित्तमुपसंहरन्रहस्यानां तत्प्रतिजानीते **इती**ति। एष **विधिः** प्रकारः। एषामिति पाठे एषां रहस्यानाम् ॥ २४६ ॥

(६) **रामचंद्रः**। एतत् **एनसां** पापानां प्रायश्चित्तं उक्तं विशुद्ध्यै उक्तम् ॥ २४६ ॥

(७) **मणिरामः**। **रहस्यानां** अप्रकाशपापानाम् ॥ २४६ ॥

(८) **गोविन्दराजः**। **इदानीं रहस्यप्रायश्चित्तान्याह इतीति** ॥ २४६ ॥

**सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश ॥**
**अपि भ्रूणहणं मासात्पुनंत्यहरहः कृताः ॥ २४७ ॥**

(१) **मेधातिथिः**। मुखनासिकासंचारी वायुः **प्राण**स्तस्या**यामो** निरोधः। स चोभयथा प्राणप्रवृत्तेर्बहिः क्रमतोऽपानप्रवृत्तेर्वा यद्रेचकाख्यं प्रसिद्धम्। **व्याहृतयः** सप्त। **प्रणव** ओंकारः। व्याहृतिभिः प्रणवेन च सह प्राणायामाः कर्तव्या इति। **षोडशे**त्यावृत्तिसंख्यानम्। कीदृशः **सहभावः**। केचिदाहुः। प्राणायामं कृत्वा व्याहृतिः प्रणवजपः प्रत्यावृत्ति कर्तव्यः। अन्ये त्वाहुः। श्वासनिरोधकाले ध्यातव्याः। किंपरिमाणः प्राणायामानां कालः। यावता नाति-महती श्वासनिरोधनपीडा जायते। कुंभकरेचकपूरकाश्च प्राणायामाः स्मर्यन्ते, न श्वास-निरोधमात्रम्। यथाऽप्रमाणं नासिद्धेरिति, असाध्यतयैव परिमाणानाम्। **अपि भ्रूणहनमपि** शब्दात्तत्समेषु ॥ २४७ ॥

(२) **सर्वज्ञनारायणः**। सव्याहृतीः सप्रणवा इति एतदुपलक्षणं सावित्र्याः शिरसश्च। **मासादिति** च यावदब्दवचनमनुवर्तते। अनुक्तसंख्येषु च सूक्तादिषु प्रत्यहं शतमष्टोत्तरं जप्यम्। अनादेशे तु संख्यायाः शतमष्टोत्तरमिति सामान्यविधानात्। २४७ ॥

(३) **कुल्लूकः**। सव्याहृतिसप्रणवाः सावित्रीशिरोयुक्ताः पूरककुम्भकरेचकादिविधिना प्रत्यहं षोडशप्राणायामाः कृता मासाद्ब्रह्मघ्नमपि निष्पापं कुर्वन्ति। अपि शब्दादातिदेशिक-ब्रह्महत्याप्रायश्चित्ताधिकृतमपि एतच्च प्रायश्चित्तं द्विजातीनामेव न स्त्रीशूद्रादेर्मन्त्रानधि-कारात् ॥ २४७ ॥

(४) राघवानन्दः। महापातकानुपातकोपपातकेषु स्पष्टेषु मन्त्रहोमख्यापनानुताप-पयोव्रताध्ययनदानवेदाभ्यासमहायज्ञक्षमाज्ञानानि सामान्यतो विशेषतश्च नाशकत्वेनोक्तानि। इदानीं तेषां रहसि कृतानां प्रतिस्विकव्यवस्थितनाशसाधनान्याह सव्याहृतिमित्यष्टादशभिः। अपि नातिदेशिकपातकसंग्रहार्थः। मासान्मासावधि अहरहः कृताः प्रत्यहमभ्यस्यमानाः पुनन्ति भ्रूणहनं ब्रह्मघ्नं शोधयन्तीत्यन्वयः ॥ २४७॥

(६) रामचन्द्रः। सव्याहृतिकाः प्रणवाः षोडश प्राणायामाः अहरहः कृता अपि भ्रूणहनं मासात्पुनंति ॥ २४७॥

(८) गोविन्दराजः। सव्याहृतिका इति। भूर्भुवः स्वर्महर्जनस्तपःसत्यमित्येतत् समस्तव्याहृत्योंकारसहिताः षोडशप्राणायामाः। सव्याहृतीं सप्रणवां गायत्रीं शिरसा सह। त्रिः पठेदायतप्राणः प्राणायामः स उच्यते। इति वसिष्ठलक्षिताः कुंभकपूरकरेचकविधानेन प्रत्यहं मासं कृता ब्रह्महत्यापापमप्यपिशब्दात्तत्सर्वातिदेशिकमप्यपनुदन्ति। तत्र बाह्याभ्यन्तरवाय्वोः प्रकोष्ठप्रवेशनिष्क्रमणनिरोधः कुंभको बाह्येन वायुना कोष्ठपरिपूरणं पूरकः कोष्ठस्य वायोरनवरतोत्सर्गो रेचक इति द्विजातीनामेव पुंसां रहस्यप्रायश्चित्ताधिकारो न तु क्षुद्रस्त्रीजपहोमप्राधान्यात्। रहस्यप्रायश्चित्तानाम् ॥ अविदित्वा ऋषिच्छन्दो दैवतं योगमेव वा। योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु सः। इति व्यासस्मरणात् प्रायश्चित्तविनियुक्तमर्थं देवतादि सत्त्वतत्त्वावबोधमात्रे वा अधिकारो न त्वन्यत्र विद्वत्तोपयुज्यते श्रौतकर्मपरिदर्शनादियोगे प्रयोगाधिकृतो कर्मान्तरगतविज्ञानोपयोगोऽस्ति ॥ २४७॥

(९) भारुचिः। तदिदानीं रहस्यप्रायश्चित्तमुपदिश्यते ॥ २४८॥

**कौत्सं जप्त्वाप इत्येतद्वासिष्ठं च प्रतीत्यृचम् ॥**
**माहित्रं शुद्धवत्यश्च सुरापोऽपि विशुध्यति ॥ २४८॥**

(१) मेधातिथिः। कुत्सेन ऋषिणा दृष्टं प्रोक्तं **कौत्सम्**। 'अपनः शोशुचदघम्' (ऋग्वेद १।९७।१) इत्यष्टर्चं बह्वृचे पठ्यते। **वासिष्ठं च प्रतीत्यृचं** तिस्र ऋचः समाहृतास्त्यृचम्। प्रतीतिसूक्तादिप्रतीकार्थं चेति। 'प्रतिस्तोमेभिरुषसं वसिष्ठा' (ऋग्वेद ७।८०।१) इत्येतत्। 'माहित्रं महित्रीणाम्' इति (ऋग्वेद १०।१८५।१) तृचमेव। महित्रृशब्दोऽस्मिन् सूक्तेऽस्तीति विमुक्तादिप्रक्षेपात्। ये तु 'माहेन्द्रमि'ति पठन्ति तेषां 'महां इन्द्रो य ओजसे' (ऋग्वेद ८।६।१) इत्यष्टचत्वारिंशतं पयःसूक्तमाहुः। **शुद्धवत्यश्च** 'एतोन्विन्द्रं स्तवां शुद्धं शुद्धेन' (ऋग्वेद ८।९५।७) इति। अत्रापि शब्दस्तत्समानार्थः ॥ २४८॥

(२) सर्वज्ञनारायणः। **कौत्सं** कुत्सदृष्टमपनः शोशुचदघमिति सूक्तम्। वसिष्ठदृष्टं प्रतिस्तोमेभिरिति तृचं ऋक्त्रयम्। **माहेन्द्रं** 'महां इन्द्रो य ओजसेति' तृचम्। माहित्रमिति क्वचित्पाठः। तत्र महित्रीणामवोस्त्विपि तृचं ग्राह्यम्। **शुद्धवत्यः** शुद्धवतीः एतोन्विन्द्रमिति तृचम्। एतत्सर्वं वक्ष्यमाणं च प्रत्येकमेव प्रायश्चित्तं नैकैकश्लोकोक्तं समुदितम् ॥ २४८॥

(३) कुल्लूकः। कौत्सेन ऋषिणा दृष्टं 'अपनः शोशुचदघमित्येतत्सूक्तं' वसिष्ठेन ऋषिणा दृष्टं च। प्रतिस्तोमेभिरुषसं वशिष्ठा इत्येवं ऋचं माहित्रं महित्रीणामवोस्त्विन्येतत्सूक्तं

**शुद्धवत्य** 'एतोन्विन्द्रं स्तवामशुद्धमि'त्येतास्तिस्र **ऋचः**। प्रकृतं मासमहरहः षोडशकृत्वोऽपि जपित्वा सुरापोऽपि विशुध्यति अपिशब्दादातिदेशिकसुरापानप्रायश्चित्ताधिकृतोऽपि ॥ २४८ ॥

(४) **राघवानन्दः**। **कौत्सं** कुत्सनाम्र्षिणा दृष्टम्। अपनः शोशुचदघमित्येतत्सूक्तम्। एवं वासिष्टमपि प्रतिस्तोमेभिरुषसं वसिष्ठामित्येतामृचम्। माहित्रं महित्रीणामवोचमित्येतत्सूक्तम्। **शुद्धवत्यः** एतोन्विन्द्रं स्तवामेति शुद्धं शुद्धेनेति। एतास्तिस्र ऋचः। प्रकृतत्वान्मासादेर्मासं व्याप्य प्रतिदिनं षोडशकृत्वो जपित्वा शुध्यत्येव। अपिशब्दादतिदिष्टसुरापानादिकृतोऽपि ॥ २४८ ॥

(५) **नन्दनः**। अपेत्येतदपनः शोशुचदघमित्यादिकं प्रतिस्तोमेभिरुषसं वसिष्ठा इत्यादिकं वासिष्ठं तृचं माहित्रं सुक्तं महित्रीणामवोस्त्वित्यादिकं शुद्धशब्दयुक्तास्ता ऋचः शुद्धलिङ्गा एतानिन्द्रं स्तवाम इत्याद्याः ॥ २४८ ॥

(६) **रामचन्द्रः**। **कौत्सं** कुत्सदृष्टं 'अपनः शोशुचदघमि'त्येतत् जपेत् **वासिष्ठं** 'प्रतिस्तोमेभिरि'ति वसिष्ठदृष्टं तिसृणामृचां सामाहारस्तृचं इति वा **माहित्रं** 'महाँ इन्द्रो य ओजसे'ति तृचं एतोन्विन्द्रं स्तवां शुद्धमिति तृचं सुरापोऽपि विशुध्यति ॥ २४८ ॥

(७) **मणिरामः**। **कौत्सं जप्त्वाप इत्येतत्**। कौत्सेन ऋषिणा अपनः शोशुचदघमित्येतत्सूक्तम्। **वासिष्ठं च** प्रतीत्पृचं वसिष्ठेन ऋषिणा दृष्टं प्रतिस्तोमेभिरुषसं इत्येवं ऋचम्। **माहित्रं** महित्रीणामधोस्त्वित्येतत्सूक्तम्। **शुद्धवत्यश्च** शुद्धवत्य एव तान्निर्णस्तवानशुद्ध इत्येतास्तिस्रः ऋचः। प्रकृतं मासमहरहः षोऽश कृत्वोऽपि जपित्वा सुरापो विशुद्धयति ॥ २४८ ॥

(८) **गोविन्दराजः**। **कौत्सं जप्त्वाप इतीति**। माहेन्द्रमिति। कुत्सेन ऋषिणा दृष्टमपनः शोशुचदधमित्येतत् सुक्तं वसिष्ठदृष्टं **च** प्रतिस्तोमेभिरित्येतस्य तृचं महाँ इन्द्रो य ओजसेत्येतच्च सूक्तमेतोन्विन्द्रं स्तवामेत्येताश्च **शुद्धवत्य** ऋचः प्रकृतं मासमहरहः षोडशकृत्वो जपित्वा सुरापोऽप्यपिशब्दात् तत्साम्यादि देशिकाधिकृतोऽपि विशुध्यति ॥ २४८ ॥

(९) **भारुचिः**। ब्रह्महत्यायामभिधाय, रहस्यं सुरापस्येदानीमाह। अत्र दृष्टान्तमाह **कौत्सं** सूक्तम् 'अपनश्शोशुचदघमित्येतदष्टर्चलक्षितम्। वाग्दैविकं **वासिष्ठं** "प्रतिस्तोमेभिरुषसं वसिष्ठा' इत्येतत्। **माहेन्द्रं** 'महां इन्द्रो य ओजसे' त्येतदष्टाचत्वारिंशदर्चम्। अन्ये तु **माहित्रं** पठन्ति। मन्त्रं चेममाहुः—'महित्रीणामवोऽस्त्वि' त्येवम्। **शुद्धवत्य** ऋचः प्रसिद्धाः ॥ २४६ ॥

**सकृज्जप्त्वाऽस्य वामीयं शिवसंकल्पमेव च ॥**
**अपहृत्य सुवर्णं तु क्षणाद्भवति निर्मलः ॥ २४९ ॥**

(१) **मेधातिथिः**। अत्र सकृत्ग्रहणात् पूर्वत्र पाठावृत्तिः प्रतीयते। सा च समाचारादन्यत्र दर्शनाच्च। 'त्रिर्जपित्वाऽघमर्षणमि'त्यत्रापेक्षायामधिकृतेन संबन्धः। 'अस्य वाम' शब्दोऽस्मिन् सूक्तेऽस्तीति 'मतौच्छः सूक्तनाम्नोरिति' (पाणि० सू० ५-२-५९) शब्दव्युत्पत्तिः। 'अस्य वामस्य पलितस्य होतुरिति' (ऋग्वेद १-१६४-१) द्वापंचाशदृचं सूक्तम्। **शिवसंकल्पमपि** 'यज्जाग्रतोदूरमुदैति' इति वाजसनेयषड्चम्॥ २४९ ॥

(२) **सर्वज्ञनारायणः।** अस्य वामीयमस्य वामस्य पलितस्येत्यादि सरस्वन्तभवसे-जोहवीमीत्यन्तम्। सकृत्सकृत्प्रत्यहं जपित्वा। **शिवसंकल्पं** यज्जाग्रत इत्यादिषड्‌चम्। **क्षणान्मासात्** न तत्क्षण एव ।। २४९ ।।

(३) **कुल्लूकः।** ब्राह्मणसुवर्णमपहृत्यास्य वामस्य पलितस्य एतत्सूक्तं प्रकृतत्वान्मासमेकं प्रत्यहमेकवारं जपित्वा **शिवसंकल्पं च** यज्जाग्रतोदुरमित्येतद्वाजसनेयके यत्पठितं तज्जपित्वा सुवर्णमपहृत्य क्षिप्रमेव निष्पापो भवति ।। २४९ ।।

(४) **राघवानन्दः। अस्य वामीयं** अस्य वामस्येति द्विपञ्चाशत्सूक्तम्। प्रकृतत्वान्मासमेकं सकृत्प्रत्यहमेकवारं जपित्वा। शिवसंकल्पं च यज्जाग्रत इति वाजसनेयपठितम्। एतद्द्वयं जपित्वा विप्रसुवर्णहर्ता **निर्मलो** निष्पापः ।। २४९ ।।

(५) **नन्दनः। अस्य वामीयं** अस्य वामस्य पलितस्य होतुरित्यादिकं यज्जाग्रतोदूरमुपैतीत्यादिकं सूक्तं शिवसंकल्पः ।। २४९ ।।

(६) **रामचन्द्रः।** सकृत् प्रत्यहं वामीयं च पुनः शिवसंकल्पं इति द्वयं सुवर्णस्तेयी जप्त्वा तत्क्षणात् निर्मलो भवति ।। २४९ ।।

(७) **मणिरामः। अस्य वामीयं** अस्य वामीयस्य प्रणितस्य एतत्सूक्तम्। प्रकृतत्वान्मासमेकमेकवारं जपित्वा। शिवसंकल्पं यज्जाग्रतो दूरमिति यजुर्वेदोक्तम् ।। २४९ ।।

(८) **गोविन्दराजः। सकृदिति।** ब्राह्मणः सुवर्णमपहृत्यास्य वामस्येत्येतत्सूक्तं प्रकृतमहरहरेकवारं जपित्वा **शिवसंकल्पं** च यज्जाग्रतो दूरमुदैति दैवमित्येतत् जपित्वा क्षिप्रमेव विपापो भवति ।। २४९ ।।

(९) **भारुचिः।** 'अस्य वामस्य पलितस्य होतुरिति' द्विपञ्चाशदृग्लक्षितं सूक्त**मास्य-वामीयम्। शिवसङ्कल्पमपि** सूक्तं 'यज्जाग्रतो दूरमुपैति दैवमिति, षड्गुपलक्षितम्। **सकृदिति** च प्रत्यहमेतज्जपकर्ममासं ज्ञेयम्, अधिकारात् उक्तं हि—**'अपि भ्रूणहनं मासादि'**ति" ।। २४९ ।।

**हविष्यान्तीयमभ्यस्य न तमं ह इतीति च ।।**
**जपित्वा पौरुषं सूक्तं मुच्यते गुरुतल्पगः ।। २५० ।।**

(१) **मेधातिथिः।** प्रतीकार्थो द्वितीय इतिकरणः पदार्थविपर्यासकृत्। ततो मन्त्र-स्वरूपग्रहणमिति वेत्यत्र लभ्यते। **पौरुषं** 'सहस्रशीर्षा पुरुष' (ऋग्वेदे १०-९०-१) इति षोडशर्चं सूक्तम् ।। २५० ।।

(२) **सर्वज्ञनाराणः। हविष्यन्तीयं** हविष्याङ्गमजरमित्यादिब्राह्मणो होतुरवरो निषीदन्नित्यन्तम्। न तमं हो न दुरितमित्यष्टर्चम्। **इतीति च** इति वा इति मे मन इति सूक्तम्। **पौरुषं** सहस्रशीर्षेति ।। २५० ।।

(३) **कुल्लूकः** । हविष्यन्तमजरं स्वर्विदामेकोनविंशतिऋचः न तमं हो न दुरितमित्यष्टौ इति वा इति मे मनः शिवसंकल्प इति च सूक्तं सहस्रशीर्षा पुरुष इत्येतच्च षोडशर्चसूक्तं मासमेकं प्रत्यहमभ्यस्येति श्रवणात्प्रकृतत्वात् षोडशाभ्यासात् जपित्वा गुरुदारगः तस्मात्पापान्मुच्यते ।। २५० ।।

(४) **राघवानन्दः** । गुरुतल्पगस्याह **हविष्यान्तीति** । हविष्यान्तमजरमिति एकोनविंशतिर्ऋचः । न तमं हो न इति अष्टौ । हविष्यान्तमजरमिति मेधातिथिः । **पौरुषं** सहस्रशीर्षेति षोडशर्चं शाखाभेदेन न्यूनाधिकमपि अत्रापि मासावच्छिन्नो जपः । अभ्यस्येति प्रत्यहं षोडशधा ।। २५० ।।

(५) **नन्दनः** । हविष्यान्तमजरं स्वर्विदमित्यादिकं हविष्यन्तीयं न तमं हो न दुरितमित्यादिकं न तमं ह **इतीति** चेत्यत्रेति शब्देनेति मे मन इत्यत्रस्य सूक्तस्य ग्रहणम् ।। २५० ।।

(६) **रामचन्द्रः** । हविष्यन्तीयं अभ्यस्य जप्त्वा न तमं ह इति जप्त्वा **पौरुषं** सूक्तं सहस्रशीर्षेति ।। २५० ।।

(७) **मणिरामः** । हविष्यंतीयमभ्यस्य हविष्यांगमजरं स्वर्विदामित्याद्येकोनविंशतिऋचः । न तमं ह इतीति **च** न तमं हो दुरितमित्यष्टौ । **पौरुषं** सूक्तं सहस्रशीर्षा पुरुष इति षोऽशर्चसूक्तम् ।। २५० ।।

(८) **गोविन्दराजः** । **हविष्यान्तीयमिति** । हविष्यान्तमजरं न तमं हो न दुरितमिति च इति मे मनः सहस्रशीर्षा पुरुष इत्येतानि सूक्तानि प्रकृतं मासं प्रत्यहं अभ्यासेन जपित्वा गुरुदारगस्तत्पापमपहरति ।। २५० ।।

(९) **भारुचिः** । मासोति वर्तते **सकृदिति** च । 'हविष्पान्तमि'त्येकोनविंशर्चम् । "न तमंहो न दुरितं" इत्यष्टर्चम् । "इति वा इतिमे मनः" इति द्वादशर्चं "सहस्त्रशीर्षा पुरुष" इति पौरुषं सूक्तं षोडशर्चम् । ।। २५० ।।

## एनसां स्थूलसूक्ष्माणां चिकीर्षन्नपनोदनम् ।।
## अवेत्यृचं जपेदब्दं यत्किंचेदमितीति वा ।। २५१ ।।

(१) **मेधातिथिः** । अर्वाङ्महापातकेभ्य **एनांसि स्थूलसूक्ष्माण्युच्यन्ते** उपपातकादीनि । तेषा**मपनोदनं चिकीर्षन् अवेत्यृचं जपेदब्दम्** । अवेत्यवशब्देन प्रतीकेन 'अव ते हेळो वरुण नमोभिः' (ऋग्वेद १-२४-१४) इति लक्ष्यते, पापप्रमोचनलिङ्गत्वात् । न त्वतत्संदुहेणायत इति 'यत्किचेदं वरुण दैव्ये जन' (ऋग्वेद ७-८९-५) इति एषाम् ।। २५१ ।।

(२) **सर्वज्ञनारायणः** । **स्थूलानि** महापातकादीनि । **सूक्ष्माणि** ज्ञातिविभ्रंशकरादीनि । अवेत्यृचं अव ते हेळो वरुणेत्येकामृचम् । **यत्किचेदं** वरुणेति **चर्चम्** । इतीति चेति तथेत्यर्थः । नत्वेतदपि सूक्तप्रतीकग्रहणम् ।। २५१ ।।

(३) **कुल्लूकः** । **स्थूलानां** पापानां महापातकानां **सूक्ष्माणां** चोपपातकादीनां निर्हरणं

कर्तुमिच्छन् अव ते हेळो वरुण नमोभिरित्येतामृचं यत्किञ्चेदं वरुणदैव्ये जन इत्येतां च ऋचाम् इति वा इति मे मन इत्येतत्सूक्तं संवत्सरमेकवारं प्रत्यहं जपेत् ।। २५१ ।।

(४) **राघवानन्दः।** किंच एनसां **स्थूलसूक्ष्मणां** महापातकोपपातकानाम् । **अवेत्यृचं** अव ते हेळो वरुण नमोभिरित्येतामृचं अब्दं व्याप्य प्रत्यहमेकवारं जपित्वा **अपनोदनं** नाशं **चिकीर्षुर्नाशयेदिति** शेषः । यत्किंचेदं वरुणदैव्ये जन इति **एतामृचं** एतत्सूक्तं वा ।। २५१ ।।

(५) **नन्दनः।** अथ सर्वपापसाधारणं ध्यानमाह **एनसां स्थूलसूक्ष्माणामिति।** **अवेत्यृचं** अव ते हेळो वरुण नमोभिरिति यत्किञ्चेदं वरुणमितीत्यत्रेति शब्दानुषङ्गेण संबध्यते इतीति वेतीति वा इति मे मन इति सूक्तं वेत्यर्थः ।। २५१ ।।

(६) **रामचन्द्रः। स्थूलसूक्ष्मणां एनसां** महापातकादिजातिभ्रंशकरादीनां अपनोदनं चिकीर्षन् **अवेति** अव ते हेळो वरुण नमोभिरित्येकामृचं जपेत् **अब्दं** अब्दपर्यन्तं यत्किंचेदं वरुणेति तृचम् ।। २५१ ।।

(७) **मणिरामः।** अपनोदनं **चिकीर्षन्** दूरीकर्तुमिच्छन् । अवेत्यृचं अवेति हेलोरुण-योरित्येतामृचम् । यत्किंचित् यत्किंचिदिदं वरुणदैवो जल इल इत्येतामृचम् । अमितीति वा इति मे मन इत्येतत्सूक्तं वा । अब्दं संवत्सरमेकं प्रत्यहं जपेत् ।। २५१ ।।

(८) **गोविन्दराजः। एनसामिति।** स्थूलानां पापानां महापातकानां निर्हरणं कर्तुमिच्छन् अव ते हेळो वरुण नमोभिरित्येतामृचं यत्किञ्चेदं वरुणदेव्यै जन इत्येतां च संवत्सरं जपेत् ।। २५१ ।।

(९) **भारुचिः।** अर्वान्महापातकेभ्यः **एनांसि स्थूलसूक्ष्माणीत्युच्यन्ते,** उपपातका-दीनि ! तेषामपनोदनं **चिकीर्षन् 'अवेत्यृचं जपेदब्दम्,** 'अव द्वके अव त्रिका दिवश्चरन्ती'ति । अपरे तु सावित्रीमत्र पठन्ति । **यत्किञ्चेदमितीति च** इति यावत् ! 'यत्किञ्चेदं वरुणदैव्ये जन' इत्येवमादि ।। २५१ ।।

## प्रतिगृह्याप्रतिग्राह्यं भुक्त्वा चान्नं विगर्हितम् ।।
## जपंस्तरत्समंदीयं पूयते मानवस्त्र्यहात् ।। २५२ ।।

(१) **मेधातिथिः। अप्रतिग्राह्यं** मद्यादि यदप्यप्रतिग्राह्यं पापकर्मणः सुवर्णादि तदग्राह्यमेव । **विगर्हितमन्नं** चतुर्विधं स्वभावकालपरिग्रहसंसर्गदुष्टम् । 'तरत्समं दीधावति' (ऋग्वेद ९-५८-१) पावमानीषु चतुष्टयम् ।। २५२ ।।

(२) **सर्वज्ञनारायणः। विगर्हितं** लशुनादीनि । तरत्समन्दीयं तरत्समन्दीधावती-त्याद्यृक्चतुष्टयम् ।। २५२ ।।

(३) **कुल्लूकः।** स्वरूपतो महापातकिधनत्वादिना वा प्रतिग्राह्यं प्रतिगृह्य **चान्नं** स्वभावकालप्रतिग्रहसंसर्गदुष्टं भुक्त्वा तरत्समंदीधावतीत्येता ऋचश्चतस्रो जपित्वा त्र्यहं तस्मात्पापान्मनुष्यः पूतो भवति स्नानमर्यम्णामिति ऋक्तृचं वा ।। २५२ ।।

(४) **राघवानन्दः।** किंच **प्रतीति।** प्रतिगृह्याप्रतिग्राह्यं अप्रतिग्राह्यं स्वरूपतो महापातकिधनं प्रतिगृह्य। अनापत्काले **च** गर्हितान्नादि भुक्त्वा **च तरत्समन्दीयं** तरत्समन्दीधावतीत्येताश्चतस्रो ऋचः ॥ २५२ ॥

(६) **रामचन्द्रः।** अप्रतिग्राह्यं प्रतिगृह्य विगर्हितमन्नं **च** भुक्त्वा **तरत्समन्दीयं** तरत्समन्दीधावतीति धारामुतस्यांध्रसः तरत्समंदीधावतीति ऋचं जपन् त्र्यहान्मानवः पूयते ॥ २५२ ॥

(७) **मणिरामः। भवत्सगंदीयं** भवत्समल्लीवावतीत्येताश्चतस्रो **ऋचः** ॥ २५२ ॥

(८) **गोविन्दराजः। प्रतिगृह्येति।** निषिद्धप्रतिग्रहं सुरादिभुक्त्वा तरत्समन्दी जपित्वा द्विजातिर्दिवसत्रयेण पवित्रीभवति ॥ २५२ ॥

(९) भारुचिः। तरत्समन्द्यः प्रसिद्धाः ॥ २५२ ॥

**सोमारौद्रं तु बह्वेनाः समामभ्यस्य शुध्यति ॥**
**स्रवन्त्यामाचरन्स्नानमर्यम्णामिति च तृचम् ॥ २५३ ॥**

(१) **मेधातिथिः।** 'सोमा रुद्रा धारयेथामस्त्रम्' इति (ऋग्वेद ६-७४-१) चतस्रो यज्ञं च भरणानीन्द्रियं चेति ऋक्। **समां** संवत्सरम्। नाह्वानः। इदं लिङ्गं यदुक्तं क्वचित्तन्त्रेणापि प्रायश्चित्तमस्तीति। **स्रवन्त्यामिति** तडागसरसी निवर्तेते ॥ २५३ ॥

(२) **सर्वज्ञनारायणः। सोमारौद्रं** सोमा रुद्रा धारयेथामित्यृक्चतुष्टयम्। बह्वेना बहुक्षुद्रपापः। **अर्यम्णां** अर्यमणं वरुणं मित्रं चेति तृचम् ॥ २५३ ॥

(३) **कुल्लूकः।** सोमा रुद्रा धारयेथ्यामस्वयमिति चतस्रः अर्यमणं वरुणं मित्रं चेति ऋक्त्रयं नद्यां **च** स्नानं कृत्वा मासमेकं प्रत्येकमभ्यस्य बहुपापो विशुध्यति बहुष्वपि पापेषु तन्त्रेणैकं प्रायश्चित्तं कार्यमिति ज्ञापकमिदम् ॥ २५३ ॥

(४) **राघवानन्दः। सोमारुद्रं** तु सोमा रुद्रा धारायेथामनसुर्यमिति **चतस्रो ऋचः बह्वेनाः** बहुपापयुक् प्रत्यहं षोडशधाभ्यस्य शुध्यतीत्यन्वयः। **अर्यम्णमिति** अर्यम्णं वरुणं मित्रं चेति ऋक्त्रयम्। **स्रवन्त्यां** गङ्गादिनद्याम्। अत्र मन्त्रयोर्विकल्पो जपस्नानं साधारणम् ॥ २५३ ॥

(५) **नन्दनः। सोमारौद्रं** सोमो रुद्रदेवत्यं सूक्तं सोमा रुद्रा धारयेश्यामस्वयमित्यादि **बह्वेनाः** बहुपापः अर्यम्णमृचं मायातिवृषभस्तु विष्टानित्यादिकम् ॥ २५३ ॥

(६) **रामचन्द्रः। सोमारौद्रं** बह्वेनाः सोमा रुद्रा धारयेथामसुर्यमित्यृक्चतुष्टयं मासमभ्यस्य शुध्यति ॥ २५३ ॥

(७) **मणिरामः। सोमारौद्रं** सोमवल्लीवावतीत्येताश्चतस्रो ऋचः। अर्यमणमिति ऋक्द्वयं **च स्रवंत्यां** नद्यां स्नानं **आचरन्** कृत्वा मासमेकं प्रत्येकमभ्यस्य **बह्वेनाः** बहुपापः शुद्ध्यति। बहुष्वपि पापेषु तंत्रेणैकं प्रायश्चित्तं कार्यमिति ज्ञापनार्थमिदं बोध्यम् ॥ २५३ ॥

(८) **गोविन्दराजः। सोमारौद्रमिति।** अनेन पापकृत् सोमा रुद्रा धारयेथामसुर्यमित्येतत्सूक्तमर्यवणं वरुणं मित्रं चेत्येतां **च** ऋचं मासमहरहरभ्यस्य नद्यां स्नानं कुर्वन् शुध्यति ॥ २५३ ॥

(९) भारुचिः। सोमारौद्रौ मन्त्रौ तत्र रौद्रो "मा ता रुद्र चुक्रुधामा नमोभिरिति"। सौम्यः "सोमः पवते जनिता मतीनामिति" च। 'अर्यम्णामित्येषु' मन्त्रः ऋग्वेदाद्-गमयितव्यः ॥ २५३ ॥

**अब्दार्थमिन्द्रमित्येतदेनस्वी सप्तकं जपेत् ॥**
**अप्रशस्तं तु कृत्वाऽप्सु मासमासीत भैक्षभुक् ॥ २५४ ॥**

(१) **मेधातिथिः**। 'इंद्रं मित्रं वरुणमग्निम्' (ऋग्वेद १-१०६-१-७) इत्येतत्सप्तकम्। **अब्दार्धं** षण्मासान्। **जपेदेनस्वी**त्यविशेषात्सर्वैनसाम्। **अप्रशस्तं** मैथुनं तत्र पुरीषोत्सर्गो वा। तदप्सु कृत्वा **मासं** भैक्षाहारो भवेत् ॥ २५४ ॥

(२) सर्वज्ञनारायणः। इन्द्रं मित्रं वरुणमग्निमूतय इत्यादिसप्तर्च**मेनस्वी**। बहुपापयुक्तः। अप्रकाशं रहस्थं **कृत**मेनः पापं यत्किंचित् ॥ २५४ ॥

(३) **कुल्लूकः**। **एनस्वी**त्यविशेषात्सर्वेष्वेव पापेषु इन्द्रं मित्रं वरुणमग्निं त्रय इत्येताः सप्तऋचः षण्मासं जपेत्। **अप्रशस्तं** मूत्रपुरीषोत्सर्गादिकं जले कृत्वा मासं भैक्षभोजी भवेत् ॥ २५४ ॥

(४) **राघवानन्दः**। किंच **अब्दार्धं**मिति। इन्द्रमित्येताः सप्तर्चः अशीत्युत्तर-शतदिनानि प्रत्यहं जपेत्। **एनस्वी** मासं सर्वपापयुक्तः। **अप्रशस्तं** जलादौ मूत्रोत्सर्गादि कृत्वामितभुक् मासं व्याप्य गायत्रीमभ्यस्यासीतेति ॥ २५४ ॥

(५) **नन्दनः**। इन्द्रमिद्गाथिनो बृहदित्यादिकमृचां सप्तकं अप्रशस्तमलमूत्रादिकं कृत्वा ॥ २५४ ॥

(६) **रामचन्द्रः**। अब्दार्धं इन्द्रं मित्रं वरुणमग्निमूतयम् इति ऋचं **एनस्वी** एनः विद्यते यस्यासौ एनस्वी जपेत्। अप्रकाशमेनः कृत्वा भैक्ष्यभुग्मासमासीत ॥ २५४ ॥

(७) **मणिरामः**। **इंद्रमित्येत**त्सप्तकं इंद्रं मित्रं वरुणमग्निं त्रय इत्येताः सप्तऋचः **अब्दार्धं** षट्मासं जपेत्। एनस्वीत्यविशेषात्सर्वपापेष्विदं रहस्यप्रायश्चित्तं बोध्यम्। अप्सु **अप्रशस्तं** मूत्रपुरीषोत्सर्गं कृत्वा मासं भैक्ष्यभुक् आसीत ॥ २५४ ॥

(८) **गोविन्दराजः**। **अब्दार्धमिति**। अवशेषितत्वात् सर्वपापानामन्यतमकारी इन्द्रं मित्रमित्येतत्सप्तकं षण्मासान् जपेत् मैथुनं चोदकमध्ये कृत्वा मासं भैक्षासी स्यात् ॥ २५४ ॥

(९) **भारुचिः**। **अब्दार्धं** षण्मासात् "इन्द्रमिद्गाथिनो बृहदि"त्येतत् **सप्तकं जपेद**-विशेषात् सर्वस्मिन्नेनसि। **अप्रशस्तं तु कृत्वाप्सु** मैथुनं मासं भैक्षाहारस्तिष्ठेत् ॥ २५४ ॥

**मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः ॥**
**सुगुर्वप्यपहंत्येनो जप्त्वा वा नम इत्यृचम् ॥ २५५ ॥**

(१) **मेधातिथिः**। 'देवकृतस्यैनसोऽवयजनमसि' (वाजस० ८।१३) इत्येवमादयोऽष्टौ मन्त्राः शाकलहोमीयाः। **तैर्घृतमब्दं हुत्वा गुर्वप्यपहन्त्येनः**। सर्वमहापातकान्यपीत्यर्थः।

जपित्वा 'नमो रुद्राय तवसे कपर्दिन' (वाजस० ७ अ०) इत्येवं मन्त्रं संवत्सरमेवमेतां सिद्धिमाप्नुयात्, अन्तरेणापि शाकलहोमम्। तदिदं वैकल्पिकं जपकर्मपूर्वेण शाकलमन्त्रहोमेन प्रायश्चित्तम्। अन्येन वा जपित्वा यामन इत्यृचम्। सा तु शिष्टेभ्यः सुगमयितव्या ।। २५५ ।।

(२) **सर्वज्ञनारायणः। शाकलहोमीयैः** देवकृतस्यैनस इत्यादिभिर्मन्त्रैरष्टभिरष्टाहुतीः प्रत्यहं जुहुयात् **प्रत्यहं** वाष्टोत्तरशतावृत्त्या। नम इत्यृचं नम आविवेश इत्यृचमब्दं जपेत् ।। २५५ ।।

(३) **कुल्लूकः।** देवकृतस्येत्यादिभिः शाकलहोममन्त्रैः संवत्सरं घृतहोमं कृत्वा नम इन्द्रश्चेत्येतां वा ऋचं संवत्सरं जपित्वा महापातकमपि पापं द्विजातिरपहन्ति ।। २५५ ।।

(४) **राघवानन्दः।** किंच **मन्त्रै**रिति। **मन्त्रैर्दे**वकृतस्यैनस इत्यादिभिः शाकलहोमीयैः। द्विजस्त्रैवर्णिकः। नम इत्येतामृचं वा सुगुर्वपि महापातकमप्यपहन्तीत्यन्वयः। नम इत्यृचं वा जप्त्वापहन्ति ।। २५५ ।।

(५) **नन्दनः।** नम इत्यृचं नमो मित्रस्य वरुणस्येत्यृचम् ।। २५५ ।।

(६) **रामचन्द्रः।** शाकलहोमीयैर्मन्त्रैः देवकृतस्यैनस इत्यष्टभिः **अब्दं** अब्दपर्यन्तं घृतं हुत्वा सुष्ठु गुरु **सुगुरु** अपि एनः अपहन्ति। वा पक्षान्तरं नम इति उग्रं नम आविवास इति **ऋचं** जप्त्वा शुध्येत् ।। २५५ ।।

(७) **मणिरामः। शाकलहोमीयैः मन्त्रैः** देवकृतस्येत्यादिभिर्मंत्रैः संवत्सरं घृतहोमं कृत्वा नम इत्यृचं नम इंद्रश्च इत्येतं वा ऋचं संवत्सरं जपित्वा सुगुर्वप्येनः महापातकमपि अपहंति ।। २५५ ।।

(८) **गोविन्दराजः। मन्त्रैरिति।** देवकृतस्यैनसोऽवयजनमसीत्यादिभिः काष्ठशकलहोमविनियुक्तैर्मन्त्रैः संवत्सरं घृतहोमं कृत्वा नम इदुग्रमित्येतां ऋचं संवत्सरं जपित्वा महापातकमप्यपनुदति ।। २५५ ।।

(९) **भारुचिः।** 'देवकृतस्यैनस' इत्येवमादयोऽष्टौ मन्त्राः **शाकलहोमीयाः।** एतैर्**घृतमब्दं हुत्वा सुगुर्वप्यपहन्त्येनः** सर्वमहापातकान्यपीत्यर्थः। **जप्त्वा वा** 'नमो रुद्राय तवसे कपर्दिने क्षयद्वीरायेत्ये'तन्मन्त्रं संवत्सरमेव। एतां जपकर्म पूर्वेण शाकलमन्त्रहोमेन प्रायश्चित्तम्। अन्ये तु **जप्त्वा वा मन इत्यृचं**, सा तु शिष्टेभ्य आगमयितव्या। 'मनोबाहुवाम' इत्येषाः ।। २५५ ।।

**महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः ।।**
**अभ्यस्याब्दं पावमानीर्भैक्षाहारो विशुध्यति ।। २५६ ।।**

(१) **मेधातिथिः। महापातकसंयुक्त इति** पूर्वपदार्थसंख्याविशेषप्रतिपत्तिरनेनापीति गम्यते। एकैकस्य लघुनः प्रायश्चित्तविधानमनेकेनापि युक्तम्। **पावमान्यः** कृत्स्नमेव मण्डलं दाशतयं 'स्वादिष्ठया मदिष्ठया' (ऋग्वेद ९।१।१) इत्यारभ्य 'यत्ते राजञ्छृतं हविः'

(ऋग्वेद ९।११४।४) इत्यन्तम्। गवामनुगमनं नानुवज्यामात्रम्। किं तर्हि? परिचर्या। सा च गोघ्नप्रायश्चित्तादनुसंधेया ॥ २५६ ॥

(२) **सर्वज्ञनारायणः**। प्रायश्चित्तमाह **महापातकेति**। अब्दं प्रत्यहं गाश्चरणाय गच्छन्तीरनुगम्य समाहितमनाः प्रत्यहं पावमानीः स्वादिष्ठयामदिष्ठयेत्यादिकाः इन्द्रायेन्दो-परिस्रवेत्यन्ताः जपेत् भैक्ष्याहार इत्यर्थः ॥ २५६ ॥

(३) **कुल्लूकः**। ब्रह्महत्यादिमहापातकयुक्तो भिक्षालब्धाहारो वर्षमेकं संयतेन्द्रियो गवामनुगमनं कुर्वन्यः पावमानीर्विद्यादिऋचोऽन्वहमभ्यासेन जपित्वा तस्मात्पापाद्विशुद्धो भवति ॥ २५६ ॥

(४) **राघवानन्द**। किंच **महेति**। गाः अनुगच्छेत् शुश्रूषेत्। **पावमानीः** प्रसिद्धाः ॥ २५६ ॥

(६) **रामचन्द्रः**। गा अनुगच्छेत् चारणार्थम्। पावमानीः स्वादिष्ठया मदिष्ठयापव-स्वसोमधारया इन्द्राय पातवे सुतः इन्द्रायेन्दोपरिस्रवेत्यन्ताः एता ऋचः अब्दमभ्यस्य भैक्षाहारो विशुध्यति ॥ २५६ ॥

(७) **मणिरामः**। पावमानीः विद्यादि ऋचः ॥ २५६ ॥

(८) **गोविन्दराजः**। **महापातकसंयुक्त इति**। महापातकवान् संवत्सरं भैक्ष्यभूक् पावमानीः स्वादिष्ठयेत्याद्या ऋचोऽभ्यस्य गवामनुगमनं च गोवधव्रतोक्तप्रक्रियया संयातः कुर्वन् विशुध्यति ॥ २५६ ॥

(९) **भारुचिः**। **पावमान्यः** 'उपास्मै गायता नर' इत्यारभ्य 'यावद्यः पावमानीरध्येति' इत्येषा ऋक्। गवां च सेवनं गोधातप्रायश्चित्तमुक्तम्। इहापि तच्छेषं द्रष्टव्यम् ॥२५६॥

**अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम् ॥**
**मुच्यते पातकैः सर्वैः पराकैः शोधितस्त्रिभिः ॥ २५७ ॥**

(१) **मेधातिथिः**। महापातकसंयुक्तस्यैव प्रायश्चित्तान्तरमेतत्। **वेदसंहितां** मन्त्र-ब्राह्मणम्। 'षट्त्रिंशद्रात्रमुपोष्य' इति **संहितामरण्ये** जपन् **प्रमुच्यते** ॥ २५७ ॥

(२) **सर्वज्ञनारायणः**। प्रथमं षट्त्रिंशदुपवासान्कृत्वा यस्य कस्यचिद्वेदस्य कस्याश्चि-च्छाखायाः संहितां मन्त्रभागमरण्ये त्रिर्जपित्वा सर्वैः पातकैर्महापातकैर्**मुच्यते** त्यज्यत इत्यर्थः ॥ २५७ ॥

(३) **कुल्लूकः**। त्रिभिः पराकैः पूतो मन्त्रब्राह्मणात्मिकां वेदसंहितामरण्ये वारत्रयम-भ्यस्य वा प्रयतो बाह्याभ्यन्तरशौचयुक्तः **सर्वै**र्महापातकैर्मुच्यते ॥ २५७ ॥

(४) **राघवानन्दः**। **पातकैः** स्वयं कृतैः पराकैः **शोधितः** पूतः **वेदसंहितां** मन्त्रब्राह्मणा-त्मिकां त्रिरभ्यस्य मुच्यत इत्यन्वयः ॥ २५७ ॥

(६) **रामचन्द्रः**। अरण्ये वेदसंहितामभ्यस्य सर्वपातकैर्मुच्यते त्रिभिः पराकैः शोधितः ॥ २५७ ॥

(७) **मणिरामः।** त्रिभिः पराकैः शोधितः अरण्ये त्रिवारं वेदसंहितां अभ्यस्य सर्वैः पातकैः मुच्यते ॥ २५७ ॥

(८) **गोविन्दराजः।** अरण्य इति। यद्वा पराकत्रयेणापनीतपापः सन् अट्व्यां त्रीन्वारान् संहितां वेदसंयमवानादर्थ्य सर्वाणि पातकानि महपातकोपपातकादीन्यपि हन्ति ॥ २५७ ॥

(९) **भारुचिः।** अविशेषवचनाद्यां काञ्चिद्वेदसंहितामिति ॥ २५७ ॥

**त्र्यहं तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः ॥**
**मुच्यते पातकैः सर्वैस्त्रिर्जपित्वाऽघमर्षणम् ॥२५८॥**

(१) **मेधातिथिः।** "अपोऽभ्युपयन्", 'जपित्वाऽघमर्षणमि'ति सम्बन्धः। अतश्चान्तर्जलं जपसिद्धिः। एवं स्मृत्यन्तरानुग्रहः। अघमर्षणमंत्रविशेषस्तृच उक्तः ॥ २५८ ॥

(२) **सर्वज्ञनारायणः।** अत्रैव विषयेऽन्यदाह **त्र्यहमिति। युक्तो** नियतः। त्र्यहमुपवसन् प्रत्यहं त्रिषवणस्नानं कुर्वन् स्नानान्ते ऋतं च सत्यं चेति त्रिर्जले निमग्नो जपन्नित्येवं त्र्यहेण सप्तविंशत्यावृत्त्या जपं कुर्यादित्यर्थः ॥ २५८ ॥

(३) **कुल्लूकः।** त्रिरात्रमुपवसन्संयतः प्रत्यहं प्रातर्मध्याह्नसायंकालेषु स्नानं कुर्वन् त्रिषवणस्नानकाल एव जले निमज्य ऋतं च सत्यं चेति सूक्तमघमर्षणं त्रिरावृत्तं जपित्वा सर्वैः पापैर्मुच्यते। तत्र गुरुलघुपापापेक्षया पुरुषशक्त्याद्यपेक्षया चावर्तनीयम् ॥ २५८ ॥

(४) **राघवानन्दः। किंच त्रीति।** अभ्युपयन्नपः त्रिकालस्नानं तत्काल एव त्रिवारं जप्त्वा पुरुषशक्त्यपेक्षया लघुपापापेक्षया वा ॥ २५८ ॥

(५) **नन्दनः।** अह्नस्त्रिरपोऽभ्युपयन्प्रत्यहं त्रिषवणस्नानं कुर्वन् ॥ २५८ ॥

(६) **रामचन्द्रः।** यः त्र्यहं उपवसेत् तु पुनः त्रिः अह्नः अपः **अभ्युपयन्** उपस्पृशन् **त्रिः** त्रिवारं **अघमर्षणं** ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायतेत्येवमादिसूक्तं जप्त्वा **सर्वैः पातकैर्विमुच्यते** ॥ २५८ ॥

(७) **मणिरामः। युक्तः** संयतः। त्रिरह्नोऽभ्युपन्नः प्रत्यहं त्रिकालं स्नानं कुर्वन्। त्रिकालस्नानसमय एव अधमर्षणं जपित्वा सर्वैः पापैः प्रमुच्यते ॥ २५८ ॥

(८) **गोविन्दराजः। त्र्यहमिति।** त्रिषवणं स्नानं कुर्वन् प्रतिस्नानं जलमध्ये त्रीन्वारान् ऋतं च सत्यं चाभीद्धादित्येतत्सूक्तं जपन् समाहितस्त्र्यहमुपवसेदेवं कुर्वन् सर्वैर्महापातकादिभिः पापैर्मुच्यते ॥ २५८ ॥

(९) **भारुचिः।** अल्पत्वाच्चास्य प्रायश्चितस्याश्रद्दधानानां प्रवृत्त्यर्थमिदमाह ॥२५८॥

**यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः ॥**
**तथाऽघमर्षणं सूक्तं सर्वपापापनोदनम् ॥ २५९ ॥**

(१) **मेधातिथिः** : स्तुत्यर्थः श्लोकः ।। २५९ ।।

(३) **कुल्लूकः** । यथाऽश्वमेधयागः सर्वयागश्रेष्ठः सर्वपापक्षयहेतुस्तथाऽघमर्षण-सूक्तमपि सर्वपापक्षयहेतुरित्यघमर्षणसूक्तोत्कर्षः ।। २५९ ।।

(४) **राघवानन्दः** । अत्रार्थवादः **यथेति** ।। २५९ ।।

(६) **रामचन्द्रः** । यथा अघमर्षणं सूक्तं पापप्रणोदनम् ।। २५९ ।।

(७) **मणिरामः** : अघमर्षणप्रशंसामाह । **यथेति** ।। २५९ ।।

(८) **गोविन्दराजः** । **यथेति** । यथाश्वमेधो यज्ञश्रेष्ठः सर्वपापविनाशकृदेवमघमर्षण-मपि सूक्तं सकलं कल्मषनाशनमिति पूर्वार्थवादः ।। २५९ ।।

**हत्वा लोकानपीमांस्त्रीनश्नन्नपि यतस्ततः ।।**
**ऋग्वेदं धारयन्विप्रो नैनः प्राप्नोति किञ्चन ।। २६० ।।**

(१) **मेधातिथिः** : इयमपि स्तुतिः । ऋग्वेदधारिणो रहस्यप्रायश्चित्तार्था । अन्ये तु 'महापातकसंयुक्त' इत्यारभ्य रहस्यार्थमपीच्छन्ति ।। २६० ।।

(२) **सर्वज्ञनारायणः** । उक्तवक्ष्यमाणसंहिताजपेषु ऋक्संहिताजपस्य प्राशस्त्यं कथयितुमृग्वेदमेव स्तौति हत्वापीति ।। २६० ।।

(३) **कुल्लूकः** । भूरादिलोकत्रयमपि हत्वा महापातक्यादीनामप्यन्नमश्नन्नृग्वेदं धारयन्विप्रादिः न किंचित्पापं प्राप्नोति । ऋग्वेदं रहस्यप्रायश्चित्तार्थमुक्तं ततश्च रहस्यपापे कृते ऋक्संहितां मन्त्रब्राह्मणात्मिकामभ्यसेत् ।। २६० ।।

(४) **राघवानन्दः** । किंच **हत्वेति** । **लोकान्** भुवादित्रयम् । ऋग्वेदं रहस्यप्राय-श्चित्तार्थम् । **एनः** पापं पापफलं न भुङ्क्ते न स्तुतिमात्रम् ।। २६० ।।

(५) **नन्दनः** । **धारयन्** जपन् ।। २६० ।।

(६) **रामचन्द्रः** । त्रीनिमांल्लोकान्हत्वा यतस्ततः अनुलोमप्रतिलोमतः अश्नन्नपि विप्रः ऋग्वेदं धारयन्नेनः किंचिन्नाप्नोति ।। २६० ।।

(७) **मणिरामः** । ऋग्वेदप्रशंसामाह **हत्वेति** । यतस्ततः महापातक्यादीनान्यपि प्रति-ग्रहसंगृह्णन् ।। २६० ।।

(८) **गोविन्दराजः** । **हत्वेति** । लोकत्रयान्तर्वर्ति सकलभूतजातमपि हत्वा चाण्डाला-देरपि सकाशादश्नन् ऋग्वेदमभ्यस्य न किञ्चिदपि पापं प्राप्नोति । इत्यृग्वेदाभ्यासस्तुति-रुत्तरार्थम् ।। २६० ।।

(९) **भारुचिः** । **ऋग्वेद**ग्रहणमितरवेदप्रदर्शनार्थमपि स्यात् । तथा च दर्शयति ।। २६० ।।

**ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः ॥**
**साम्नां वा सरहस्यानां सर्वपापैः प्रमुच्यते ॥ २६१ ॥**

(१) **मेधातिथिः**। ऋगादिविशेषणात् ब्राह्मणनिवृत्तिः। **रहस्यानि** सामान्यारण्यकाधीतानि ॥ २६१ ॥

(२) **सर्वज्ञनारायणः**। **संहिता** मन्त्रभागः। यजुषामित्यत्रापि सरहस्येनान्वितम्। **रहस्यमुपनिषद्भागः**। साम्नां संहितां तद्योनिसंहितां सामगीतिम् ॥ २६१ ॥

(३) **कुल्लूकः**। तदाह **ऋगिति**। ऋक्संहितां मन्त्रब्राह्मणात्मिकां न तु मन्त्रमात्रात्मिकामनन्तरं वेदे त्रिवृतीति प्रत्यवमर्षात् यजुषां वा मन्त्रब्राह्मणानां संहितां साम्नां वा ब्राह्मणोपनिषत्संहितां वारत्रयमभ्यस्य सर्वपापैः प्रमुक्तो भवति ॥ २६१ ॥

(४) **राघवानन्दः**। किंच **ऋगिति**। ऋक्संहितां मन्त्रब्राह्मणात्मिकां तर्कोपनिषद्भागव्यतिरिक्ताम्। एवं यजुर्वेदादौ। **सरहस्यानां** रहस्यमारण्यकं तद्युक्तानाम् ॥ २६१ ॥

(६) **रामचन्द्रः**। ऋग्वेदादीनां त्रयाणां संहितां अभ्यस्य सर्वपापैः प्रमुच्यते ॥ २६१ ॥

(७) **मणिरामः**। संहितानां प्रशंसामाह। **ऋगिति सरहस्यां** उपनिषत्संहिताम् ॥ २६१ ॥

(८) **गोविन्दराजः**। **ऋक्संहितामिति**। ऋग्वेदसंहितां यजुर्वेदसंहितां वा साम्नां वा सारण्यकाधीतसामसंहितानां सामसामार्चिकं त्रीन्वारान् संयमवानावर्त्य सर्वपापान्यपहन्ति ॥ २६१ ॥

(९) **भारुचिः**। अस्येयं स्तुतिः प्रवृत्त्यर्था ॥ २६१ ॥

**यथा महाह्रदं प्राप्य क्षिप्तं लोष्टं विनश्यति ॥**
**तथा दुश्चरितं सर्वं वेदे त्रिवृति मज्जति ॥२६२ ॥**

(१) **मेधातिथिः**। त्र्यवयवस्त्रिवृत्। एककार्यत्वादवयवव्यवहारात् वेदो वेदान्तरस्यावयवः ॥ २६२ ॥

(३) **कुल्लूकः**। ऋगाद्यात्मना त्रिरावर्तत इति त्रिवृत् यथा **महाह्रदं** प्रविश्य **लोष्टं** विशीर्यते तथा सर्वं दुश्चरितं त्रिवृति वेदे विनश्यति ॥ २६२ ॥

(४) **राघवानन्दः**। किंच **यथेति**। **लोष्टं** पांसुपिण्डम्। वेदे त्रिवृति वेदत्रयाध्यायिनि। **निमज्जति** विनश्यति ॥ २६२ ॥

(५) **नन्दनः**। **लोष्टं** मृत्पिण्डम् ॥ २६२ ॥

(७) **मणिरामः**। त्रिवृति वेदे ॥ २६२ ॥

(८) **गोविन्दराजः**। **यथेति**। यथा बृहत्सरसि मृल्लोष्टं निपत्यैव विनाशमेत्येवं सर्वं दुष्कृतमृग्यजुःसामात्मकत्वेन त्र्यवयवैर्वेदेऽन्तं नीयत इति पूर्वार्थवादः ॥ २६२ ॥

(९) **भारुचिः**। तच्च वेदस्य त्रिवृत्त्वर्थमिदं दर्शयति ॥ २६२ ॥

**ऋचो यजूंषि चाद्यानि सामानि विविधानि च ॥**
**एष ज्ञेयस्त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥ २६३ ॥**

(१) **मेधातिथिः** । तदवयवं दर्शयति । **आद्यानि** मुख्यानीत्यर्थः । 'अन्यानि' ब्राह्मणाध्येयानि न पठितानि । अथवा पदक्रमितानि । **विविधानि सामानि** ग्राम्यारण्यविभागेन ॥ २६३ ॥

(२) **सर्वज्ञनारायणः** । **अन्यानि** चेति यजुषामृग्व्यतिरिक्तानां तन्मध्यपठितानामृचां च संग्रहः । **विविधान्य**क्षररूपयोगिगीतात्मकसमरूपाणि यो वेदार्थतो ग्रन्थतश्च ॥ २६३ ॥

(३) **कुल्लूकः** । त्रिवृत्त्वमेवाह **ऋच इति** । **ऋचः** ऋङ्मन्त्राः **यजूंषि** यजुर्मन्त्राः **सामानि** बृहद्रथन्तरादीनि नानाप्रकाराण्यन्यान्येषां त्रयाणां पृथक् पृथक् मन्त्रब्राह्मणान्येष त्रिवृद्वेदो ज्ञातव्यो य एनं वेद स वेदविद्भवति ॥ २६३ ॥

(४) **राघवानन्दः** । त्रिवृत्त्वमेवाह **ऋच** इति । अन्यानि गीतिसामभिन्नानि **च** । एनं वेदत्रयसमुदायम् ॥ २६३ ॥

(५) **नन्दनः** । कः पुनरिह त्रिवृद्वेदोऽभिप्रेतस्तमाह **ऋचो यजूंषि चान्यानीति** । ऋचो यजूंषि सामानि वेदः न ब्राह्मणानित्यर्थः ॥ २६३ ॥

(६) **रामचन्द्रः** । ऋचो यजूंषि सामानि त्रिवृद्वेदः एनं वेदत्रयस्य अध्ययनं वेद स वेदवित् ॥ २६३ ॥

(७) **मणिरामः** । त्रिवृत्त्वमेवाह ॥ **ऋच इति** ॥ **ऋचः** ऋङ्मंत्राः **यजूंषि** यजुर्मंत्राः । **विविधानि सामानि** बृहद्रथंतरादीनि अन्यानि एषां वेदत्रयाणां पृथक् पृथक् मंत्रब्राह्मणादीनि । एष त्रिवृद्वेदो ज्ञेयः । य एनं वेद स वेदविद्भवति ॥ २६३ ॥

(८) **गोविन्दराजः** । त्रिवृत्वं वेदस्य निरूपयितुमाह **ऋचो यजूंषि चाद्यानीति** । ऋचो यजूंषि चामुख्यानि संहितागतानि न तु ब्राह्मणमप्यधीतानि सामानि चार्चिकास्तोमिकादिभेदेनानेकप्रकाराणीत्येष त्रिवृद्वेदो बोद्धव्यो यश्चैनं वेदमेवं त्रिवृतं वेद स वेदविन्मान्यः ॥ २६३ ॥

(९) **भारुचिः** । **ऋचः** प्रसिद्धाः । **यजूंष्याद्या**नि संहितागतानि न तु ब्राह्मणमध्येऽधीतानि पदक्रमान्वितानि । 'ययोरोजसा स्कभिता रजांसी'त्येवमादीनि **सामानि पुनर्विविधानि** ग्रामारण्यार्चिकस्तौभिकानि ॥ २६३ ॥

**आद्यं यत्त्र्यक्षरं ब्रह्म त्रयी यस्मिन्प्रतिष्ठिता ॥**
**स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित् ॥ २६४ ॥**

**इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां एकादशोऽध्यायः ॥ ११ ॥**

(१) **मेधातिथिः** । **त्र्यक्षरमक्ष**रत्रयसमाहार ओंकारः । **आद्यं ब्रह्म** गुह्यम् । रहस्याधिकारे यथावदुपदिष्टत्वाच्छब्दब्रह्मरूपतयोपासनकर्मत्वेन विहितः । परमात्मवाचकतया वा

**'गुह्यो'**, न त्वज्ञाताक्षरत्वेन। स हि लोकप्रसिद्ध ओमित्यभ्युपगमः। **त्रयी यस्मिन्**वेदा संकुचिता। सर्वाणि वर्णानीत्येवमादि। तस्योपासना पुरस्तादुक्तेति एव'मोमित्येतदक्षर-मुपासीते'ति (छान्दोग्य १।१।१)। पूर्वश्लोके मन्त्रार्थवेदनेन वेदत्वमुक्तमनेन वेदान्तज्ञानम्। कर्मवेदनं त्वध्ययनविध्याक्षिप्तमेवेति प्रसिद्धम् ॥ २६४ ॥

**इति श्रीभट्टवीरस्वामिसूनुमेधातिथिविरचिते मनुभाष्ये एकादशोऽध्यायः ॥**

**(२) सर्वज्ञनारायणः**। आद्यं सर्ववेदादौ पाठ्यत्वादाद्यम्। **त्र्यक्षरं** अकारोकारम-कारैः। **ब्रह्म** तत्प्राप्यहेतुत्वात्। **प्रतिष्ठिता** अन्तर्भूता तस्य तत्सारत्वात्। **गुह्यो** न कस्मैचित्कथनीयः। यो वेदैनं उपास्यत्वेन ॥ २६४ ॥

**सर्वज्ञनारायणकृतौ मन्वर्थविवृतौ प्रायश्चित्तविधिर्नामैकादशोऽध्यायः संपूर्णः ॥११॥**

**(३) कुल्लूकः**। सर्ववेदानामाद्यं यद्ब्रह्म वेदसारमकारोकारमकारात्मकत्वेन त्र्यक्षरं यत्र त्रयो वेदाः स्थिताः सोऽन्यस्त्रिवृद्वेदः प्रणवाख्यं गुह्यं गोपनीयो वेदमन्त्रश्रेष्ठत्वात् परमार्थाभिधायकत्वात्परमार्थकत्वेन धारणजपाभ्यां मोक्षहेतुत्वाच्च यस्तं स्वरूपतोऽर्थतश्च जानाति स वेदवित् ॥ प्रायश्चित्ते बहुमुनिमतालोचनाद्यन्मयोक्तं सद्व्याख्यानं खलु मुनिगिरां तद्भजध्वं गुणज्ञाः ॥ नैतन्मेधातिथिरभिदधे नापि गोविन्दराजो व्याख्यातारो न जगुरपरेऽप्यन्यतो दुर्लभं वः ॥ २६४ ॥

**इति श्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां मनुवृत्तावेकादशोऽध्यायः ॥११॥**

**(४) राघवानन्दः**। अतिरहस्यं त्रिवृदाह **आद्यमिति**। प्रणवं त्र्यक्षरम्। **गुह्यो** ध्यान-जपाभ्यां मोक्षहेतुत्वादतिगोप्यः। **त्रयी** ऋगादि वेदत्रयम्। प्रतिष्ठितोपादेयत्वेनांगीकारेण सर्वावाक्संतृण्णेति श्रुतेः। संतृण्णोपादानतया व्याप्तेत्यर्थः ॥ २६४ ॥

[**राघवानन्दः**। उपसंहरति **एष इति**। कर्मविधिं कामतः सुखदुःखजनकप्रकारं नैःश्रेयसं यथासंभवं वैराग्यादस्पृहां विना न मोक्ष इति साध्यसाधनसंगतिरुत्तरा-ध्यायेन ॥ १ ॥]

**इति राघवानन्दसरस्वतीविरचितायां मन्वर्थचन्द्रिकायामेकादशोऽध्यायः ॥११॥**

**(५) नन्दनः**। न केवलमृग्यजुस्सामविदेव वेदवित्किन्तु प्रणवविदपीत्याह **आद्यं यत्त्र्यक्षरम्ब्रह्मेति** त्र्यक्षरमकारोकारमकारात्मकं यो वेदैनं स वेदवित्प्रणवध्यायी भवतीत्यर्थः ॥ २६४ ॥

**इति श्रीनन्दनाचार्यविरचिते मानवव्याख्यान एकादशोऽध्यायः ॥**

**(६) रामचन्द्रः**। **यदाद्यं त्र्यक्षरं** अकारोकारमकारात्मकं ब्रह्म **यस्मिन्** ब्रह्मणि **त्रयी** वेदत्रयी ऋग्यजुःसामात्मिका प्रतिष्ठिता स **गुह्योऽ**न्यस्त्रिवृद्वेदः **तं** त्रिवृदात्मकं वेद स वेदवित् ॥ २६४ ॥

**इति श्रीरामचन्द्रभट्टविरचितायां मनुभावार्थदीपिकायामेकादशोऽध्यायः ।।११।।**

**[एष वोऽभिहितः कृत्स्नः प्रायश्चित्तस्य निर्णयः ।**
**निःश्रेयसं धर्मविधिं विप्रस्येमं निबोधत ।। १ ।। ]**

**[पृथग्ब्राह्मणकल्पाभ्यां स हि वेदस्त्रिवृत्स्मृतः ।। २ ।। ]**

(७) **मणिरामः । आद्यं** सर्ववेदानाम् । **यत्त्र्यक्षरं** ब्रह्म अकारोकारमकारात्मकम् । **यस्मिन्** ओंकारे **त्रयी** वेदत्रयी **प्रतिष्ठिता** स्थिता । सः ओंकारः ।। २६४ ।।

**इति श्रीमिश्रगंगारामात्मजदीक्षितमणिरामकृतायां सुखबोधिन्यां मनुवृत्तावेकादशोऽध्यायः समाप्तः ।।११।।**

(८) **गोविन्दराजः ।** अपरं त्रिवृत्त्वं वेदस्य दर्शयितुमाह । **आद्यमिति ।** अकारोकार-मकाराक्षरत्रयसमाहाररूपेणोंकाराख्यं **ब्रह्म** परब्रह्मवाचकत्वात् **यस्मिन्नोंकारे** ऋग्यजुः-सामात्मिकात्रय्याश्रिता यथा शंकुना सर्वाणि पर्णानि संवर्णान्येवमोंकारे सर्वा वाचः संवर्णा इति श्रुतेः ।। स रहस्यरूपो परस्त्रिवृद्वेदो **यश्चैतं वेद** य एनं त्रिवृतं वेत्ति स वेदवित् ।। २६४ ।।

**इति श्री भट्टमाधवात्मजगोविन्दराजविरचितायां मन्वाशयानुसारिण्यां मनुटीकायां चतुर्णां जातीवामाचाराधाररूपिण्यां एकादशोऽध्यायः ।।११।।**

(९) **भारुचिः । यत्त्र्यक्षरं ब्रह्म** वर्णत्रयसमुदायः ओङ्कारः । **यस्तं वेद स वेदवित् ।** तथा च ब्राह्मणं, 'यथा शङ्कुना सर्वाणि पर्णानि' इत्येवमादि । तस्य चोपासना पुरस्तादुक्तेति । तथा च ब्राह्मणम्, 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति ।

**।। इति भारुचेः कृतौ मनुशास्त्रविवरणे एकादशोऽध्यायः ।।**

——o——o——

धीयते। 'आर्षं धर्मोपदेशं तु स्मृतिशास्त्रं स्मृतिवेदाविरोधिना यस्तर्केणानुसन्धत्ते धर्मं वेद नेतरः" इति। अयमर्थः स्मृतिप्रकरणाद्युक्ततरः। वेदाविरोधिनेत्येतद् वेदग्रहणमस्मिन् पक्षे मन्त्रब्राह्मणलिङ्गापेक्षत्वात्। ततः स्वातन्त्र्यपक्षेऽपि च स्मृतेर्युज्यते। किं पुनर्मन्त्रब्राह्मण-लिङ्गप्रभवपक्ष उत्सन्नशाखार्थानुस्मरणे च। तदेवं त्रिष्वपि श्लोकार्थेषु न्यायस्तुतिरियम्, तत्सम्परिग्रहार्थत्वात्। न्यायसंपरिग्रहश्च चागमशास्त्रव्याख्यानसहायो यथा स्याद्धर्मविशु-द्ध्यर्थः। तथा च श्रुतिर्विज्ञायते—'देवा वा अस्माल्लोकादमुं लोकमायन्' तान् दृष्ट्वाब्रुवन् कथमनार्षा भविष्याम एभ्य कर्म ऋषिं प्रायच्छन्। तस्माद्यद्ब्राह्मणो आचानस्तर्कयति आर्ष-मेतद्भवतीति श्रुतेर्युक्तो वेदस्मृतिशास्त्राविरोधिनस्तर्कस्य सम्परिग्रहः तदर्थनिर्मलत्वाय, इदानीं न्यायोपदेशप्रयोजनमुत्तरप्रकरणाद्दर्शयिष्यन्निदमाह ॥ १०६ ॥

**नैःश्रेयसमिदं कर्म यथोदितमशेषतः ।**
**मानवस्यास्य शास्त्रस्य रहस्यमुपदेक्ष्यते ॥ १०७ ॥**

(१) **मेधातिथिः**। वक्ष्यमाणार्थादरातिशयोत्पत्त्यर्थः श्लोकोऽयं श्रोतृसंबोधनार्थः। **रहस्यं** गुह्यम्। अतएव न सर्वस्य प्रकाशयितव्यम्। यो न शुश्रूषापरो न च परमां भक्तिमुपेतो यश्च न स्थिरप्रकृतिर्न तस्मै प्रकाश्यम् ॥ १०७ ॥

(२) **सर्वज्ञनारायणः**। एतन्नैःश्रेयसं मानवस्य शास्त्रस्य निःश्रेयससाधनं कार्यम् ॥ १०७ ॥

(३) **कुल्लूकः**। एतन्निःश्रेयससाधनं कर्म निःशेषेण यथावदुदितम् अत ऊर्ध्वमस्य मानवशास्त्रस्य रहस्यं गोपनीयमिदं वक्ष्यमाणं शृणुत ॥ १०७ ॥

(४) **राघवानन्दः**। इदं तु शास्त्रं मोक्षोपयोगिकर्तव्यतात्पर्यकमित्याह **नैःश्रेयसमिति**। यथोदितं कर्माशेषतः साक्षात्परंपरया वा नैःश्रेयसकरमेवेति। रहस्यमुपदिश्यत इत्य-न्वयः ॥ १०७ ॥

(८) **गोविन्दराजः**। **नैःश्रेयसमिति**। तदपवर्गार्थं कर्मनिःशेषेण यथावदुक्तमत ऊर्ध्वमस्य मानवस्य शास्त्रैकदेश आत्मज्ञानोपदेशपरत्वेनोपनिषद्रूपोऽभिधास्यते ॥ १०७ ॥

(९) **भारुचिः**। श्रोतॄनुत्तरप्रकरणार्थश्रवणायाभिमुखीकरोत्यादरेण ॥ १०७ ॥

**अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत् ।**
**यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः ॥ १०८ ॥**

(१) **मेधातिथिः**। "ननु चानाम्नातेषु कः संदेहः। नो जाने नेह कथं स्यादिति चेत् यतो नैव तेषां तत्"। उच्यते। नेहेदृशमनाम्नातमभिप्रेतम्। किं तर्हि? यत्सामान्यत आम्नातं विशेषतस्तु न ज्ञायते। "ननु च तत्रापि कः संदेहः। सामान्यस्य विशेषमात्रापेक्षाद्येन केनचित्सिद्धं शास्त्रार्थं, यथा 'अद्भिराचमेदिति' कूप्यस्यावरनादेयादिभेदेन। भिन्नास्वप्सु ताः काश्चिदुपादीयमानाः संपादयन्ति शास्त्रार्थम्।" सत्यम्। यत्र प्रतिषेधश्रुतिर्न च वैशेषिक

प्रायश्चित्तमुपदिष्टं यत्तेदमुपदिश्यते। यदा शूद्रोच्छिष्टं किंचित्पात्रं तदशुद्धं तत्संपर्कादिशुचि तस्मिन्नग्नौ शुद्धे यदि केनचिद् भुक्तं स्यात्तदा किं प्रायश्चित्तमिति संदेहः। स हि जिज्ञासा च निश्चयावसानेन च प्रत्यक्षादिषु सम्यङ् निधिः स्त्रीशूद्रोच्छिष्टमेवेत्यदत्तं भवितुमर्हति। न हि तच्छूद्रस्योच्छिष्टाप्रतिः शक्यं वक्तुम्। किं तेन तदुच्छिष्टमिति। एवमादौ संदेहे तु शिष्ट-वचनं प्रमाणीकर्तव्यम्। यथा ये शूद्रादयो विप्रांशास्तेषामयं धर्मसंदेहः। शिष्टोपदिष्टमेव युक्तं कर्तुम्। ततश्च न्यूनाधिकभावेन या कृता कल्पना स एव तत्र धर्मः। तेषामपि तथोपदिशतां न दोषः। यत आह—**स धर्मः स्यादशङ्कित** इति। अधर्मं ब्रुवतो दोषः धर्मे तु का विचिकित्सा। तथा गोत्रप्रवरसंदेहे कथं च स्मृतिविच्छेदे ब्राह्मणवचनात् गोत्रप्रवर-सिद्धिः। तत्र च प्रवरसंदेहे सर्वेषां मानवे संशय इत्युक्तम्। गोत्रसंशये तर्हि भविष्यति। तत्र च गोत्रसंशयाभावे कुतः प्रवरसंशयः। प्रतिगोत्रं प्रवराणां भेदेन पठितत्वात्। उपपद्यत एवमेतद्गोत्रनामधेयम्। प्रवराश्च भिन्ना नाना गोत्राणि। तत्र सत्यपि प्रवरनिश्चये गोत्र-सन्देह उपपद्यते ॥ १०८ ॥

(२) **सर्वज्ञनारायणः**। इदानीं मनूक्तस्य ग्रन्थस्य सतत्त्वं रहस्यं विगूढं तदुदीक्षते। अनाम्नातेषु विशेषत इतिचेद्भवेत्संशयः। **शिष्टाः ब्राह्मणाः** परिषद्भूताः ॥ १०८ ॥

(३) **कुल्लूकः**। अस्य शास्त्रस्यासमस्तधर्माभिधानमाशङ्क्यानया सामान्योक्त्या सम-ग्रधर्मोपदेशकत्वं बोधयति। सामान्यविधिप्राप्तेषु विशेषेणानुपदिष्टेषु कथं कर्तव्यं स्यादिति यदि संशयो भवेतदा यं धर्मं वक्ष्यमाणलक्षणाः शिष्टा ब्राह्मणा ब्रूयुः स तत्र निश्चितो धर्मः स्यात् ॥ १०८ ॥

(४) **राघवानन्दः**। ननु वेदार्थस्यातीव दुरवगमत्वात्तेनास्पृष्टेषु धर्मेषु का गतिस्तत्राह **अनाम्नातेति**। ब्रूयुरयं धर्म इति। सः अशङ्कितः फलाजनकत्वेन शङ्कारहितः ॥ १०८ ॥

(५) **नन्दनः**। तदेव रहस्यं प्रश्नपूर्वकं व्याकरोति अनाम्नातेषु सर्वेष्विति ॥ १०८ ॥

(६) **रामचन्द्रः**। अनाम्नातेषु धर्मेषु अजातेषु सत्सु कथं स्यादिति भवेत् तत्राह यं धर्मं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः अशङ्कितः स्यात् ॥ १०८ ॥

(८) **गोविन्दराजः** एवं रहस्याभिधानं प्रतिज्ञाय सकलकर्मानभिधानेन प्रतिज्ञाहान्या-शङ्कामाह **अनाम्नातेष्विति**। स ग्रन्थकाग्रन्थत्वेनोभयरूपत्वात् स्मरणस्यानुपदिष्टेषु धर्मेषु उपदिष्टेष्वपि चानुक्तेति कर्तव्यता तेषु किं ते कर्तव्याः उत नेति कथं वा कर्तव्या इति यदि संशयः स्यात्तदा यं वक्ष्यमाणाः शिष्टाः ब्राह्मणा ब्रूयुः स निश्चितो धर्मः स्यात् ॥ १०८ ॥

(९) **भारुचिः**। **अनाम्नातेष्वनुपदिष्टेषु** प्रायश्चित्तलक्षणेषु धर्मेष्वन्येषु च सामर्थ्या-दनाम्नातं चोभयथा स्मरणं सग्रन्थकमग्रन्थकं च, अथवादर्शनमेवोभयथा स्मरणस्यानाम्ना-तत्वम्, **अनाम्नातेष्वज्ञातेषु** धर्मेषु किं कर्तव्यमिति सन्देहे सतीदमाह—**यं शिष्टा ब्रूयुः स धर्मः स्यादशङ्कितः**। येनाम्नातत्वमनाम्नातत्वं वा प्रति न कश्चिद्दोषोऽस्ति तेषाम्। एवं च कृत्वोक्तमाचारश्चैव साधूनामिति ॥ १०८ ॥

**धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ।।**
**ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ।। १०९ ।।**

(१) **मेधातिथिः**। शिष्टलक्षणमनेन कथ्यते। "ननु चार्थकामेष्वसक्तानामित्यत्रोक्तमेव शिष्टलक्षणम् ।" अन्योऽपि तस्य तत्रार्थ आशंकितोऽतो न तस्य लक्षणपरतैव। यच्च नशिष्टेनोक्तं 'शिष्टः पुनरकामात्मा' इति तत्र विद्वत्तया श्रुतत्वात्। यत्र परिपूर्णत्वादधिगतोऽर्थतश्च विदितः स स सपरिबृंहणः। तथा च भगवान्व्यासः 'इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्' इति। स्मृतयोऽप्येवं गृहीतार्था भवन्ति। ब्राह्मणग्रहणमनुवादस्तेषामेव धर्मप्रवचनाधिकारात्। **श्रुतिप्रत्यक्षहेतवः**। 'प्रत्यक्षं हेतवश्च' प्रत्यक्षहेतवः। हेतुशब्देन प्रत्यक्षादन्यप्रमाणान्युच्यन्ते। श्रुतिः प्रत्यक्षो हेतुश्च येषां ते **श्रुतिप्रत्यक्षहेतवः**। एतदुक्तं भवति। यथा प्रत्यक्षं निर्विवादं प्रमाणमेव तादृशीं श्रुतिं मन्यन्ते, यान्यपि हेतूत्थानि प्रमाणानि तेषु विश्वसन्ति; श्रुतिमेव तर्कं मन्यन्ते, हेतुशास्त्राश्रयणेन चेदं न प्रमाणीकुर्वन्ति। अथवा श्रुतिः' प्रत्यक्षश्रुतिः, 'प्रत्यक्ष'शब्दः श्रौते प्रत्यये प्रत्यक्षतुल्यत्वात्प्रयुक्तः, सा च हेतुर्धर्माधर्मपरिज्ञाने कारणं येषां त एवमुच्यन्ते ।। १०९ ।।

(२) **सर्वज्ञनारायणः**। शिष्टानेन लक्षयति **धर्मेणेति**। परिबृंहणं अङ्गधर्मशास्त्रपुराणादि। श्रुतेर्वेदस्य प्रत्यक्षं श्रोत्रप्रत्यक्षं तद्धेतवः अध्ययनसंप्रदायकर्तारः ।। १०९ ।।

(३) **कुल्लूकः**। ब्रह्मचर्याद्युक्तधर्मेण यैरङ्गमीमांसाधर्मशास्त्रपुराणाद्युपबृंहितो वेदोऽधिगतस्ते ब्राह्मणाः श्रुतेः प्रत्यक्षीकरणे हेतवो ये श्रुतिं पठित्वा तदर्थमुपदिशन्ति ते शिष्टा विज्ञेयाः ।। १०९ ।।

(४) **राघवानन्दः**। तेषां शिष्टानां ब्राह्मणानां लक्षणमाह। **धर्मेण** ब्रह्मचर्यादिना **अधिगतोऽ**धीतः। **सपरिबृंहणः** व्याकरणादि (संयुक्त)'। **श्रुतिप्रत्यक्षहेतवः** श्रुतिप्रत्यक्षानुमानानि हेतवः प्रमाणत्वेन धर्मादौ वर्तन्ते येषां शिष्टानां ते। श्रुतेः प्रत्यक्षकरणे हेतवो गर्भाधानादिसंस्कारा वा ते यथोक्ताः ।। १०९ ।।

(५) **नन्दनः**। के पुनः शिष्टा इत्यपेक्षायामाह **धर्मेणाधिगतो यैस्त्विति**। सपरिबृंहण इतिहासपुराणसहितो येषां श्रवणं प्रत्यक्षं च धर्मज्ञानवचनयोर्हेतुश्रुतिप्रत्यक्षहेतवः ।।
।। १०९ ।।

(६) **रामचन्द्रः**। यैः **धर्मेण** धर्मशास्त्रपुराणादिना वेदः **अधिगतः** प्राप्तः **सपरिबृंहणः** शिक्षाकल्पादिषडङ्गयुक्तः ते शिष्टा ज्ञेयाः ।। १०९ ।।

(८) **गोविन्दराजः**। **धर्मेणाधिगत इति**। ब्रह्मचर्योक्तेति कर्तव्यतया यैरङ्गमीमांसाधर्मशास्त्रपुराणाद्युपबृंहकसंहितो वेदोऽधीतस्ते ब्राह्मणाः वेदगोचरपदार्थोपदेशकारणभूताः शिष्टा विज्ञेयाः १०९ ।।

(९) **भारुचिः**। शिष्टब्राह्मणलक्षणमधुना वक्ति **सपरिबृंहणः** साङ्ग इत्यर्थः। अथवा मीमांसान्यायविस्तरधर्मशास्त्रपुराणैरङ्गैश्च सह **वेदस्सपरिबृंहणः उच्यते**। एवं च

व्याख्यायमाने प्रकरणान्न्यायसपरिग्रहाः कृतो भवति, विद्याबहुत्वस्यच मीमांसादिग्रहणेन ।। १०९ ।।

**दशावरा वा परिषद्यं धर्मं परिकल्पयेत् ।।**
**त्र्यवरा वाऽपि वृत्तस्था तं धर्मं न विचालयेत् ।। ११० ।।**

(१) **मेधातिथिः**। दशावरे यस्याः दशावराः। यदि बहवो न संनिधीयन्ते दशावश्यं संनिधातव्याः। तदभावे **त्र्यवराः**। **वृत्तस्था** इति। यदुक्तं 'अर्थकामेष्वसक्तानाम्' इति तस्यैवायमनुवादः। न चैषा पुरुषसंख्याऽपि तु गुणसंख्या। तथा च वक्ष्यति 'एकोऽपि वेदवित्' इति। एकस्य यतो गुणसमूहस्य बाहुल्येनासंभवात् पुरुषप्रधानतया संख्याया निर्देशः कृतः। तानिदानीं परिषत्त्वहेतुगुणान् दर्शयति ।। ११० ।।

(२) **सर्वज्ञनारायणः**। दशसंख्यात्यन्तापकृष्टा यत्र सा दशावरा। **वेति** त्र्यवरापेक्षया विकल्पः। एवं त्र्यवरा वृत्तस्था स्वयमपि धर्मचारिणी कुर्यात् ।। ११० ।।

(३) **कुल्लूकः**। यदि बहवः सन्तोऽवहिता न भवन्ति तदा दशावरात्र्यवराश्चेति वक्ष्यमाणलक्षणा यस्याः सा परिषत्तदभावे त्रयोऽवरा यस्याः सा वा सदाचारा यं धर्मं निश्चिनुयात्तं धर्मत्वेन स्वीकुर्यान्नविसंवदेत् ।। ११० ।।

(४) **राघवानन्दः**। उक्तब्राह्मणानां समूहः परिषदिति ज्ञापयन्ब्राह्मणसंख्या विकल्पेनाह **दशेति**। दशब्राह्मणा अवरा न्यूनसंख्यावच्छेदका यस्यां सा तथा। एवं त्र्यवरापि। **वृत्तस्थाः** वृत्तं जीवनं तद्युक्ताः। वृत्तिकर्षणाल्लोभादिना धर्मच्युतेः संभाव्यमानत्वात्। न विचालयेदप्रमाणतया फलाहेतुशङ्कया वा ।। ११० ।।

(५) **नन्दनः**। कतीनां विशिष्टानामुक्तिः धर्मसंक्षये किं प्रमाणमित्यपेक्षायामाह **दशावरा वा परिषदिति** ।। ११० ।।

(६) **रामचन्द्रः**। दशावरा दशभ्यः अवरा न्यूना सा परिषत् यं धर्मं परिकल्पते। च पुनः **त्र्यवरा** त्रिभ्यः अवरा वृतस्था स्वधर्मो न विचालयेत् ।। ११० ।।

**[पुराणं मानवो धर्मो साङ्गोपाङ्गचिकित्सकः ।**
**आज्ञा सिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ।।]**

(८) **गोविन्दराजः**। **दशावरेति**। यद्युत्पन्नयूनास्तदा दश वक्ष्यमाणविद्वांसो यस्यां परिषदि तदभावे त्रयो वा यस्यां साध्वाचारं धर्मं निश्चिनुयात्तद्धर्मत्वेन प्रतिपाद्यम् ।।११०।।

**त्रैविद्योहेतुकस्तर्की नैरुक्तो धर्मपाठकः ।।**
**त्रयश्चाश्रमिणः पूर्वे परिषत्स्याद्दशावरा ।। १११ ।।**

(१) **मेधातिथिः**। पुरुषप्रधानेऽपि निर्देशे गुणपरतैव विज्ञेया। **यस्त्रैविद्यो** वेदत्रयस्याध्येता तदर्थस्य च वेदिता। अनुमानादिकुशलः **तर्की** अयमूहापोहबुद्धियुक्तः। "ननु च नैवंविदो वेदार्थवित्त्वमेव संभवतीत्युक्तम्"। सत्यम्। परोपदेशादपि कस्यचिद्याचनावती

वेदार्थमाला संभवत्यपि । अतश्च प्रत्ययेन विना वेदार्थग्रहणार्थहेतुत्वेन भातीत्युक्तम् । एतेन **नैरुक्तो** व्याख्यातः । **धर्मपाठको** मन्वादिस्मृतिशास्त्राणामध्येता । **त्रयश्चाश्रमिणो ह्येते** ह्यनुष्ठानपराः कुशलतराः धर्मेषु भवन्ति । **पूर्वे** । ब्रह्मचारी गृहस्थो भिक्षुरित्येके । तस्य ग्रामप्रवेशो नानिषिद्धो गौतमेन चेयमानुपूर्वी पठिता 'ब्रह्मचारी गृहस्थो भिक्षुर्वैखानस' इति । अन्ये त्वाहुः—हिंसानुज्ञा नास्तीति । कथमसौ धर्मं श्रयेत्, तस्मात्तापससकाशमन्यैः सह गंतव्यम् ।। १११ ।।

(२) **सर्वज्ञनारायणः** । त्रैविद्य इत्येकोऽनाध्यपेक्षमकवचनं ऋग्यजुःसामार्थज्ञास्त्रय इत्यन्वयः । हैतुक अनुमानज्ञः । तर्की मीमांसावाक्यार्थानुकूलतर्कज्ञः । नैरुक्तः पदार्थनिरुक्तिकुशलः । धर्मं भणयति धर्मभाणकः स्मृतिपुराणेतिहासज्ञः । त्रय आश्रमिणो यतिगृहस्थवनस्थाः पूर्वे परिव्राजकादन्ये । एतदभावे न त्ववरा ग्राह्याः ।। १११ ।।

(३) **कुल्लूकः** । वेदत्रयसंबन्धशाखात्रयाध्येता श्रुतिस्मृत्यविरुद्धन्यायशास्त्रज्ञो मीमांसात्मकतर्कविन्निरुक्तज्ञो मानवादिधर्मशास्त्रवेदी ब्रह्मचारी गृहस्थवानप्रस्था इत्येषा दशावरा परिषत्स्यात् ।। १११ ।।

(४) **राघवानन्दः** । परिषद्द्वयं क्रमेण विवृणोति **त्रैविद्य इति** द्वाभ्याम् । **त्रैविद्यः** ऋग्यजुःसामानीति त्रयीविद्यास्तीति वेदत्रयशाखाध्येतारः । हेतुकः तार्किकः हेतुः पञ्चावयवानुमानं तेनैव व्यवहरति । **तर्की मीमांसकः** । **नैरुक्तः** निरुक्तं वेदाङ्गं तेन व्यवहरति तदुक्तम् । शिक्षाकल्पोव्याकरणं निरुक्तं छन्दोज्योतिषमिति । निरुक्तपदं षण्णामुपलक्षणम् । **धर्मपाठकः** मन्वादिधर्मशास्त्राध्यायी । **आश्रमिणः** पूर्वे ब्रह्मचारी गृही वानप्रस्थश्चैककशः ।। १११ ।।

(५) **नन्दनः** । के पुनस्ते दशतानाह **त्रैविद्यो हेतुकस्तर्कीति** । **त्रिवेदी** त्रिविद्या यस्तामधीते वेत्ति वेति स त्रैविद्यः ऋग्वेदविद्यजुर्वेदवित्सामवेदविदश्चेति त्रय इत्यर्थः । हेतुकः हेतुभिरर्थनिर्णये कुशलः **तर्की** ऊहापोहसमर्थः **नैरुक्तः** निरुक्तवित् **धर्मपाठको** धर्मशास्त्राध्यायी आश्रमिण इति प्रशंसार्थे प्रत्ययः । ब्रह्मचर्यं येन सम्यगनुष्ठितं येन गार्हस्थ्यं येन वानप्रस्थं ते त्रयोऽपीति एते दशपुरुषा दशावरा परिषदिति ।। १११ ।।

(६) **रामचन्द्रः** । **त्रैविद्यः** ऋग्यजुःसामपाठकः हैतुकः तर्कमीमांसार्थवाक्यानुकूलतत्वज्ञः **नैरुक्तः** पदार्थनिरुक्तिकुशलः **धर्मपाठकः** स्मृतिपुराणेतिहासज्ञः च पुनः पूर्वे त्रयः **आश्रमिणः** ब्रह्मचारिप्रभृतयः एषा दशावरा परिषत् ।। १११ ।।

(८) **गोविन्दराजः** । **त्रैविद्य इति** । वेदत्रयशाखात्रयाध्येतारः श्रुतिस्मृत्यविरुद्धन्यायशास्त्र विदूहापोहार्थबुद्ध्युपेतो निरुक्तज्ञो मानवादिधर्माध्येता ब्रह्मचारिगृहस्थवानप्रस्था इत्येषा दशावरा परिषत्स्यात् ।। १११ ।।

(९) **भारुचिः** । तदर्शयतित्रैविद्यग्रहणेन वेदत्रयाध्येतारो गृह्यन्ते । **हेतुकश्चत्रैविद्योऽप्यागमन्यायाविरोधिनस्तर्कशास्त्राध्येतारः तर्की** चाहैतुकोऽपि यः प्रतिभानवानूहतेऽपोहते च । यथान्यायं चाभिनिविशते अश्रुततर्कशास्त्रोऽपि स्वभावतः । **निरुक्तः** केवलोऽपि ।

**धर्मपाठकश्च**ानित्थंभूतोऽपि । **त्रयश्चाश्रमः पूर्वे** प्रव्रजितादन्ये गृहस्थादयः । अपरे तु तापसात् पूर्वाः । त्रीनाहुः गौतमपाठमाश्रित्य, "ब्रह्मचारी गृहस्थो भिक्षुर्वैखानसः" इति, तापसस्य ग्रामप्रवेशप्रतिषेधाच्च । दश धर्मसंशयेऽद्विष्टारक्ताश्च शास्त्रज्ञाः सन्तः प्रमाणीभवन्ति, तथा चोक्तं सामान्यं सर्वस्मृतिलक्षणम्, "विद्वभिः सेवितः सद्भिः" इत्येवमादि । अथवैतान्येव समासतः त्रित्वेन ब्रवीति ।। १११ ।।

**ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च ।।**
**त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये !! ११२ ।।**

**(१) मेधातिथिः ।** निरुक्तव्याकरणमीमांसाभिर्वेदार्थो ज्ञायते । ते च सर्वे साधारणाः । न हि तत्रैवास्य वेदस्यार्थो ज्ञायते नान्यस्य नियममयं प्रकारोऽस्ति । अथ ऋग्वेदादीनामपि कथं भेदोपपत्तिः । तथा तत्र गृह्यसूत्रभेदेन चेदमुक्तम् ।। ११२ ।।

**(२) सर्वज्ञनारायणः ।** तानाह**ऋग्वेदविदिति** । तद्वित्तदर्थवित् ।। ११२ ।।

**(३) कुल्लूकः ।** ऋग्यजुःसामवेदशाखानां येऽध्येतारस्तदर्थज्ञाश्च त्रयः सा धर्मसंदेह-निरासार्थं त्र्यवरापरिषद्बोद्धव्या ।। ११२ ।।

**(४) राघवानन्दः ।** त्र्यवरा त्रयऋग्वेदादिविदोऽवरा येषु धर्मनिर्णयकर्तृषु धर्म-संशयनिर्णये कर्तव्ये परिषत् ज्ञेया ।। ११२ ।।

**(६) रामचन्द्रः ।** ऋग्यजुः सामवेदवित् ।। ११२ ।।

**(८) गोविन्दराजः । ऋग्वेदविदिति।** ऋग्यजुःसामवेदानां येऽर्थज्ञास्तु यस्माद्धर्म-संदेहव्युदासार्थं त्र्यवरापरिषद् बोद्धव्या ।। ११२ ।।

**(९) भारुचिः ।** चतुर्दशविद्यास्थानपारगा एवैते पूर्वोक्ताः शिष्टलक्षणप्राप्तास्त्रित्वे-नोच्यते । अथवा तल्लक्षणयुक्तः ।। ११२ ।।

**एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः ।।**
**स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः ।। ११३ ।।**

**(१) मेधातिथिः । व्यवस्येन्निश्चित्य** कथयेदित्यर्थः । **नाज्ञानां** मूर्खाणां **अयुतैरप्युदितः** । उदितः प्रागेव व्याख्यातः ।। ११३ ।।

**(२) सर्वज्ञनारायणः ।** वेदत्रयार्थवित् । **विचक्षणस्तर्ककुशलः** । न त्वज्ञानां वेदहेत्वा-दिज्ञानशून्यानाम् ।। ११३ ।।

**(३) कुल्लूकः ।** तदभावे **एकोऽपीति** । एकोऽपि वेदार्थधर्मज्ञो यं धर्मं निश्चिनुयात् प्रकृष्टो धर्मः स बोद्धव्यो न वेदानभिज्ञानां दशभिः सहस्रैरप्युक्तः वेदविच्छद्धोऽयं वेदार्थधर्म-ज्ञपरः । एतच्च श्रेष्ठोपलक्षणं स्मृतिपुराणमीमांसान्यायशास्त्रज्ञोऽपि गुरुपरंपरोपदेशविच्च ज्ञेयः । तथा ।। केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः । युक्तिहीनविचारे तु धर्महानिः प्रजायते ।। तेन बहुस्मृतिज्ञोऽपि यदि सम्यक्प्रायश्चित्तादिधर्मं जानाति तदा तेनाप्येकेन धर्म

उदतः प्रकृष्टो धर्मो ज्ञेयः। अतएव यमः ॥ एकोद्वौ वा त्रयो नापि यदत्रूयुर्धर्मपाठकाः ॥ स धर्म इति विज्ञेयो नेतरेषां सहस्रशः ॥ ११३ ॥

(४) **राघवानन्दः**। एतेषामभावे वेदविदेकोपि धर्मवदता नाज्ञानां दशसहस्रमित्याह **एक इति**। **व्यवस्येत्** निश्चिनुयात्। अज्ञानामयुतैरुदितो न धर्म इत्यन्वयः ॥ ११३ ॥

(६) **रामचन्द्रः**। एकोऽपि वेदत्रयार्थवित् यं धर्मं **व्यवस्येत्** विचालयेत् स परो धर्मः अज्ञानामयुतैः यो धर्म उदितः स न कार्यः ॥ ११३ ॥

(८) **गोविन्दराजः**। तदसंभवेऽपि **एक इति**। एकोऽपि वेदार्थज्ञो यं धर्मं निश्चिनुयात् स प्रकृष्टो बोद्धव्यो न वेदानभिज्ञानां अयुतैरप्युक्तः। **अयुतं** दशसहस्राणि ॥ ११३ ॥

(९) **भारुचिः**। अज्ञानां निन्दार्थवादो निवृत्त्यर्थः ॥ ११३ ॥

**अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ॥**
**सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥ ११४ ॥**

(१) **मेधातिथिः**। **अव्रतानामिति** प्रागुक्त एवार्थो व्यतिरेकद्वारेण कथ्यते। **व्रतिनो** वेदाध्यायिनः यं निश्चयं ब्रुवते तत्र न विचिकित्सितव्यं विद्वद्भिरविद्वद्भिर्वा। अत एव न लघुपरिकल्पो गुणतुल्यवद्विकल्प्यते ॥ ११४ ॥

(२) **सर्वज्ञनारायणः**। अयुतैरित्युक्तं तत्स्पष्टयति **अव्रतानामिति**। **अव्रतानाम**चीर्णवेदव्रतानाम्। **अमन्त्राणाम**नधीतवेदानाम्। **सहस्रशः** सहस्रसंख्यया। परिषत्त्वं धर्मोपदेशकत्वम् ॥ ११४ ॥

(३) **कुल्लूकः**। सावित्र्यादिब्रह्मचारिव्रतरहितानां मन्त्रवेदाध्ययनरहितानां ब्राह्मणजातिमात्रधारिणां बहूनामपि मिलितानां परिषत्त्वं नास्ति धर्मनिर्णयसामर्थ्याभावात् ॥ ११४ ॥

(४) **राघवानन्दः**। व्रतमन्त्रविहीनानां ब्रह्मबन्धूनां न **परिषत्त्वमित्याह** **अव्रतानाम**तपस्विनां **अमन्त्राणां** वेदहीनानाम् ॥ ११४ ॥

(६) **रामचन्द्रः**। अव्रतानां अमन्त्राणां मन्त्रमात्रे रहितानां द्विजानां जातिमात्रोपजीविनां सहस्रशः समेतानां एतेषां मिलितानां परिषन्न विद्यते ॥ ११४ ॥

(८) **गोविन्दराजः**। **अव्रतानामिति**। सावित्रादिब्रह्मचारिव्रतरहितानां वेदाध्ययनशून्यानां ब्राह्मणजातिमात्रोपजीविनां सहस्राणामेकीभूतानां परिषत्त्वं नास्ति धर्मनिर्णयासामर्थ्यात् ॥ ११४ ॥

**यं वदन्ति तमोभूता मूर्खा धर्ममतद्विदः ॥**
**तत्पापं शतधा भूत्वा तद्वक्तॄननुगच्छति ॥ ११५ ॥**

(१) **मेधातिथिः**। वक्तॄणामविदुषां दोषकथनम् ॥ ११५ ॥

(२) **सर्वज्ञनारायणः**। तमोविपरीतज्ञानं उद्भूतास्तत्प्राप्ताः। **मूर्खा** अनधीतवेदाः। **अतद्विदो** धर्ममजानन्तः तद्धर्माभासकरणे यथोक्तधर्मपरित्यागेन यत्पापं **तच्छतधा** शतप्रकारं शतगुणमित्यर्थः। **तद्वक्तॄन्** तद्धर्मान्विक्तॄंस्तानेव मूर्खान् ॥ ११५ ॥

(३) **कुल्लूकः**। तमोगुणबहुला मूर्खाः धर्मप्रमाणवेदार्थानभिज्ञा अतएव प्रश्नविषय-धर्मानिदः प्रायश्चित्तादिधर्मं यंपुरुषं प्रत्युपदिशन्ति तदीयं पापं शतगुणं भूत्वा वाचकान्बहून्भजेत ॥ ११५ ॥

(४) **राघवानन्दः**। न केवलं परिषत्वाभावोऽपि तु तन्निर्णीतमनर्थावहमित्याह **यमिति**। तमोभूतास्तमसाऽविवेकेनाभिभूताः। तत्पापं कर्तुः पापं शतगुणं भूत्वा तद्वक्तॄन्धर्मनिर्णयकर्तॄन नुगच्छति फलायेति शेषः ॥ ११५ ॥

(६) **रामचन्द्रः**। **तमोभूताः** विपरीतज्ञानं प्राप्ताः यं धर्मं वदन्ति तत्पापं **शतधा** शतगुणितं भूत्वा तद्वक्तॄननुगच्छति प्राप्नोति ॥ ११५ ॥

(८) **गोविन्दराजः**। **यमिति**। ये मूढा विवेकाभावात् तमोरूपा धर्मानभिज्ञा सन्तः पापकारिणो यत्प्रायश्चित्तमुपदिशन्ति तत्प्रायश्चित्तनिमित्तभूतं पापं शतगुणं भूत्वा तेषां प्रायश्चित्तदातॄणां भवति ॥ ११५ ॥

(९) **भारुचिः**। तेषामिदानीं धर्मोपदेशनिवृत्त्यर्थं दोषमाह–

**एतद्वोऽभिहितं सर्वं निःश्रेयसकरं परम् ॥**
**अस्मादप्रच्युतो विप्रः प्राप्नोति परमां गतिम् ॥ ११६ ॥**

(१) **मेधातिथिः**। प्रतिज्ञातधर्मोपसंहारः श्लोकोऽयम्। 'धर्मान्नो वक्तुमर्हसि' इति यत्पृष्टं 'महर्षीन् श्रूयतामिति' यद्वक्तव्यतया प्रतिज्ञातं तत्सर्वं कथितमिति शास्त्रपरिसमाप्ति-माह। "ननु च परस्तादप्यस्ति शास्त्रं हंतव्यादिशास्त्रं सा च विधितः श्रूयते। तत्र बिधिविषये कश्चिदिति कथमुच्यते शास्त्रमुपसंह्रियत इति। वक्तुर्न करोति प्राय उप-संहारः।" परस्ताच्च कर्मशेषात्स्वप्रधानाशुद्धैव विद्योपदिश्यत इति न विरोधः। सर्वत्र श्रेयसी शास्त्रार्थधर्मलक्षणा विद्येत्युपसंहृत्याभिधाने प्रयोजनम् ॥ ११६ ॥

(२) **सर्वज्ञनारायणः**। अपच्युतः अत्यक्तोद्यमः ॥ ११६ ॥

(३) **कुल्लूकः**। एतन्निःश्रेयससाधकं प्रकृष्टं धर्मादिकं सर्वं युष्माकमभिहितं एतदनुति-ष्ठन् ब्राह्मणादिः **परमां गतिं** स्वर्गापवर्गरूपां प्राप्नोति ॥ ११६ ॥

(४) **राघवानन्दः**। धर्मान्नोवक्तुमर्हसीति यत्पृष्टं महर्षीन् श्रूयतामिति यत् प्रतिज्ञातं तत्सर्वं स्वोक्तं परमप्रकृतमुपसंहरन् धर्मस्य मोक्षफलत्वमाह **एतदिति**। अस्मान्मनूक्ता न्नित्यनैमित्तिकाद्धर्मादप्रच्युतोऽपरिभ्रष्टः परमां मोक्षाख्यां प्राप्नोत्येव। तदुक्तम् भगवता वासुदेवेन ॥ सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत इति ॥ आरादुपकारकत्वेन ज्ञानहेतुत्वं कर्मणामित्युक्तं तन्न प्रस्मर्तव्यम् ॥ ११६ ॥

(६) **रामचन्द्रः**। एतद्वो युष्माक परं नैःश्रेयसकरं गुह्यं धर्मजातं सर्वं **अभिहितं** कथितं अस्मादप्रच्युतः अत्यक्तधर्मः ॥ ११६ ॥

(८) **गोविन्दराजः। एतदिति।** एतत्प्रकृष्टं श्रेयसो धर्मं सर्वं युष्माकमुक्तम्। एतदनुतिष्ठन् ब्राह्मणादिः स्वर्गापवर्गादिप्राप्नोतीति कृत्स्नं धर्मोपसंहारमेतत् ॥ ११६ ॥

(९) **भारुचिः**। उपसंहारश्लोको निःश्रेयसार्थानां कर्मणां वेदाभ्यासादीनाम्। तथा च तदुपोद्घातार्थमुक्तम्। "नैःश्रेयसं कर्मविधिं विप्रस्येदं निबोधत"ति केचित्। वयं तु पुनः कृत्स्नधर्मोपसंहारार्थमेवेममाचक्ष्महे। येन नात ऊर्ध्वं केचनधर्मा वक्ष्यन्ते ॥ ११६ ॥

**एवं स भगवान्देवो लोकानां हितकाम्यया।**
**धर्मस्य परं गुह्यं ममेदं सर्वमुक्तवान् ॥ ११७ ॥**

(१) **मेधातिथिः। स भगवान्** मनुरिदं शास्त्रं सर्वं लोकहिताय **प्रोक्तवानिति** भृगुः शिष्यानाह। अनेनाधिकाराकांक्षा निवर्तते। **गुह्यं** यदध्यात्मं तदपि मनुर्मामुपदिश्य प्रकाशयांचक्रे। मयापि यथागमं भवतां प्रकटीकृतमिति न कार्योऽधिकाऽकांक्षा ॥ ११७ ॥

(२) **सर्वज्ञनारायणः**। धर्मगुह्यं सारम् ॥ ११७ ॥

(३) **कुल्लूकः**। स भगवानैश्वर्यादिसंयुक्तो द्योतनाद्देवो मनुरुक्तप्रकारेणेदं सर्वं धर्मस्य परमार्थं शुश्रूषुशिष्येभ्यः अगोपनीयं लोकहितेच्छया ममेदं सर्वमुक्तवानिति भृगुर्महर्षीनाह ॥ ११७ ॥

(४) **राघवानन्दः**। अस्य शास्त्रस्य स्वकपोलरचितत्वं व्यावर्तयितुं स्वगुरोर्वृत्तमाह एवमिति। इदं मत्वाख्यं परमं स्मृत्यन्तरेभ्यः श्रेष्ठं गुह्यमार्यसंरक्षणीयत्वाद्धर्मस्यवस्तुतस्तु। धर्मस्यानुष्ठीयामानस्येदममरोक्षीभूतं परमं परेण वेदान्तमानेन मीयते ब्रह्म अतएव गुह्यं यतः सर्वं सर्वस्याधिष्ठानत्वे सति सर्वविधिभूतं सर्वं खल्विदं ब्रह्म तज्जलान् पुरुषान्नपरं किंचित्सा काष्ठा सा परा गतिरिति श्रुतेः ॥ ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ॥ शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य चेति भगवदुक्तेश्च ॥ ११७ ॥

(५) **नन्दनः**। अधीतधर्मशास्त्रस्याप्तपुरुषमूलत्वमाह एवं सभगवान्देव इति। एवं देवः स्वायम्भुवो मनुरनेनास्य ज्ञानातिशय उक्तः। लोकानां हितकाम्यया कारुण्यमेवोपदेशकारण नान्यदित्युक्तम् ॥ ११७ ॥

(६) **रामचन्द्रः**। धर्मस्य परमं गुह्यं धर्मं स्मृतं मम इदं सर्वं उक्तवान् ॥ ११७ ॥

(८) **गोविन्दराजः। एवमिति।** स भगवानणिमादिगुणयोगाद्देवो मनुरनेनैवोक्तेन प्रकारेणेदं सर्वं धर्मस्य परमार्थं लोकहितेच्छया ममोक्तवानिति भृगुर्महर्षीनाह ॥ ११७ ॥

(९) **भारुचिः**। तथा चानन्तरश्लोकः **एवमिति** भृगुर्भगवान्–श्रोतॄन् स्वशिष्यानेवमाह तथा चायमेव धर्मशास्त्रप्रवचने प्रथमेऽध्यायेऽधिकृत्य स्मर्यते, 'एतद्वोऽयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः। एतद्धिमत्तोऽधिजगे सर्वमेषोऽखिलं मनुरि'ति। यद्ययमुपसंहारो धर्माणा-

मुत्तरास्तर्हि किमर्थाः श्लोकाः। परमात्मोपासनार्थाः। तथा चोत्तरत्राध्यात्ममेव वक्ष्यते न तु धर्माः केचन वक्ष्यन्ते। उक्तत्वात्तेषाम्। एवं च सति पूर्वश्लोक उक्तानां सर्वधर्माणा, मुपसंहारार्थः, न तु शास्त्रम्। शास्त्रं तु परमात्मविषयमुपासनापदार्थं साध्यात्ममुत्तरत्रो-पसंहरिष्यति– "इत्येतन्मानवं शास्त्रं भृगुप्रोक्तं पठन् द्विजः। भवत्याचारवान्नित्यं यथेष्टं चाप्नुयाद्गतिम्"।। इति न केवलमेतदेव धर्मगुह्यं यदुक्तं धर्मोपसंहारश्लोके इत्येवमादि, किं तर्हि इदं चापरं परमात्मविषयं तत्प्रसंख्यानमध्यात्मोपासनारूपं धर्म-गुह्यमुच्यते ।। ११७ ।।

**सर्वमात्मनि संपश्येत्सच्चासच्च समाहितः ।।**
**सर्वं ह्यात्मनि संपश्यन्नाधर्मे कुरुते मतिम् ।।११८।।**

(१) **मेधातिथिः।** **सर्वं** जगत्सदसद्रूपमुत्पत्तिविनाशधर्मकम्। अथवा **असत्** शशवि-षाणादिवत् **सच्च** नित्यमाकाशादिवत् **सर्वमात्मनि संपश्येदा**त्मनि व्यवस्थितमुपासीत। संदर्श-नार्थस्य स्पष्टार्थस्य साक्षात्करणपर्यन्ततयोपासनया विज्ञायते। न हि सकृद्दर्शनेन साक्षात्कारः संभवति।तथोपदिश्यते रहस्यशास्त्रम्। तत्रात्मध्यानायैतदुक्तं भवति 'श्रोतव्यो मंतव्यो निदिध्यासितव्य' (बृहदारण्यक, अ० २ ब्रा० ५) इति ध्यानपर्यन्तता सद्दर्शनस्य। आत्मध्यानं यथोपदिष्टज्ञानाभ्यासो विजातीयप्रत्ययानन्तरितमुच्यते। अथवा सामर्थ्यादभ्यासाक्षेपः। यतः संस्कारकर्माणि च संस्कार्ये विशेषाधानेन संपन्नस्वार्थानि भवन्ति। यथा 'व्रीहीनवहन्तीति' अश्रुतोपन्यासः तुषकणविप्रमोकफलेभ्यस्ततसंदर्शनेन ह्यदृष्टार्थता स्यात्। तथा च कर्मविधि-त्वात् षष्ठिसंस्कारकर्मताहानिश्च। अतः **संपश्येदि**ति ज्ञेयान्तरविषयज्ञाननिराकरणेन तदेक-ज्ञेयनिष्ठामनुब्रूयात्। अत्रा**त्मनी**ति विवदन्ते। कोऽयमात्मा नाम। यदि तावदयं देहाधिकरणः क्षेत्रज्ञः तत उत्तरं विरुध्येत 'प्रशासितारं रुक्माभम्' इति। न हि कर्मत्वशरीरस्य मृत्वोत्पत्तिः श्रूयते–'एतस्य वाऽक्षरस्य प्रशासने गार्गी द्यावापृथिव्यौ विधृते तिष्ठत' इति (बृहदारण्यक ३।८।९)। तस्मान्नाहंप्रत्ययप्रमेयं आत्मन्यपि संसारविधिः। अतोऽन्या काचित्तस्य स्वरूप-सिद्धिर्वक्तव्या। किंचैवं सति 'पश्येदि'ति आदिना जाह्यात्मनामप्याधिभूतादिदैवभावेन व्यवस्थितानामाध्यात्ममुपसंहारः। शिष्यते च श्रौतमतोस्तरागः साधनतया कारणात्मनार्जितस्य संबन्धितां प्रतिपद्यते। ननु यः सर्वं जगत्कारणपुरुषावच्छेदमुक्तं सदा प्रत्यात्मनि **संपश्येदिति,** तत्र कीदृशमात्मनो दर्शनमात्मनीति वक्तव्यम्। अन्ये तु मन्यन्ते शरीरात्मन एवैतत्सं-निवेशनं युक्तम्। तस्य हि श्रोतृसंनिवेशेन तद्वत्ता युक्ता। तत्रोच्यते। आत्मशब्दस्तावत्पर-मात्मविषयतया दर्शितवाक्यान्तरसमन्वयप्रमाणः। यत्तु स्वरूपसिद्धिर्वक्तव्येति तत्र किमन्य-च्छक्यं वक्तुमन्यदतः श्रौततत्वज्ञानविधेः। तानि च वाक्यानि प्रतिशाखं सर्वोपनिषद्भ्योऽ-वगन्तव्यानि। प्रमाणान्तराणामप्येकत्वप्रतिपादनपरत्वादेव ग्राहिणः प्रत्यक्षस्य मिश्रैः कृत एव क्लेशः। उक्तं च वाक्यपदीये 'न तदस्ति च तन्नाम्नि' इत्यादि। विध्यवगम्यता च शरीरावरकादवसातव्या। यदप्युक्तमसत्कथं दृश्यत इति **सच्चासच्चे**त्ययमर्थः स्यात्। 'सदिति' विकारग्रामस्य निर्देशः। 'असदिति' अप्रत्यक्षतैव सूक्ष्मतयाऽशक्यावधारणत्वात्।

यदप्युक्तं नास्ति परमात्मनः श्रोत्रसंबन्ध इति। किमत्र संबन्धि सर्वस्य जगत्स्थित्युत्पत्तिविनाशानां तत्कारणतयोपपादितत्वात्। यश्चायं संनिवेशविधिस्तस्यायमर्थः— यावद्यत्किंचिद्भेदवदवभासते तत्सर्वमद्वैतिकत्वे प्रविलापयेत्। सर्वमात्मस्थमित्येतत्परमात्मनो विरतिसामान्ये हेतुर्विहात इति। **समाहितः**। समाधिर्नाम चित्तवृत्तिनिरोधोपायो योगशास्त्रादागमयितव्य इत्यर्थः। **नाधर्मे कुरुते मतिं** बुद्धिचेतसोर्निश्चलताभावः। तावदभ्यसेद्यावद्वादिभिश्चेतो नापह्रियेत्। अतश्च यावत्कश्चिद्भेदकत्वे प्रतिविलापयेत्॥ ११८॥

(२) **सर्वज्ञनारायणः**। **आत्मनि** परमात्मनि स्थितं न ततोऽन्यत्र पश्येदित्यर्थः। सद्वर्तमानम्। असद्व्यलीकम्। समाहितो ध्यानस्थः। नाधर्मे मनः कुरुते रागद्वेषाभावात्॥ ११८॥

(३) **कुल्लूकः**। एवमुपसंहृत्य महर्षीणां हितायोक्तमध्यात्मज्ञानं प्रकृष्टमोक्षोपकारकतया पृथक्कृत्याह **सर्वमिति**। सद्भावमसद्भावं सर्वं ब्राह्मणो जानन्ब्रह्मस्वरूपमात्मन्युपस्थितं तदात्मकमनन्यमनाध्यानप्रकर्षेण साक्षात्कुर्यात् यस्मात्सर्वमात्मत्वेन पश्यन् रागद्वेषाभावादधर्मे मनो न कुरुते॥ ११८॥

(४) **राघवानन्दः**। एतदेवोपपादयति अध्यारोपापवादाभ्यां **सर्वमिति** सप्तभिः। सर्वं सचित्कं जगत् **सत्** स्थूलं पृथिव्यादि **असत्** आकाशादि द्वेवाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं चेति श्रुतेः। आत्मन्यध्यस्तमिति सं सम्यक् पश्येन्नतु योषित्यग्निवत्पश्येत्। हि अधर्मे धारणाद्धर्मे ब्रह्म तद्भिन्ने अनात्मनि मनो न कुरुते आसक्तिं न कुर्यात्। अथवा अधार्मिकोऽस्मीति न मन्येत धर्माधर्मयोस्तद्धेतोः कर्तृत्वादेरसत्त्वात् न साधुना कर्मणा वर्धते नो एवासाधुना कनीयान् सर्वे पाप्मानोऽतो निवर्तन्ते। किमहं साधुनाकरवं किमहं पापमकरवमिति श्रुतेश्च॥ ११८॥

(५) **नन्दनः**। अथ धर्मशास्त्रार्थोपदेशत्वेनोपदिष्टयोः परस्परमात्मज्ञानयोगयोरादरातिशयार्थं ज्ञानं तावत्प्रपंचयति **सर्वमात्मनि संपश्येदिति**। सदसत्कारणकार्ये शुभाशुभे वा सर्वमात्मनि संपश्येदात्मनि सर्वमाकाशे वायुमिव स्थितं पश्येदित्यर्थः। **नाधर्मे कुरुते** मन इत्यनेन ज्ञानस्यानुषङ्गिकं फलमुक्तम्॥ ११८॥

(६) **रामचन्द्रः**। सर्वं **आत्मनि** परमात्मनि संपश्येत्। सच्चासच्च **समाहितः** ध्यानस्थः॥ ११८॥

(८) **गोविन्दराजः**। इदानीं यत्तदुक्तं मानवस्य शास्त्रस्य रहस्यमुपदेक्ष्यत इति तत्कथयन्नाह **सर्वमिति**। यत् मूर्तं पृथिव्यादि यच्चामूर्तमाकाशादि तत् सर्वमात्मन्येकीभूतमित्येवमेकाग्रो भूत्वा पश्येद्यस्मादहमेवेदं सर्वमित्येवं भावयन् रागद्वेषाभावादधर्मे मनो न कुरुते॥ ११८॥

(९) **भारुचिः**। केचिदाहुः क्षेत्रज्ञात्मविषयं तत्प्रसंख्यानमध्यात्मोपासनारूपं धर्मगुह्यम् न, विरुद्धत्वात्। वक्ष्यति हि "प्रशासितारं सर्वेषामि" त्येवमादि। यत इदं परमात्मविषयमेवात्मग्रहणं विज्ञेयम्। तथा च प्रदर्शयिष्यामः श्लोकमिदानीं विवृणुमः। **सर्वंयद्वक्ष्यति**। **सच्चासच्चेति**। तद्व्यक्ताव्यक्तं सविकारमप्रधानमुच्यते। **आत्मनीति** सर्ववेदशाखोपनिषद-

स्तत्त्वे परमात्मनीत्यर्थः। अध्यस्तं व्यवस्थितं तदधीनवृत्तिभेदपक्षे, तदात्मकतया वाभेदपक्ष इति केचित्। **संपश्येदि**त्युपासीतेत्यर्थः। कथमेवं यथावोचाम। तथा **च** पश्यतिरूपासनार्थो विज्ञेयः। तस्य विशेषणं **समाहितः** आस्तिक्येन श्रद्धया यमनियमैर्वा समाहितात्मा पश्येत्। अस्य फलार्थवादः फलविधिर्वा "**सर्वं ह्यात्मनि सम्पश्यन्नाधर्मे कुरुते मनः**", परमात्मत्वेन सर्वमिदं पश्यन्। यतश्च ।। ११८ ।।

**आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम् ।।**
**आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम् ।। ११९ ।।**

(१) **मेधातिथिः**। सर्वत्र यागादिक्रियाः स्वर्गादयो **देवता** आत्मत्वेन द्रष्टव्याः। योऽयमग्निर्देवता अग्नेरिमान्यात्मैतासौ नान्योऽग्निर्देवताऽस्तीति। तदप्युक्तम् 'एक आत्मा बहुधा श्रूयत' इति। यत्र युक्त 'एक एवाहमात्मा देवतेति'। तथा (ऋ. वे. १/१६४/४६) 'इन्द्रं मित्रं वरुणमग्निमाहुः एकं सद्विप्रा बहुधा वदन्ति बहुरूपपरमात्मनोऽन्यां देवतां पश्यन्ति। सतां परादा'दित्यनेन कर्माङ्गदेवतानामात्मदृष्टिर्विधीयते। "किं तर्हि, न तस्य देवतादिकृत्यमस्ति"। आत्मतयैव सर्वसिद्धिः। कथम्? नार्थात्मनि अनयत्येषामिति। **कर्मयोगे** कर्मफलसंबंधः। स **आत्मा** तेषां निष्पादयति। नान्या देवता न तद्गुणकमिति ।। ११९ ।।

(२) **सर्वज्ञनारायणः**। एवं भूतनिश्चयहेतुभूतामुपसंहारभावनामाह **आत्मैवेति**। सर्वदेवताभ्योऽन्यदपि अवस्थितमभेदेन। यस्मात्कर्मकर्तृत्वं योगकर्तृत्वं शरीरिणां जीवानामात्मा परमात्मा जनयतीति तदेतत्कर्तृत्वाधीनभावनागोचरमित्यनुचिन्तयेदित्यर्थः ।। ११९ ।।

(३) **कुल्लूकः**। एतदेव स्पष्टयति **आत्मैवेति**। इन्द्राद्याः **सर्वदेवताः** परमात्मैव सर्वात्मत्वात्परमात्मनः सर्वं जगदात्मन्येवावस्थितं परमात्मपरिणामत्वात् हिरवधारणार्थे परमात्मैवैषां क्षेत्रज्ञादीनां कर्मसंबन्धं जनयति। तथा च श्रुतिः एष ह्येव साधुकर्म कारयति यमूर्ध्वं निनीषति एष ह्येवासाधुकर्म कारयति यमधो निनीषतीति ।। ११९ ।।

(४) **राघवानन्दः**। ननु कथं कर्तृत्वाद्यभाव इतिचेदिन्द्रियगणस्य तदधिष्ठातृदेवतागणस्यात्मन्यध्यस्ततया तन्मात्रत्वं यदा तदा जीवस्य सुतरामकर्तृत्वादित्याह **आत्मैवेति**। एव शब्दोऽन्ययोगव्यवच्छेदार्थः। देवताशब्दो जगद्विवर्तपरः। अतएवाह सर्वमिति। अवस्थितमध्यस्तं चिदचितोर्वास्तवसंबन्धानिरूपणात्। जनयति अयस्कान्तमणिरिव स्वसंनिधानेन प्रवर्तयतीव (ध्यायतीवलेलायती) चेति श्रुतेः। शरीरिणां स्थूलशरीरावच्छिन्नलिङ्गशरीरिणाम्। विज्ञानं यज्ञं तनुते। कर्माणि तनुतेऽपिचेति श्रुतेः। अन्वागत पुण्येनान्वागत पापेन असंगो ह्ययं पुरुषः [केवलो] निर्गुणश्च न लिप्यते कर्मणा पापपंकेनेत्यात्मनोऽसंगत्वश्रुतेः ।। ११९ ।।

(५) **नन्दनः**। सर्वदेवता आत्मैव **सर्वदेवताः** परमात्मनो विभूतिभूतानि सर्वमात्मन्यवस्थितं सर्वमात्मपरतन्त्रमित्यर्थः पारतन्त्र्यमेवोत्तरार्धेनोपपादितम् ।। ११९ ।।

(६) **रामचन्द्रः**। सर्वा देवताः आत्मैव। सर्वमात्मनि अवस्थितम्। आत्मा परमात्मा एषां शरीरिणां जीवात्मनां कर्मयोगं कर्तृत्वं जनयति ।। ११९ ।।

(८) **गोविन्दराजः आत्मेति**। इन्द्राद्याः सर्वदेवताः परमात्मैव नात्मव्यतिरेकेण नान्या देवताः सन्ति। तथा चेन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः इत्येव श्रूयते। सर्वं च जगत् परमात्माश्रितं यस्मादेषां क्षेत्रज्ञानां जगत्कारणभूतेन शास्त्रेणाशास्त्रितेन कर्मणामात्मैव संबन्धं जनयति। तथा च भगवान् व्यासः। "अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः। ईश्वरः प्रेरितो गच्छेत्स्वर्गं वाश्वभ्रमेव च" इत्याह ।। ११९ ।।

(९) **भारुचिः**। येन कारणेन परमात्मैव देवता वस्वाद्याः सर्वा इत्यध्यात्माधिभूताधिदेवताधियज्ञव्यवस्थिता इत्यर्थः, अतश्च **सर्वमात्मन्यवस्थितं** पश्येदिति वर्तते। अनेन चात्मन्यवस्थानशब्देन भेदपक्ष एव विज्ञायते, नाभेदपक्षः। तथा च सति यदत्राभेदवचनं तदागमोपपत्तिविरोधादर्थवादीक्रियते। एवं च सति परमात्मैव तस्यां तस्यां कर्माङ्गदेवतायामवस्थितः सम्प्रदानकारकत्वेन कर्मत्वेन चोपासनादिक्रियाणां जनयति **कर्मयोगम्**। कस्य एषां शरीरिणां शास्त्रधर्मेष्वाधिकृतानामर्थलक्षणेषु चेतरेषामधिकृतविधेरयमर्थवादो विज्ञायते ।। ११९ ।।

**स्वं सन्निवेशयेत्खेषु चेष्टनस्पर्शनेऽनिलम् ।।**
**पक्तिदृष्टयोः परं तेजः स्नेहेऽपो गां च मूर्तिषु ।। १२० ।।**

(१) **मेधातिथिः**। यान्येतानि नवच्छिद्राणि तेषु बाह्यमाकाशं नियच्छेत्। 'बाह्यमाकाशं तदेव तत्र बाह्यं किंचिदस्तीति'। **अनिलो** वायुः। तं सन्निवेशयेत्। चेष्टते स्पंदते तत्र काचिच्छरीरावस्था हस्तपादाद्युक्तविहरणलक्षणायाश्चायम्। **स्पर्शो** बाह्यादिलक्षणः। तत्र वायुं **संनिवेशयेत्**। **पक्ति**र्जाठराग्निकृता। **दृष्टिश्च**। तयोः निवेशयेत्। **तेजः परं** कृत्स्नमादित्यात्मनावस्थितम्। **स्नेहे** मेदो मज्जादिरूपे संनिवेशयेदिति वर्तते। **गां** पृथिवीं **मूर्तिषु** शरीरभागेषु ।। १२० ।।

(२) **सर्वज्ञनारायणः**। अत्राप्यशक्तस्य स्वशरीर **एव** सर्वदेवता सर्वभूतोपसंहारभावनां सुकरां चित्तस्थैर्यसिद्ध्यर्थमाह **खमिति**। खं बाह्यमाकाशं स्वदेहच्छिद्रेषु संनिवेशयेदेकीभूतं भावयेत्। **चेष्टनः** शरीरभूतो वायुः **स्पर्शनः** स्पर्शज्ञानहेतुस्त्वगिन्द्रियं **अनिलो** बाह्यः। पक्तिरन्नपाककारी वन्हिः। **दृष्टिश्**चक्षुस्तेजः। **परं** बाह्यम्। **स्नेहे** स्निग्धत्वहेतौ शारीरजले। अपो बाह्याः। **गां** पृथ्वीम्। **मूर्तिषु** कठिनावयवेषु। ।। १२० ।।

(३) **कुल्लूकः**। इदानीं वक्ष्यमाणब्रह्मध्यानविशेषोपयोगितया दैहिकाकाशादिषु बाह्याकाशादीनां लयमाह **खमिति**। बाह्याकाशमुदराद्यवच्छिन्नशरीराकाशेषु लीनमेकत्वेन धारयेत्। तथा चेष्टास्पर्शकारणभूतदैहिकवायौ बाह्यवायुं औदर्यचाक्षुषतेजसोरग्निसूर्ययोः प्रकृष्टं तेजः, दैहिकास्वप्सु बाह्या अपः बाह्याः पृथिव्यादयः शरीरपार्थिवभागेषु ।।१२०।।

(४) **राघवानन्दः**। आरोपमुक्ताऽपवादप्रकारमाह **खमिति**। खं सकार्यं पञ्चीकृतमाकाशं **निवेशयेत्** संहरेत्। **खेषु** अपञ्चीकृताकाशतत्कार्यश्रोत्रियेन्द्रियेषु विषयग्रहणार्थामिन्द्रियं तत्संहारेण तेषामपि संहरणं भवतीति भावः। एवमुत्तरत्र। एवमाकाशं

संहृत्यानिलं बाह्यं वायुं तस्मिन् । स्पर्शनेनत्वचिचचेष्टने आन्तरप्राणवायौ । **पक्तिदृष्टयोः** पचनप्रकाशद्वययुजि जाठराग्नौ चक्षुषि च तेजो निवेशयेदित्यनुषज्यते । **स्नेहे** शरीरस्थे रसानायां जलमिव अपो बाह्याः । **मूर्तिषु** शरीरस्थपृथिव्यां **गां** बाह्यपृथिवीम् ॥ १२० ॥

(५) **नन्दनः** । अथ योगं प्रपञ्चयति **खं सन्निवेशयेत् खेष्विति** । **स्वेषु** श्रोत्रादिषु शरीररन्ध्रेषु खमाकाशाभिमानिनीं देवतां **संनिवेशयेत्तदा**त्मकतयाध्यायेदित्यर्थः । एवमुत्तरत्र निवेश्यत्वेन वक्ष्यमाणत्वात्तदभिमानिनीदेवता इत्यवगन्तव्यम् । चेष्टनस्पर्शने पाणित्वगिन्द्रिययोः कर्मणी **अनिलं** वायुः । पक्तिर्जाठरोऽग्निस्तस्मिन्दृष्टौ च तेजः अग्नि **स्नेहे** शरीरस्य स्निग्धत्व**मूर्तिषु** अस्थिषु **गां** भूमिम् ॥ १२० ॥

(६) **रामचन्द्रः** । **खं** बाह्याकाशं **स्वेषु** देहछिद्रेषु संनिवेशयेत् । चेष्टनः शरीरवायुसंस्पर्शने ज्ञानहेतुः अनिलम् । बाह्यं **पक्ति**दृष्टयोः अन्नपाककरोपाह्वपर चक्षुषोर्बाह्यं तेजः । **स्नेहेः** अपः । **गां** पृथ्वीं मूर्तिषु ॥ १२० ॥

(८) **गोविन्दराजः** । अधुना सर्वमात्मनि संपश्येदिति यदुक्तं तत्र विशेषमाह **खमिति** । **मनसीति** । बाह्यमाकाशं शरीरगताकाशेनैव सहैकत्वेन भावयेदेवं चेष्टास्पर्शकारणभूतेन दैहिकेन वायुना सह बाह्यस्य वायोरैक्यं कोष्ठयं चाक्षुषतेजसा सह प्रकृष्टस्य तेजसोऽग्न्यादित्यारब्धस्यैक्यं शरीराभिरद्भिः सहापामैक्यं शारीरैश्च कठिनैर्भागैः पार्थिवैः सह बाह्यायाः पृथिव्यामप्यैक्येन मनसा सह चन्द्रं श्रोत्रेण सह विष्णोर्वीर्य्येण सह भगवदीश्वरस्य वागिन्द्रियेण अग्नेरपानेन्द्रियेण सह हिरण्यगर्भस्यैक्यं भावयेत् । एवमध्यात्मिक भूतादिभिः सहाभौतिकाधिदैविकानामैक्यं भावयेत् ॥ १२० ॥ १२१ ॥

(९) **भारुचिः** । आध्यात्मकमधुनोपासनायोगानां परमात्मविषयं बाह्योपसंहारेण दर्शयति खमिति । खं **सन्निवेशयेत् खेषु खं** बाह्यमधिदैवाधिभूताख्यं सन्निवेशयेदुपासनया खेष्वाध्यात्मिकेषु दैवतैक्यप्रदर्शनेन । एवं **चेष्टनस्पर्शन** आध्यात्मिके बाह्यानिलं सन्निवेशयेदिति विज्ञेयम् । एवं **पक्तिदृष्टयोः** शरीरयोः **परं तेजः** कस्य परं वायोर्निर्देशः, सन्निवेशयेदिति सर्वत्रानुवर्तते । **स्नेहे** आध्यात्मिकेऽपः सन्निवेश्यमानानामपां कर्मत्वादयं द्वितीयानिर्देशोऽप इति । **गां च मूर्तिषु** एवं सर्वत्र ॥ १२० ॥

**मनसीन्दुं दिशः श्रोत्रे क्रान्ते विष्णुं बले हरम् ॥**
**वाच्यग्निं मित्रमुत्सर्गे प्रजने च प्रजापतिम् ॥ १२१ ॥**

(१) **मेधातिथिः** । एवं महाभूतानामुपसंहारः । इदानीं देवतानामाधानमुपसंहरिष्यते । योऽयमिन्दुश्चन्द्रमास्तं **मनसि** संनिवेशयेत् । नैष चन्द्रो गगनसंचारी । किं तर्हि ? मम 'मनसि' व्यवस्थितः । याश्च **दिशः** श्रोत्रेन्द्रियशक्तौ । **क्रान्ते विष्णुं** यो यत्राल्पमपि क्रामति विष्णुरेव क्रान्तिकर्मणा संनिविष्टः । एवं **बले हरम्** । हनुरेतो द्रागप्युत्थानं स चेन्द्रियावकाशः कालाकृतिरिन्द्रियकर्मैव तत् । यं एवं वागग्नेरेवायमुत्सर्गो वाय्वाद्यैर्मन्त्रैः पश्येत् । एवमध्यात्ममुपसंहृत्य सर्वं परमात्मनि पश्येत् । एवमात्मको हेतुः परमात्मनि व्यवस्थितो 'नाहं कश्चित्ततो भिन्न इति' । एवमेषा सर्वोपासना कर्तव्या ॥ १२१ ॥

(२) **सर्वज्ञनारायणः**। इन्दुश्चन्द्रः तस्य मनोदेवतात्वात् एवमुत्तरेष्वपि देवतोपसंहारेषु। क्रान्ते गमनहेतौ चरणे। **बले** सामर्थ्ये **हरमीश्वरम्**। **उत्सर्गे** पाय्विन्द्रिये **प्रजापतिं** ब्रह्माणम् ।। १२१ ।।

(३) **कुल्लूकः**। मनसि चन्द्रं श्रोत्रे दिशः पादेन्द्रियेविष्णुम्बले हरं वागिंद्रियेऽग्निं पाय्विन्द्रिये मित्रमुपस्थेन्द्रिये प्रजापतिं लीनमेकत्वेन भावयेत्। एवमाध्यात्मिकभूतादिकं लीनमेकत्वेन भावयित्वा योऽयमग्न्यादीनां दैहिकादिनियमो पञ्चकर्मणां फलं प्रति नियतं तत्सर्वं परमात्माधीनम्। तथा चैतस्य चक्षुरस्य प्रशासनेगोस्तर्पयति। तथा "भयादस्याग्निस्तपति भयात्तपति सूर्यः भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम इति ।। १२१ ।।

(४) **राघवानन्दः**। एवं स्थूलपृथिव्यादिपञ्चकस्य बाह्यस्य देहारम्भकेष्विन्द्रियपञ्चकेषु च लयमुक्त्वा इन्द्रियेषु तदधिष्ठातृदेवतालयमाह मनसीति। इन्द्रियानुग्राहकतया देवतासृष्टेस्तत्रैव लयः। चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायतेतिश्रुतः। क्रान्ते पादे। बले पाणौ हरिं इन्द्रं इति श्रुतेः। हरमिति प्रमादपाठः। अहरमिति वा छेदेन हरतुल्यतया हरिर्विष्णुस्तत्पर्याय इन्द्रः। **उत्सर्गे** पायौ **मित्रं** मित्राख्यं सूर्यं। **प्रजने** लिङ्गे **प्रजापतिं** दक्षम् ।। १२१ ।।

(५) **नन्दनः**। क्रान्ते पादे विष्णुं उपेन्द्रं हरिं इन्द्रं वाचि वागिन्द्रिये **उत्सर्गे** गुदे **प्रजनने** मेढ्रे **मत्र** निवेशयेदित्यनुषङ्गः ।। १२१ ।।

(६) **रामचन्द्रः**। **मनसि** इन्दुं। दिशः श्रोत्रे। क्रान्ते विष्णुं। **बले** सामर्थ्ये हरं। वाचि **अग्निं**। **मित्रं** मित्रदैवतं उत्सर्गे। **प्रजनने** उपस्थेन्द्रिये **प्रजापतिम्** ।। **१२१** ।।

(९) **भारुचिः**। एवं सर्वत्राध्यात्मादिषु व्यवस्थितेषु भिन्नासु देवतास्वभिन्नम् ।।१२१।।

**प्रशासितारं सर्वेषामणीयांसमणोरपि ।।**
**रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ।।१२२।।**

(१) **मेधातिथिः**। एवमेवाह। **प्रशासितारं** नियंतारम्। **सर्वेषां** ब्राह्मणादिशूद्रपर्यंतानाम्। योऽयमग्न्यादीनामौष्ण्यादिस्वभावनियमो यच्चादित्यादीनामनिशमन्तःपरमोजः जगत्भ्रमणप्रकाशनादिषु व्यापारो यश्च कर्मणां फलं प्रति नियमः स सर्वस्तस्मिन्नियंतरि सति। यदुक्तमे'तस्यैवाक्षरस्य प्रशासने गार्गी'त्यादिना। तथा 'तत्सूर्यस्तपति च यावद्वर्षति चंद्रमाः। भयादग्निश्च वायुश्च मृत्युर्धावति पंचमः' (कठोपनिषद्) इति। **अणीयांसमणोरपि** इति। यः कश्चिद्द्वारानिरतिशयवालाग्रशतभागादिस्ते तृतीयांशपरिमाणकत्वमसत्प्रतिपाद्यते। 'अस्थूलमनण्वित्या'दि (बृहदा. ३।८।८) सर्वधर्मप्रतिषेधात्, किं तर्हि? कुशाग्रीयाया बुद्धेर्गम्यत्वात्। एतदुक्तं भवति। यो नात्यन्तं कुशलो न च तदभ्यासे परिष्वक्तः ।। १२२।।

(२) **सर्वज्ञनारायणः**। एवमुपसंहार भावनया मनस एकाग्रत्वे सिद्धे यादृग्ध्येयं तदाह **प्रशासितारमिति**। **रुक्माभं** प्रकाशकं स्वप्नधीगम्यं स्वप्ने विषयाणां बाह्यानामात्मन्येवाध्यासादधिष्ठानतया सर्वत्र प्रकाशमानमहंकारावच्छिन्नम्। **पुरुषं** पुरि लिङ्गशरीरे निषण्णं

जीवात्मानं परंपरमात्मानं प्रशासितारं विश्वस्य परमेश्वरं अणोरतिसूक्ष्मादप्यणीयांसमतिसूक्ष्मं दुर्विज्ञानं विद्यात् भावयेदहं ब्रह्मास्मीति जीवात्मपरमात्मनोः प्रत्यक्षपरोक्षयोस्तदुपाधिद्वय-परित्यागेनैक्यं चिन्तयेदित्यर्थः ।। १२२ ।।

(३) **कुल्लूकः** । प्रशासितारं नियंतारं ब्रह्मादिस्तम्बपर्यन्तस्य चेतनाचेतनस्य जातेः योऽयमग्न्यादीनामौष्ण्यादिनियमो यश्चादित्यादीनां भ्रमणादिनियमो यच्च कर्मणां फलं प्रति-नियतमेतत्सर्वं परमात्माधीनं तथा चैतस्य वाऽक्षरस्य प्रशासनेगार्गीत्याद्युपनिषदः तथा भया-दस्याग्निस्तपति भयात्तपति सूर्यः ।। "भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम" इति । तथा अणोरणीयांसं सर्वात्मत्वात्तथा च श्रुतिः ।। बालाग्रशतभागस्य शतधाकल्पितस्य च ।। भागो जीवेति विज्ञेयः स चानन्त्याय कल्पते ।। रुक्माभ यद्यप्यशब्दमस्पर्शमरूपमव्ययमित्याद्युपनि-षदाक्तं परमात्मनो निषिद्धं तथाप्युपासनाविशेषे शुद्धसुवर्णाभम् अतएव य एषोऽन्तरादित्ये हिरण्मय इत्यादिछान्दोग्योपनिषत् स्वप्नधीगम्यं दृष्टान्तोयम् स्वप्नधीसदृशज्ञानग्राह्यं यथा स्वप्नधीः चक्षुरादिबाह्येन्द्रियोपरमे मनो मात्रेण जन्यत एवमात्मधीरपि । अतएव व्यासः ।। नैवासौ चक्षुषा ग्राह्योन च शिष्टैरपीन्द्रियैः । मनसा तु प्रसन्नेन गृह्यते सूक्ष्मदर्शिभिः ।। एवं विधं परात्मानमनुचिन्तयेत् ।। १२२ ।।

(४) **राघवानन्दः** । एवं पिण्डमात्रावशेषं विचिन्त्य तदप्यात्मतां नयेदित्याह प्रेति । योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः । सर्वभूतमयो चिन्त्यः स एव स्वयमुद्भावि-त्युपक्रमाधिष्ठानभूतमात्मानमनात्मनो निष्कृष्य विशिनष्टि प्रशासितारमिति । यत्तस्यैव प्रशासने गार्गिसूर्याचन्द्रमसौ विधृतौ तिष्ठत इति श्रुतेः । अनेन स्वभावाभावप्रधानपरमा-ण्वादिव्यावृत्तिस्तेषामचेतनत्वात् । अणीयांसं विष्णुत्वेऽपि निरवयवत्वात्सूक्ष्ममेतेन पृथिव्यादेः कारणत्वं निरस्तम् । रुक्माभं स्वप्रकाशं स्वयंज्योतिरिति श्रुतेः । रुक्माभं स्वप्रकाशं तेन नैयायिकमतस्य निरासः । स्वप्नधीगम्यं तत्त्वमस्यादिवाक्योत्थनिर्विकल्प-कधीग्राह्यमित्यनेन विज्ञानवादिमतं निरस्तं तेषां ग्राह्यग्राहकत्वाद्विज्ञानस्य । पूरुषं पूर्णं देशकालवस्तुपरिच्छेदरहितत्वात् । एवं प्रकृतिरदृष्टंभूतान्येव वा जगत्कारणमिति सांख्य-मीमांसकादिमतं निरस्तम् । अतएव परं अविद्यातत्कार्ययोः अक्षरात्परतः पर इति श्रुतेः । तमहं ब्रह्मेति विद्यात् तदात्मानमेवावेदहं ब्रह्मास्मीति श्रुतेः । ततः स्वयंभूर्भगवानव्यक्तो-व्यञ्जयन्निदमित्युपक्रमे कीर्तितं ब्रह्म सर्वैर्विनिर्मुक्तो ब्रह्मण्येवावतिष्ठत इति मध्येऽपि परामृष्टं प्रशासितारमित्यन्तेऽपि निर्दिष्टमत उपक्रमादिभिस्तत्रैव शास्त्रतात्पर्यमतः सर्वं तच्छेषभूतमिति । तथा च श्रुतिः पुरुषान्नपरं किंचित्सा काष्ठा सा परागतिरिति ।। १२२ ।।

(५) **नन्दनः** । एवमेताभिर्देवताभिर्न्यस्तशरीरस्य कर्तव्यमाह प्रशासितारं सर्वे-षामिति । सर्वेषामन्तः प्रविश्य प्रशासितारमणीयांसमतिसूक्ष्मं स्वप्नधीगम्यं प्रपंचस्वप्नबुद्धि-र्येषां ते स्वप्नधियस्तैरगम्यं नेयं परं पुरुषं परमात्मानं विद्यात् ध्यायेत् ।। १२२ ।।

(६) **रामचन्द्रः** । **प्रशासितारं** नियन्तारं **अणीयांसं** अतिसूक्ष्मं अणोरपि रुक्माभं प्रकाशकं स्वप्नधीगम्यं तं परं पुरुषं विद्यात् ।। १२२ ।।

(८) **गोविन्दराजः। प्रशासितारमिति।** ब्रह्मादिस्तंबपर्यन्तानां व्यवस्थाकारिणं —तथा चैतस्यैवाक्षरस्य विप्रशासने गार्गीगार्ग्यादि ब्राह्मणं परमाणोरपि सकाशात्सूक्ष्मतरमस्या मूर्तत्वात्सुवर्णवच्छुद्धरूपं दिसृतोर्मित्वाप्योऽशनायापिपासैस्तोदमोहजरामृत्युमभ्येत्यादि- ब्राह्मणम्। सुषुप्तादवस्थायां विज्ञानोपमेयस्वरूपं परमात्मानं विजानीयाद्दिदृक्षुः सुषुप्ता वस्थायां प्रत्यस्तमितसुखदुःखविशेषं क्षेत्रज्ञस्य रूपमेवं विधं सर्वदा परमात्मन इति स्वप्न- संदर्शनरहितावस्था सुषुप्तम् ॥ १२२ ॥

(९) **भारुचिः।** न संसार्यात्मानं क्षेत्रज्ञम्। तथा च सर्ववेदशास्त्रोपनिषदो योग- शास्त्राणि च। व्यासोऽपि चैवमाह 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः, यो लोकत्रय- माविश्य बिभर्त्यव्यय ईश्वरः' इति। **प्रशासितारं** सर्वास्ववस्थास्वधिकृतानां सर्वेषां ब्रह्मादीनामपि। तथा च ब्राह्मणम्—"एतस्य क्षरस्य प्रशासने, गार्गी'त्येवमाद्युदाहरणीयम्। **अणीयांसमणोरपीति** सौक्ष्म्यातिशयप्रदर्शनमेतत्परमात्मन इतरेभ्यः संसार्यात्मभ्यः। **रुक्माभमित्यनेन** शुद्धतास्योच्यते। तथा च रहस्यब्राह्मणं वाजसनेयिनामुपनिषदि,—यो आसे शोकमोहं जरा मृत्युमत्येति, एतं वैतमात्मानं विदित्वे'त्येवमादि**स्वप्नधीगम्यमिति** तद्रूपप्रतिपादनपरमिदम्। यथा हि सुषुप्त्यवस्थायां प्रत्यस्तमितकर्मक्लेशसुखदुःखविशेषं शान्तं संसार्यात्मतत्त्वस्यरूपम्, एवमिदं परमात्मनस्तत्त्वं मनसा स्वप्नधिया शक्यते सदैवरूपमधिगन्तुम्। यत इदमुच्यते, "स्वप्नधीगम्यं विद्यात्तु पुरुषं परम्' इतरपुरुषा- पेक्षयेदमस्य परत्वमुच्यते। तथा चोक्तमत्रासक्त(दध्यासोदाहरणम्,) कर्मणामङ्गदेवताभे- दाधिकारव्यवस्थितं च परमात्मानं सन्तम् ॥ १२२ ॥

**एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ॥**
**इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥ १२३ ॥**

(२) **सर्वज्ञनारायणः।** किंचिद्यद्यन्निरतिशयं वस्तु तदप्यसावेवेति तदुपासनमप्यस्यो- पासनमित्याह **एतमिति।** अग्निमुखत्वाद्देवानां तदुपलक्षणार्थमस्याभिधानम्। जगत्पालन- लब्धातिशयः सर्वेषां बलजीवनस्पन्दनाद्यसाधारणकर्मातिशयलब्धप्रकर्षः प्राणोऽयमेव। एषु च यत्र यत्र येषामतिप्रकर्षधीः ते तं तमेवैवं वदन्ति। यथा श्रुति इंद्रं मित्रं वरुणमग्नि- मित्यादि। अत्रोत्तरेणाग्निपदेनानन्तर्यमस्योच्यते। अपरे तत्त्वविदः। **ब्रह्म** विभुः **शाश्वतं** नित्यमाकाशादेरपि। नित्यानित्यज्ञा अन्य एवंवदन्तीत्युक्तिरत्रोपासकोपलक्षणार्था। तमेव प्रपञ्चरूपेण निष्प्रपञ्चरूपेण चोपासीतेत्यर्थः ॥ १२३ ॥

(३) **कुल्लूकः।** एतं च परमात्मानमग्नित्वेनैके याज्ञिका उपासते तथा तमेकमग्निं इत्यध्वर्यव उपासते। अन्ये पुनः स्रष्टृत्वात्स्रष्ट्राख्यप्रजापतिरूपतयोपासते एके पुनरैश्वर्य- योगादिन्द्ररूपतयोपासते। अपरे पुनः प्राणत्वेनोपासते सर्वाणि भूरादीनीमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहत इत्यादिश्रुतिदर्शनात्। अपरे पुनरपगतप्रपञ्चात्मकं सच्चिदानन्दस्वरूपं परमात्मानमुपासते। मूर्तामूर्तस्वरूपे च ब्रह्मणि सर्वा एवोपासना श्रुति- प्रसिद्धा भवन्ति ॥ १२३ ॥

(४) **राघवानन्दः**। अमुमेवात्मानमाश्रित्य विवदन्ते वादिन इत्याह **एतमिति**। एतमपरोक्षीभूतमप्यात्मानमविद्यावशात्त्रयीनिष्ठा अग्निं मन्यन्ते मनुं प्रजापतिमिति अन्ये धर्मशास्त्रनिष्ठाः इन्द्रं ईश्वरं नैयायिकाः। प्राणं हिरण्यगर्भमिति पातञ्जलाः! ब्रह्मेति वेदान्तिनः। शाश्वतं शश्वत् निरन्तरं अविद्यातत्कार्यरहिततयैकरूपेण वर्तमानं निष्क्रियं निष्कलं शान्तमिति श्रुतेः। शब्दमात्रे विप्रपत्तिरर्थस्त्वेकएवेति ॥ १२३ ॥

(५) **नन्दनः**। ननु अग्न्यादयोऽपि ध्येयत्वेन श्रूयन्ते तत्कथं परः पुमानेव ध्यानत्वेनोच्यते अत्राह **एतमेके वदन्त्यग्निमिति**। एतदुक्तं भवति तन्मन्त्रेष्वग्न्यादिशब्द प्रतिपाद्यः परः परः पुमानेव नान्य इति एवंवदता पुरुषसूक्तानुसारेण मन्त्रान्तराणि योजयितव्यानि न तदनुसारेण पुरुषसूक्तमित्युक्तं भवति। तदुक्तं महाभारते मोक्षधर्मे। इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते। ऋतं च सत्यञ्च प्रख्यातमृषिसिंहेन चिन्तितमिति ॥ १२३ ॥

(६) **रामचन्द्रः**। एतं अग्निं एके वदन्ति। अन्ये मनुं प्रजापतिम्। एके इन्द्रम्। अपरे प्राणं प्राणवायुम्। अपरे शाश्वतं ब्रह्म ॥ १२३ ॥

(८) **गोविन्दराजः**। **एतमिति**। एनं च परमात्मानं अग्नित्वेन याज्ञिका उपासते। तथा च तमेतमग्निरित्यध्वर्यव उपासत इति ब्राह्मणश्च यः पुनः सर्वत एव आत्मनोऽप्युच्चरन्तीति श्रैष्ठयत्वं श्रुतेर्मन्वाख्या प्रजापतिरूपतयोपासते इत्यादि श्रुतेः प्राणमात्मानमेतमुपासतेऽन्ये पुनरविनश्वरपरमात्मरूपतयोपासते एवं सर्वात्मकत्वात् परमात्मनः केचित्केनचिद्रूपेणैनमुपासते। तथा च तस्मादेनमेवं विप्रः यैरेव तैरुपासन्त इति ब्राह्मणम् ॥ १२३ ॥

(९) **भारुचिः**। एवमिदं सर्वदेवताधिकारेषु व्यवस्थितं ब्रह्म अग्न्यादिदेवतोपासकोऽपि प्राप्नोतीति। तथा चाग्निरहस्यब्राह्मणं वाजसनेयिकं "तमेतमग्निमित्यध्वर्यव उपासन्त' इत्येवमादि एतत्काण्डिकान्तेऽपि स्फुटमेव दर्शयत्येतमर्थम्, "तं यथा यथोपासते तत्तदेव भवति द्वैचैनां भूत्वा भवन्ति। तस्मादेतमेवं सर्वैरेवैतैरुपासीतेत्येवमादि। यतश्च ॥ १२३ ॥

**एष सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः ॥**
**जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत् ॥ १२४ ॥**

(२) **सर्वज्ञनारायणः**। **पञ्चभिर्मूर्तिभिः** पृथिव्यादिभूतैः। वृद्धिकार्यजनकत्वं स्थितिरिति यावत्। **संसारयति** भ्रामयति ॥ १२४ ॥

(३) **कुल्लूकः**। **एष** आत्मा सर्वान्प्राणिनः **पञ्चभिः** पृथिव्यादिभिर्महाभूतैः। शरीरारम्भकैः परिगृह्य पूर्वजन्मार्जितकर्मापेक्षयोत्पत्तिस्थितिविनाशै-रथादिचक्रवदसकृदपावर्तमानैरामोक्षात्संसारिणः करोति ॥ १२४ ॥

(४) **राघरानन्दः**। एष एवान्तर्यामित्वमनुभवतीत्याह **एष इति** पंचभिः अण्व्योमात्रादशार्धानामित्याद्युक्तेः **मूर्तिभिः** सच्चिच्छब्दवाच्यैः व्याप्यपटेषु तन्तुवत् जन्मवृद्धि-

क्षयैरुत्पत्तिस्थितिलयैः संसारयति । अनिशमावर्तयति नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृत इति श्रुतेरिति ।। १२४ ।।

(५) **नन्दनः** । एष परः पुरुष इति पंचभिर्मूर्तिभिर्महाभूताख्यादिभिः ।। १२४ ।।

(६) **रामचन्द्रः** । एष पुरुषः सर्वाणि भूतानि पञ्चभिर्मूर्तिभिः पृथिव्याऽदिपञ्चाभिः व्याप्य जन्मवृद्धिक्षयैः चक्रवत् **संसारयति** वर्तयति ।। १२४ ।।

(८) **गोविन्दराजः** । **एष इति** । **एष** परमात्मा सर्वान् प्राणिनः पञ्चभिः पृथिव्यादिभूतैः शरीरारंभकैः परिगृह्य प्राग्जन्मार्जितकर्मापेक्षयोत्पत्तिस्थितिनाशेन सकृदावर्तमानैः रथादिचक्रपदामोक्षान्नित्यं योजयति ।। १२४ ।।

(९) **भारुचिः** । महाभूताख्याभिः स्वकर्मक्लेशापेक्षया प्राणिनः तदुपभोगाय वा अश्वप्रशासिता सर्वेषामित्यवगम्यते ।। १२४ ।।

**एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना ।।**
**स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम् ।। १२५ ।।**

(१) **मेधातिथिः** । **ब्रह्माभ्येति** ब्रह्मभावमापद्यते । मैत्राद्यवभासेन रागद्वेषक्षयमनुवदति । अनेन चाविजातीयप्रत्ययान्तरितात्मैकत्वज्ञानमनुष्ठेयमाह । न हि विजातीयप्रत्ययोत्पत्तौ सर्वसमता भवति । अतश्चैतदुक्तं भवति । अहं ममेति त्यक्ताहंकारममकारस्य तदेकज्ञाननियततया निरतिशयपरमानंदरूपं ब्रह्म प्राप्नोति । अनिष्टनिवृत्तिः शास्त्रप्रदर्शिताभिप्रेतनियमस्य प्राप्तिश्च फलसिद्धिर्भवति इत्यर्थः ।। १२५ ।।

(२) **सर्वज्ञनारायणः** । एतादृगनुचिन्तनफलमाह **एवं य इति** । सर्वभूतेष्वेकत्वेना**त्मानं** परमात्मानं प्रयत्नेन **पश्यति** ध्यायति । सर्वं परमात्मा सर्वरूपत्वात् तत्समतामीशित्वादिगुणैरेत्य जीवन्मुक्तः पश्चाद्देहाधायककर्मापाये देहद्वयरूपोपाधित्यागात्तदेव ब्रह्माभ्येति नित्यानन्दप्रकाशत्वरूपेणावतिष्ठत इत्यर्थः ।। १२५ ।।

(३) **कुल्लूकः** । इदानीं मोक्षत्वेनोक्तसर्वधर्मश्रेष्ठतया सर्वत्र परमात्मदर्शनमनुष्ठेयत्वेनोपसंहरति **एवं यः सर्वभूतेष्विति** । सर्वभूतेष चात्मानमित्याद्युक्तप्रकारेण यः सर्वभूतेष्ववस्थितमात्मानमात्मना पश्यति स ब्रह्मसाक्षात्कारात्परं श्रेष्ठं पदं स्थानं ब्रह्म प्राप्नोति तत्रात्यन्तं लीयते मुक्तो भवतीत्यर्थः ।। १२५ ।।

(४) **राघवानन्दः** । मोक्षस्य परमपुरुषार्थत्वं प्रदर्शयन् तत्रैवास्य शास्त्रस्य तात्पर्यमाह **एवं य इति** । पदं पद्यते ज्ञानेनैवाप्यते पदं ब्रह्म तद्विष्णोः परमं पदमित्युक्तेः । आत्मन बुध्या अभ्येति तादात्म्यमाप्नोति ब्रह्मैव सन् ब्रह्माप्येतीति श्रुतेः ।। १२५ ।।

(५) **नन्दनः** । एवं प्रपञ्चितस्य परमात्मज्ञानस्य **फलमाह एवं यः सर्वभूतेष्विति** । **आत्मना** मनसा ब्रह्म परं पुरुषम् ।। १२४ ।।

(६) **रामचन्द्रः**। एवं यः सर्वभूतेषु आत्मनाऽऽत्मानं पश्यति सः सर्वसमतामेत्य सनातनं **ब्रह्माभ्येति** प्राप्नोति ।। १२५ ।।

इति श्रीरामचन्द्रभट्टविरचितायां मनुभावार्थदीपिकायां द्वादशोऽध्यायः ।। छ ।। ।। छ ।।
**चतुर्वेदसमं पुण्यमस्य शास्त्रस्य धारणात् । भूयो वाप्यतिरिच्येत पापनिर्यातनं महत् ।। १ ।।**

(८) **गोविन्दराजः**। **एवमिति**। एवं सर्वभूतेषु चात्मानमित्यादिनोक्ते प्रकारेण यः सर्वभूतेष्ववस्थितमात्मानमात्मना मन्यते स रागद्वेषहानिं प्राप्य परं स्थानं ब्रह्म प्राप्नोति मुच्यत इत्यर्थः ।। १२५ ।।

(९) **भारुचिः**। यथोक्तस्योपासनायोग्यस्योपसंहारमधुना प्रदर्शयन्निदं तत्फलमाचष्टे **एवमिति** व्यवस्थितं परं यथोक्तत्वमात्मना स्वात्मना दृष्ट्वा च यथोपदेशं यावज्जीवमुपास्ते । फलावधिरेष आगमोपपत्तिभ्यां विज्ञेयः । न फलार्थवादः ।। १२५ ।।

**इत्येतन्मानवं शास्त्रं भृगुप्रोक्तं पठन्द्विजः ।।**
**भवत्याचारवान्नित्यं यथेष्टां प्राप्नुयाद्गतिम् ।। १२६ ।।**

(१) **मेधातिथिः। इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां द्वादशोऽध्यायः ।। १२ ।।**
**इति**। शास्त्रसमाप्तिमाह । **पठन् भवत्याचारवान्**। अन्यो अध्याहार्य आचारः । यथा पठितशास्त्रात् शास्त्रानुष्ठानम् । एवंविधश्चेद्भवति **यथेष्टां** देवतादिलक्षणां **गतिम्**। ।। १२६ ।।

मान्या कापि मनुस्मृतिस्तदुचिता व्याख्या हि मेधातिथेः
सा लुप्तैव विधिर्वशात् क्वचिदपि प्राप्यं न यत् पुस्तकम् ।
क्षोणीन्द्रो मदनः सहारणसुतो देशान्तरादाहृतै-
र्जीर्णोद्धारमचीकरत्तत इतस्तत्पुस्तकैर्लेखितैः ।।

इति श्रीभट्टवीरस्वामिसूनुमेधातिथिविरचिते मनुभाष्ये द्वादशोऽध्यायः ।।

(२) **सर्वज्ञनारायणः**। इत्येतदिति शास्त्राध्ययनफलस्य पूर्वप्रक्रान्तस्योपसंहारः । **मानवं** मनुना प्रथमं प्राप्तं भृगुणा च प्रोक्तं प्रकर्षेण मुनिषु प्रकाशितमित्यर्थः ।। १२६ ।।

।। एतस्मिन्भृगुभारतीविवरणे कैर्नामनारोपितं चेतश्चेतयिता न कश्चन पुनस्तत्त्वस्य तत्राजनि । अस्माभिस्तु गुरूपदेशविशदप्रज्ञाप्रकर्षस्फुरद्धेतुर्हेतुगमैर्नमानवगिरां सर्वोऽप्यमाविष्कृतः ।। इति श्रीसर्वज्ञनारायकृतौ मन्वर्थनिबन्धे नैःश्रेयसकर्मसंकीर्तनं नाम द्वादशोध्यायः ।। १२ ।। **समाप्तमिदं मानवशास्त्रविवरणं सर्वज्ञप्रोक्तम् ।। शिवप्रदमस्तु ।।**

(३) **कुल्लूकः**। समाप्त्यर्थ इति शब्दः एतत्स्मृतिशास्त्रं भृगुणा प्रकर्षेणोक्तं द्विजातिः पठन्विहितानुष्ठाननिषिद्धवर्जनात्सदाचारवान्भवति यथाऽपेक्षितां च स्वर्गापवर्गादिरूपं गतिं प्राप्नुयादिति ।। १२६ ।।

सारासारवचः प्रपञ्चनविधौ मेधातिथेश्चातुरीस्तोकं वस्तु निगूढमल्पवचनाद्गोविन्दराजो जगौ ।। ग्रन्थेऽस्मिन् धरणीधरस्य बहुशः स्वातन्त्र्यमेतावता स्पष्टं मानवमर्थ-

तत्त्वमखिलं वक्तुं कृतोऽयं श्रमः ।। १ ।। प्रायो मुनिभिर्विवृतं कथयत्येषामनुस्मृतेरर्थम् ।। दशभिर्ग्रन्थसहस्रैः सप्तदशयुता कृता वृत्तिः ।। २ ।। सेयं मया मानवधर्मशास्त्रे व्यधायि वृत्तिर्विदुषां हिताय ।। दुर्बोधजातेर्दुरितक्षयाय भूयात्ततो मे जगतामधीशः ।। ३ ।। इति वारेन्द्रिनन्दनावासीयदिवाकरात्मजश्रीमत्कुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां मनुवृत्तौ द्वादशोऽध्यायः समाप्तः ।। **इति श्रीकुल्लूकभट्टविरचितामन्वर्थमुक्तावली समाप्ता ।। छ ।।**

(४) **राघवानन्दः ।** एतच्छास्त्रस्य पठनफलं ज्ञापयन्नुपसंहरति **इतीति ।** भृगुप्रोक्त-मृषिभ्यो भृगुणैव पाठितं यथेष्टाख्यां स्वर्गाख्यां मोक्षाख्यां वा धर्मविद्ब्रह्मविच्च ।। १२६ ।।

इयं कृतिः सरस्वत्याः पदकंजसमर्पिता ।। विदुषाचितकुमुदशशिनीवमनोरमा ।। मन्वर्थचंद्रिका ह्येषा राघवानंदनिर्मिता ।। करोतु विदुषां प्रीतिं विस्तरध्वांतवर्जनात् ।। **इति श्रीविश्वेश्वरभगवत्पादशिष्याद्वयभगवत्पादशिष्येण श्रीराघवानंदसरस्वत्या विरचित-मन्वर्थचंद्रिकायां द्वादशोऽध्यायः ।। १२ ।। श्रीरामचंद्राय नमः ।। छ ।।**

(५) **नन्दनः ।** शास्त्राध्ययनस्य फलमाह इत्येतं **मानवं शास्त्रमिति । यथेष्टां गतिमवाप्नुयाद्यथैषां** फलमवाप्नोति ।। १२६ ।।

**इति श्रीभारद्वाजगोत्रतिलकेन श्रीलक्ष्मणविचक्षणानुजेन नन्दनसूरिणा विरचिते मानव व्याख्याने द्वादशोऽध्यायः ।।**

**[मनुः स्वायंभुवो देवः सर्वशास्त्रार्थपारगः ।**
**तस्यास्य निर्गतं धर्मं विचार्य बहुविस्तरम् ।। २ ।।**
**ये पठन्ति द्विजाः केचित्सर्वपापोपशान्तिदम् ।**
**ते गच्छन्ति परं स्थानं ब्रह्मणः सद्म शाश्वतम् ।। ३ ।। ]‡**

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां द्वादशोऽध्यायः ।। १२ ।।
**इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां द्वादशोऽध्यायः ।।१२।।**
**समाप्तैषामनुसंहिता ।। छ ।।**

(८) **गोविन्दराजः । इतीति ।** इति समाप्तार्थमेतन्मनुकृतं शास्त्रं भृगुणा प्रकर्षे-णोक्तं द्विजातिः पठन् शास्त्रं विद्वान् विहितानुष्ठायी प्रतिषिद्धं वर्जयञ्च भवत्यतएवामुत्र भगवन्महेश्वरादिसायोज्यादिकामभिमतां प्राप्नुयादिति ।। १२६ ।।

**इति श्रीभट्टमाधवात्मजश्रीगोविन्दराजविरचितायां मनुटीकायां श्री मन्वाशयानु-सारिण्यां गुणत्रयविकर्मजातिनरकवदेप्रशंसास्वरूपनिर्णयो द्वादशोऽध्यायः समाप्तः ।।**

(९) **भारुचिः ।** एवमिदं परमात्मयोगप्रसंख्यानोपासनाफलमुपसंहृत्य शास्त्र-मधुनोपसंहरति—**इतीति ।**

शास्त्रेणहि प्रबोध्यमानोऽवश्याचारवद्भवत्यविनेयोऽपि कालान्तरेण, किं पुनर्विनेयः, येन हेतौ सत्यवश्यंभावि तत्फलं लोके दृष्टम् । तदनुज्ञानाच्चेष्टकामसंप्राप्तिः । **इति भारुचि कृतं मनुशास्त्रविवरणं समाप्तम् ।। १२६ ।।**

## मनुस्मृतिपद्यानुक्रमः।

## द

### य

---